# श्रीमद्भावमिश्रप्रणीतः

## भाव प्रकाशः पूर्व खण्डम्

गजमुखममरप्रवरं सिद्धिकरं विघ्नहर्तारम्
गुरुमवगमनयनप्रदमिष्टकरीमिष्टदेवतां वन्दे १

आयुर्वेदागमनं क्रमेण येनाभवद्भूमौ
प्रथमं लिखामि तमहं नानातन्त्राणि संदृश्य २

आयुर्हिताहितं व्याधेर्निदानं शमनं तथा
विद्यते यत्र विद्वद्भिः स आयुर्वेद उच्यते ३

अनेन पुरुषो यस्मादायुर्विन्दति वेत्ति च
तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः ४

विधाताऽथर्वसर्वस्वमायुर्वेदं प्रकाशयन्
स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम् ५

ततः प्रजापतिं दक्षं दक्षं सकलकर्मसु
विधिर्धीनीरधिः साङ्गमायुर्वेदमुपादिशत् ६

अथ दक्षः क्रियादक्षः स्ववैद्यौ वेदमायुषः
वेदयामास विद्वांसौ सूर्यांशौ सुरसत्तमौ ७

दक्षादधीत्य दस्रौ वितनुतः संहितां स्वीयाम्
सकलचिकित्सकलोकप्रतिपत्तिविवृद्धये धन्याम् ८

स्वयम्भुवः शिरश्छिन्नं भैरवेण रुषाऽथ तत्
अश्विभ्यां संहितं तस्मात्तौ जातौ यज्ञभागिनौ ९

देवासुररणे देवा दैत्यैर्ये सत्क्षताः कृताः
अक्षतास्ते कृताः सद्यो दस्राभ्यामद्भुतं महत् १०

वज्रिणोऽभूद् भुजस्तम्भः स दस्राभ्यां चिकित्सितः
सोमान्निपतितश्चन्द्रस्ताभ्यामेव सुखी कृतः ११

विशीर्णा दशनाः पूष्णो नेत्रे नष्टे भगस्य च
शशिनो राजयक्ष्माऽभूदश्विभ्यां ते चिकित्सिताः १२

भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः
वीर्यवर्णस्वरोपेतः कृतोऽश्विभ्यां पुनर्युवा १३

एतैश्चान्यैश्च बहुभिः कर्मभिर्भिषजां वरौ
बभूवतुर्भृशं पूज्याविन्द्रादीनां दिवौकसाम् १४

संदृश्य दस्रयोरिन्द्रः कर्माण्येतानि यत्नवान्
आयुर्वेदं निरुद्वेगं तौ ययाचे शचीपतिः १५

नासत्यौ सत्यसन्धेन शक्रेण किल याचितौ
आयुर्वेदं यथाऽधीतं ददतुः शतमन्यवे १६

नासत्याभ्यामधीत्यैव आयुर्वेदं शतक्रतुः
अध्यापयामास बहूनात्रेयप्रमुखान्मुनीन् १७

एकदा जगदालोक्य गदाकुलमितस्ततः
चिन्तयामास भगवानात्रेयो मुनिपुङ्गवः १८

किं करोमि क्व गच्छामि कथं लोका निरामयाः
भवन्ति सामयानेतान्न शक्नोमि निरीक्षितुम् १९

दयालुरहमत्यर्थं स्वभावो दुरतिक्रमः

एतेषां दुःखतो दुःखं ममापि हृदयेऽधिकम् २०

आयुर्वेदं पठिष्यामि नैरुज्याय शरीरिणाम्
इति निश्चित्य गतवानात्रेयस्त्रिदशालयम् २१

तत्र मन्दिरमिन्द्रस्य गत्वा शक्रं ददर्श सः
सिंहासनसमासीनं स्तूयमानं सुरर्षिभिः २२

भासयन्तं दिशो भासा भास्करप्रतिमं त्विषा
आयुर्वेदमहाचार्यं शिरोधार्यं दिवौकसाम् २३

शक्रस्तु तं निरीक्ष्यैवं त्यक्तसिंहासनः स्थितः
तमग्रे पूजयामास भृशं भूरितपःकृशम् २४

कुशलं परिपप्रच्छ तथागमनकारणम्
स मुनिर्वक्तुमारेभे निजागमनकारणम् २५

देवराज न जानासि दिव एव यतो भवान्
विधात्रा विहितो यत्नात्त्रिलोकीलोकपालकः २६

व्याधिभिर्व्यथिता लोकाः शोकाकुलितचेतसः
भूतले सन्ति सन्तापं तेषां हन्तुं कृपां कुरु २७

आयुर्वेदोपदेशं मे कुरु कारुण्यतो नृणाम्
तथेत्युक्त्वा सहस्राक्षोऽध्यापयामास तं मुनिम् २८

मुनीन्द्र इन्द्रतः साङ्गमायुर्वेदमधीत्य सः
अभिनन्द्य तमाशीर्भिराजगाम पुनर्महीम् २९

अथात्रेयो मुनिश्रेष्ठो भगवान्करुणाकरः
स्वनाम्ना संहितां चक्रे नरवर्गानुकम्पया ३०

ततोऽग्निवेशं भेडञ्च जातूकर्णं पराशरम्
क्षीरपाणिञ्च हारीतमायुर्वेदमपाठयत् ३१

तन्त्रस्य कर्त्ता प्रथममग्निवेशोऽभवत्पुरा
ततो भेडादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ३२

श्रावयामासुरात्रेयं मुनिवृन्देन वन्दितम्
श्रुत्वा च तानि तन्त्राणि हृष्टोऽभूदत्रिनन्दनः ३३

यथावत्सूत्रितं दृष्ट्वा प्रहृष्टा मुनयोऽभवन्
दिवि देवर्षयो देवाः श्रुत्वा साध्विति चाब्रुवन् ३४

एकदा हिमवत्पार्श्वे दैवादागत्य सङ्गताः
मुनयो बहवस्तेषां नामभिः कथयाम्यहम् ३५

भरद्वाजो मुनिवरः प्रथमं समुपागतः
ततोऽङ्गिरास्ततो गर्गो मरीचिर्भृगुभार्गवौ ३६

पुलस्त्योऽगस्तिरसितो वसिष्ठः सपराशरः
हारीतो गौतमः सांख्यो मैत्रेयश्च्यवनोऽपि च ३७

जमदग्निश्च गार्ग्यश्च कश्यपः काश्यपोऽपि च
नारदो वामदेवश्च मार्कण्डेयः कपिञ्जलः ३८

शाण्डिल्यः सहकौण्डिन्यः शाकुनेयश्चशौनकः
आश्वलायनसांकृत्यौ विश्वामित्रः परीक्षकः ३९

देवलो गालवो धौम्यः काप्यकात्यायनावुभौ
काङ्कायनो वैजपेयः कुशिको बादरायणः ४०

हिरण्याक्षश्च लौगाक्षिः शरलोमा च गोभिलः

वैखानसा वालखिल्यास्तथैवान्ये महर्षयः ४१

ब्रह्मज्ञानस्य निधयो यमस्य नियमस्य च
तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः ४२

सुखोपविष्टास्ते तत्र सर्वे चक्रुः कथामिमाम्
धर्मार्थकाममोक्षाणां मूलमुक्तं कलेवरम्
तच्च सर्वार्थसंसिद्ध्यै भवेद्यदि निरामयम् ४३

तपः स्वाध्यायधर्माणां ब्रह्मचर्यव्रतायुषाम्
हर्त्तारः प्रसृता रोगा यत्र तत्र च सर्वशः ४४

रोगाः कार्श्यकरा बलक्षयकरा देहस्य चेष्टाहरा
दृष्टा इन्द्रियशक्तिसङ्क्षयकराः सर्वाङ्गपीडाकराः
धर्मार्थाखिलकाममुक्तिषु महाविघ्नस्वरूपा बलात्
प्राणानाशु हरन्ति सन्ति यदि ते क्षेमं कुतः प्राणिनाम् ४५

तत्तेषां प्रशमाय कश्चन विधिश्चिन्त्यो भवद्भिर्बुधै-
र्योग्यैरित्यभिधाय संसदि भरद्वाजं मुनिं तेऽब्रुवन्
त्वं योग्यो भगवन् सहस्रनयनं याचस्व लब्धं क्रमा-
दायुर्वेदमधीत्य यं गदभयान्मुक्ता भवामो वयम् ४६

इत्थं स मुनिभिर्योग्यैः प्रार्थितो विनयान्वितैः
भरद्वाजो मुनिश्रेष्ठो जगाम त्रिदशालयम् ४७

तत्रेन्द्रभवनं गत्वा सुरर्षिगणमध्यगम्
दृष्टवान् वृत्रहन्तारं दीप्यमानमिवानलम् ४८

दृष्ट्वैव स मुनिं प्राह भगवान् मघवा मुदा
धर्मज्ञ स्वागतं तेऽथ मुनिं तं समपूजयत् ४९

सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम्
ऋषीणां वचनं सम्यक् श्रावयामास तत्त्वतः ५०

व्याधयो हि समुत्पन्नाः सर्वप्राणिभयङ्कराः
तेषां प्रशमनोपायं यथावद्वक्तुमर्हसि ५१

अपाठयन्मुनिं साङ्गमायुर्वेदं शतक्रतुः
जीवेद्वर्षसहस्राणि देही नीरुङ् निशम्य यम् ५२

सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामुनिः
यथावदचिरात्सर्वं बुबुधे तन्मना मुनिः ५३

तेनायुः सुचिरं लेभे भरद्वाजो निरामयम्
अन्यानपि मुनींश्चक्रे नीरुजः सुचिरायुषः ५४

तत्तन्त्रजनितज्ञानचक्षुषा ऋषयोऽखिलाः
गुणान्द्रव्याणि कर्माणि दृष्ट्वा तद्विधिमाश्रिताः ५५

आरोग्यं लेभिरे दीर्घमायुश्च सुखसंयुतम्
आयुर्वेदोक्तविधिनाऽन्येऽपि स्युर्मुनयो यथा ५६

यदा मत्स्यावतारेण हरिणा वेद उद्धृतः
तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् ५७

अथर्वान्तर्गतं सम्यगायुर्वेदं च लब्धवान्
एकदा स महीवृत्तं द्रष्टुं चर इवागतः ५८

तत्रलोकान् गदैर्ग्रस्तान् व्यथया परिपीडितान्
स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ५९

तान्दृष्ट्वातिदयायुक्तस्तेषां दुःखेन दुःखितः

अनन्तश्चिन्तयामास रोगोपशमकारणम् ६०

सञ्चिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह
प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः ६१

यतश्चर इवायातो न ज्ञातः केनचिद्यतः
तस्माच्चरकनाम्नासौ ख्यातश्च क्षितिमण्डले ६२

स भाति चरकाचार्यो देवाचार्यो यथा दिवि
सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः ६३

आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन्
मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् ६४

तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता
चरकेणात्मनो नाम्ना ग्रन्थोऽय चरकः कृतः ६५

एकदा देवराजस्य दृष्टिर्निपतिता भुवि
तत्र तेन नरा दृष्टा व्याधिभिर्भृशपीडिताः ६६

तान्दृष्ट्वा हृदयं तस्य दयया परिपीडितम्
दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह ६७

धन्वन्तरे सुरश्रेष्ठ  भगवन् किञ्चिदुच्यते
योग्यो भवसि भूतानामुपकारपरो भव ६८

उपकाराय लोकानां केन किं न कृतं पुरा
त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान् ६९

तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव
प्रतीकाराय रोगाणामायुर्वेदं प्रकाशय ७०

इत्युक्त्वा सुरशार्दूलः सर्वभूतहितेप्सया
समस्तमायुषो वेदं धन्वन्तरिमुपादिशत् ७१

अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा
आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि ७२

नाम्ना तु सोऽभवत्ख्यातो दिवोदास इति क्षितौ
बाल एव विरक्तोऽभूच्चचार सुमहत्तपः ७३

यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम्
ततो धन्वन्तरिर्लोकैः काशीराजोऽभिधीयते ७४

हिताय देहिनां स्वीया संहिता विहिताऽमुना
अथ विद्यार्थिनो लोकान्संहितां तामपाठयत् ७५

अथ ज्ञानदृशा विश्वामित्रप्रभृतयोऽविदन्
अयं धन्वन्तरिः काश्यां काशिराजोऽयमुच्यते ७६

विश्वामित्रो मुनिस्तेषु पुत्रं सुश्रुतमुक्तवान्
वत्स वाराणसीं गच्छ त्वं विश्वेश्वरवल्लभाम् ७७

तत्र नाम्ना दिवोदासः काशिराजोऽस्ति बाहुजः
स हि धन्वन्तरिः साक्षादायुर्वेदविदां वरः ७८

आयुर्वेदं पठस्व त्वं लोकोपकृतिहेतवे
सर्वप्राणिदया तीर्थमुपकारो महामखः ७९

पितुर्वचनमाकर्ण्य सुश्रुतः काशिकां गतः
तेन सार्द्धं समध्येतुं मुनिसूनुशतं ययौ ८०

अथ धन्वन्तरिं सर्वे वानप्रस्थाश्रमे स्थितम्

भगवन्तं सुरश्रेष्ठं मुनिभिर्बहुभिः स्तुतम् ८१

काशिराजं दिवोदासं तेऽपश्यन्विनयान्विताः
स्वागतं च तदा चाह दिवोदासो यशोधनः ८२

कुशलं परिपप्रच्छ तथागमनकारणम्
ततस्ते सुश्रुतद्वारा कथयामासुरुत्तरम् ८३

भगवन्मानवान्दृष्ट्वा व्याधिभिः परिपीडितान्
क्रन्दतो म्रियमाणांश्च जातास्माकं हृदि व्यथा ८४

आमयानां शमोपायं विज्ञातुं वयमागताः
आयुर्वेदं भवानस्मानध्यापयतु यत्नतः ८५

अङ्गीकृत्य वचस्तेषां नृपतिस्तानुपादिशत्
व्याख्यातं तेन ते यत्नाज्जगृहुर्मुनयो मुदा ८६

काशिराजं जयाशीर्भिरभिनन्द्य मुदान्विताः
सुश्रुताद्याः सुसिद्धार्था जग्मुर्गेहं स्वकं स्वकम् ८७

प्रथमं सुश्रुतस्तेषु स्वतन्त्रं कृतवान्स्फुटम्
सुश्रुतस्य सखायोऽपि पृथक्तन्त्राणि तेनिरे ८८

सुश्रुतेन कृतं तन्त्रं सुश्रुतं बहुभिर्यतः
तस्मात्तत्सुश्रुतं नाम्ना विख्यातं क्षितिमण्डले ८९

इति भावप्रकाशे पूर्वखण्डे आयुर्वेदप्रवक्तृप्रादुर्भावप्रकरणं समाप्तम् १

अथ सृष्टिप्रकरणं ग्रन्थारम्भश्च २

आयुर्वेदाब्धिमध्यादतिमतिमुनयो योगरत्नानि यत्नाल्लब्ध्वा स्वे स्वे निबन्धे दधुरखिलजनव्याधिविध्वंसनाय ।
तत्तद्ग्रन्थाद् गृहीतैः सुवचनमणिभिर्भावमिश्रैश्चिकित्साशास्त्रे जाड्यान्धकारं

प्रशमयितुमिमं संविधत्ते प्रकाशम् १

श्रीपतिपदप्रसादादाशीर्भिर्भूमिदेवानाम्
भावप्रकाशनाम्ना ग्रन्थोऽयं पठ्यतां सर्वैः २

आत्मा ज्योतिश्चिदानन्दरूपो नित्यश्च निःस्पृहः
निर्गुणः प्रकृतेर्योगात्सगुणः कुरुते जगत् ३

सत्त्वं रजस्तमश्चेति गुणास्ते प्रकृतेः समाः
सा जडापि जगत्कर्त्री परमात्मचिदव्ययात् ४

प्रधानं प्रकृतिः शक्तिर्नित्या चाविकृतिस्तथा
एतानि तस्या नामानि पुरुषं या समाश्रिता ५

सत्त्वं रजस्तमस्त्रीणि विज्ञेयाः प्रकृतेर्गुणाः
तैश्च युक्तस्य चित्तस्य कथयाम्यखिलान् गुणान् ६

आस्तिक्यं प्रविभज्य भोजनमनुत्तापश्च तथ्यं वचो
मेधाबुद्धिधृतिक्षमाश्च करुणा ज्ञानं च निर्दम्भता
कर्मानिन्दितमस्पृहं च विनयो धर्मः सदैवादरा-
देते सत्त्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः ७

क्रोधस्ताडनशीलता च बहुलं दुःखं सुखेच्छाऽधिका-
दम्भः कामुकताप्यलीकवचनं चाधीरताहङ्कृतिः
ऐश्वर्यादभिमानितातिशयितानन्दोऽधिकश्चाटनं
प्रख्याता हि रजोगुणेन सहितस्यैते गुणाश्चेतसः ८

नास्तिक्यं सुविषण्णतातिशयितालस्यं च दुष्टा मतिः
प्रीतिर्निन्दितकर्मशर्मणि सदा निद्रालुताहर्निशम्
अज्ञानं किल सर्वतोऽपि सततं क्रोधान्धता मूढता
प्रख्याता हि तमोगुणेन सहितस्यैते गुणाश्चेतसः ९

तत्र प्रभूतसत्त्वस्तु सात्त्विकः पुरुषः स्मृतः
राजसस्तामसश्चैव त्रिविधस्तेन मानवः १०

ततोऽभवन्महत्तत्त्वं बुद्धितत्त्वापराभिधम्
त्रिगुणं सत्त्वबहुलं निर्मलं स्फटिकोपमम्
चिच्छायाप्राप्तचैतन्यं तदिच्छामयमीरितम् ११

महतस्त्रिगुणाज्जातोऽहङ्कारस्त्रिगुणान्वितः
सात्त्विको राजसश्चापि तामसश्चेति स त्रिधा १२

जातानि सात्त्विकात्तस्मादिन्द्रियाणि सराजसात्
तानि श्रोत्रं त्वचो नेत्रं रसना नासिका तथा १३

वाग्घस्तचरणोपस्थगुदान्येकादशं मनः
पञ्च बुद्धीन्द्रियाण्याहुः प्राक्तनानीतराणि च १४

कर्मेन्द्रियाणि पञ्चैव कथयन्ति विपश्चितः १५

मनो बुद्धीन्द्रियं विज्ञैः कर्मेन्द्रियमपि स्मृतम्
मनोऽधिष्ठितमेवेदमिन्द्रियं यत्प्रवर्त्तते १६

शब्दः स्पर्शश्च रूपश्च रसो गन्धो ह्यनुक्रमात्
बुद्धीन्द्रियाणां विषयाः समाख्याता महर्षिभिः १७

वाच्यं ग्राह्यञ्च गन्तव्यमानन्दं त्याज्यमेव च
कर्मेन्द्रियाणां विषया ज्ञातव्य विषयो हृदः १८

तामसादप्यहङ्कारस्तन्मात्राणि सराजसात्
पञ्चाल्पसत्त्वसम्बन्धात्तल्लिङ्गानि भवन्ति हि १९

शब्दतन्मात्रकं स्पर्शतन्मात्रं रूपमात्रकम्

रसतन्मात्रकं गन्धतन्मात्रमिति तानि तु २०

तन्मात्रेभ्यो वियद्वायुर्वह्निर्वारि वसुन्धरा
एतानि पञ्च जायन्ते महाभूतानि तत्क्रमात् २१

शब्दः श्रोत्रेन्द्रियं वापि च्छिद्राणि च विविक्तता
वियतः कथिता एते गुणागुणविचारिभिः २२

स्पर्शस्त्वगिन्द्रियञ्चापि लघुता स्पन्दनं तनोः
चेष्टा सर्वशरीरस्य वायोरेते गुणाः स्मृताः २३

रूपं नेत्रेन्द्रियं पाकः सन्तापस्तीक्ष्णता तथा
वर्णो भ्राजिष्णुताऽमर्षः शौर्यं वह्नेर्गुणा अमी २४

रसो रसेन्द्रियं शैत्यं स्नेहश्च गुरुता तथा
सर्वद्रवसमूहश्च शुक्रं वारिगुणाः स्मृताः २५

गन्धो घ्राणेन्द्रियं चापि काठिन्यं गौरवं तथा
वसुन्धरागुणा एते गदिता गुणवेदिभिः २६

शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तत्क्रमात्
तन्मात्राणां विशेषाः स्युः स्थूलभावमुपागताः २७

प्रकृतेः कारणायोगान्मता प्रकृतिरेव सा
महत्तत्त्वादयः सप्त शक्तेर्विकृतयः स्मृताः २८

इन्द्रियाणां च भूतानां कारणत्वान्महर्षिभिः
महत्तत्त्वादयः सप्त प्रोक्ताः प्रकृतयोऽपि च २९

दशेन्द्रियाणि चित्तञ्च महाभूतानि पञ्च च
एतानि सृष्टिं जानद्भिर्विकाराः षोडश स्मृताः ३०

एवं चतुर्विंशतिभिस्तत्त्वैः सिद्धे वपुर्गृहे
जीवात्मनियतेर्निघ्नो वसति स्वान्तदूतवान् ३१

स देही कथ्यते पापपुण्यदुःखसुखादिभिः
व्याप्तो बद्धश्च मनसा कृत्रिमैः कर्मबन्धनैः ३२

इच्छाद्वेषसुखासुखानि विषयज्ञानं प्रयत्नो मनः
सङ्कल्पश्च विचारणा स्मृतिरथो बुद्धिः कलाविज्ञता
प्राणस्योपरियापनं गुदवशाद्वायोरधः प्रेरणं
नेत्रोन्मेषनिमेषकृत्यकरणोत्साहाश्च जीवे गुणाः ३३

इति श्री मिश्रलटकनतनय श्रीमन्मिश्रभावविरचिते भावप्रकाशे
सृष्टिप्रकरणं समाप्तम् २

अथ गर्भप्रकरणम् ३

द्वादशाद्वत्सरादूर्ध्वमापञ्चाशत्समाः स्त्रियः
मासि मासि भगद्वारा प्रकृत्यैवार्तवं स्रवेत् १

आर्तवस्रावदिवसादृतुः षोडश रात्रयः
गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः २

आर्तवस्रावदिवसादहिंसा ब्रह्मचारिणी
शयीत दर्भशय्यायां पश्येदपि पतिं न च ३

करे शरावे पर्णे वा हविष्यं त्र्यहमाहरेत्
अश्रुपातं नखच्छेदमभ्यङ्गमनुलेपनम् ४

नेत्रयोरञ्जनं स्नानं दिवास्वापं प्रधावनम्
अत्युच्चशब्दश्रवणं हसनं बहुभाषणम्
आयासं भूमिखननं प्रवातञ्च विवर्जयेत् ५

अज्ञानाद्वा प्रमादाद्वा लोभाद्वा दैवतश्च वा ६

सा चेत्कुर्यान्निषिद्धानि गर्भो दोषांस्तदाऽप्नुयात्
एतस्या रोदनाद्गर्भो भवेद्विकृतलोचनः ७

नखच्छेदेन कुनखी कुष्ठी त्वभ्यङ्गतो भवेत्
अनुलेपात्तथा स्नानाद् दुःखशीलोऽञ्जनाददृक् ८

स्वापशीलो दिवास्वापाच्चञ्चलः स्यात्प्रधावनात्
अत्युच्चशब्दश्रवणाद्बधिरः खलु जायते ९

तालुदन्तौष्ठजिह्वासु श्यावो हसनतो भवेत्
प्रलापी भूरिकथनादुन्मत्तस्तु परिश्रमात्
स्खलते भूमिखननादुन्मत्तो वातसेवनात् १०

पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना
तादृशं जनयेत्पुत्रं ततः पश्येत्पतिं प्रियम् ११

प्रवहत्सलिले क्षिप्तं द्रव्यं गच्छत्यधो यथा
तथा वहति रक्ते तु क्षिप्तं वीर्यमधो व्रजेत् १२

आयुः क्षयभयाद्भर्त्ता प्रथमे दिवसे स्त्रियम्
द्वितीयेऽपि दिने रत्यै त्यजेदृतुमतीं तथा १३

तत्र यश्चाहितो गर्भो जायमानो न जीवति
आहितो यस्तृतीयेऽह्नि स्वल्पायुर्विकलाङ्गकः १४

अतश्चतुर्थी षष्ठी स्यादष्टमी दशमी तथा
द्वादशी वापि या रात्रिस्तस्यां तां विधिना भजेत् १५

अत्रोत्तरोत्तरं विद्यादायुरारोग्यमेव च

प्रजासौभाग्यमैश्वर्यं बलञ्चाभिगमात् फलम् १६

मनोभवागारमुखेऽबलानां तिस्रो भवन्ति प्रमदाजनानाम्
समीरणा चन्द्रमसी च गौरी विशेषमासामुपवर्णयामि १७

प्रधानभूता मदनातपत्रे समीरणा नाम विशेषनाडी
तस्या मुखे यत् पतितं तु वीर्यं तन्निष्फलं स्यादिति चन्द्रमौलिः १८

या चापरा चान्द्रमसी च नाडी कन्दर्पगेहे भवति प्रधाना
सा सुन्दरी योषितमेव सूते साध्या भवेदल्परतोत्सवेषु १९

गौरीति नाडी यदुपस्थगर्भे प्रधानभूता भवति स्वभावात्
पुत्रं प्रसूते बहुधाङ्गना सा कष्टोपभोग्या सुरतोपविष्टा २०

युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु २१

स्नातश्चन्दनलिप्ताङ्गः सुगन्धसुमनोर्चितः
भुक्तवृष्यः सुवसनः सुवेशः समलङ्कृतः २२

ताम्बूलवदनस्तस्यामनुरक्तोऽधिकस्मरः
पुत्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे २३

अत्याशितोऽधृतिः क्षुद्वान् सव्यथाङ्गः पिपासितः
बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् २४

पुरुषस्य गुणैर्युक्ता विहिता न्यूनभोजना
नारी ऋतुमती पुंसा सङ्गच्छेत्तु सुतार्थिनी २५

रजस्वला व्याधिमती विशेषाद्योनिरोगिणी
वयोऽधिका च निष्कामा मलिना गर्भिणी तथा
एतासां सङ्गमात्पुंसां वैगुण्यानि भवन्ति हि २६

कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः
गर्भः सञ्जायते नार्याः स जातो बाल उच्यते २७

दम्पत्योः कुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः
यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितमिति २८

ऋतौ स्त्रीपुंसयोर्योगे मकरध्वजवेगतः
मेढ्रयोन्यभिसङ्घर्षाच्छरीरोष्मानिलाहतः २९

पुंसः सर्वशरीरस्थं रेतो द्रावयतेऽथ तत्
वायुर्मेहनमार्गेण पातयत्यङ्गनाभगे ३०

तत् संस्रुत्य व्यात्तमुखं याति गर्भाशयं प्रति
तत्र शुक्रवदायातेनार्त्तवेन युतं भवेत् ३१

शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्तिता
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ३२

यथा रोहितमत्स्यस्य मुखं भवति रूपतः
तत्संस्थानां तथा रूपां गर्भशय्यां विदुर्बुधाः ३३

शुक्रार्त्तवसमाश्लेषो यदैव खलु जायते
जीवस्तदैव विशति युक्तः शुक्रार्त्तवान्तरः ३४

सूर्यांशोः सूर्यमणित उभयस्माद्युताद्यथा
वह्निः सञ्जायते जीवस्तथा शुक्रार्तवाद्युतात् ३५

आत्मानादिरनन्तश्चाव्यक्तो वक्तुं न शक्यते
चिदानन्दैकरूपोऽयं मनसापि न गम्यते ३६

एवम्भूतोऽपि जगतो भाविनी बलवत्तया

अविद्यास्वीकृते कर्मवशो गर्भे विशत्यसौ ३७

स एव वेत्ता रसनो द्रष्टा घ्राता स्पृशत्यसौ
श्रोता वक्ता च कर्त्ता च गन्ता रन्तोत्सृजत्यपि ३८

दिने व्यतीते नियतं संकुचत्यम्बुजं यथा
ऋतौ व्यतीते नार्यास्तु योनिः संव्रियते तथा ३९

बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ
यमावित्यभिधीयेते धर्मेतरपुरःसरौ ४०

आधिक्ये रेतसः पुत्रः कन्या स्यादार्त्तवेऽधिके
नपुंसकं तयोः साम्ये यथेच्छा पारमेश्वरी ४१

एवं तामभिसङ्गम्य पुनर्मासाद्व्रजेदसौ ४१

शुक्रशोणितयोर्योनेरस्रावोऽथ श्रमोद्भवः
सक्थिसादः पिपासा च ग्लानिः स्फूर्त्तिर्भगे भवेत् ४२

स्तनयोर्मुखकार्ष्ण्यं स्याद्रोमराज्युद्गमस्तथा
अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः ४३

छर्दयेत्पथ्यभुक्चापि गन्धादुद्विजते शुभात्
प्रसेकः सदनं चैव गर्भिण्या लिङ्गमुच्यते ४४

पुत्रगर्भयुतायास्तु नार्या मासि द्वितीयके
गर्भो गर्भाशये लक्ष्यः पिण्डाकारोऽपरं शृणु ४५

दक्षिणाक्षिमहत्वं स्यात् प्राक्क्षीरं दक्षिणे स्तने
दक्षिणोरुः सुपुष्टः स्यात्प्रसन्नमुखवर्णता ४६

पुन्नामधेयद्रव्येषु स्वप्नेष्वपि मनोरथः

आम्रादिफलमाप्नोति स्वप्नेषु कमलादि च ४७

कन्या गर्भवती गर्भे पेशी मासि द्वितीयके
पुत्रगर्भस्य लिङ्गानि विपरीतानि चेक्षते ४८

नपुंसकं यदा गर्भे भवेद् गर्भोऽबुदाकृतिः
उन्नते भवतः पार्श्वे पुरस्तादुदरं महत् ४९

आसेक्यश्च सुगन्धी च कुम्भीकश्चेष्यर्यकस्तथा
अमी सशुक्रा बोद्धव्या अशुक्रः षण्ढसंज्ञकः ५०

पित्रोस्तु स्वल्पवीर्यत्वादासेक्यः पुरुषो भवेत्
स शुक्रं प्राश्य लभते ध्वजोन्नतिमसंशयम् ५१

यः पूतियोनौ जायेत स हि सौगन्धिको भवेत्
स योनिशेफसोर्गन्धमाघ्राय लभते बलम् ५२

स्वे गुदेऽब्रह्मचर्याद्यः स्त्रीषु पुंवत् प्रवर्त्तते
स कुम्भीक इति ज्ञेयो गुदयोनिस्तु स स्मृतः ५३

दृष्ट्वा व्यवायमन्येषां व्यावाये यः प्रवर्त्तते
ईर्ष्यकः स तु विज्ञेयो दृष्टियोनिस्तु स स्मृतः ५४

यो भार्यायामृतौ मोहादङ्गनेव प्रवर्त्तते
तत्र स्त्रीचेष्टिताकारो जायते षण्ढसंज्ञकः ५५

ऋतौ ऋतौ पुरुषवत् प्रवर्त्तेताङ्गना यदि
तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता ५६

यदा नार्यावुपेयातां वृषस्यन्त्यौ कथञ्चन
मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते ५७

ऋतुस्नाता तु या नारी स्वप्ने मैथुनमाचरेत्
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ५८

मासि मासिप्रवर्द्धेत स गर्भो गर्भलक्षणः
कललं जायते तस्य वर्जितं पैतृकैर्गुणैः ५९

सर्पवृश्चिककूष्माण्डाकृतयो विकृताश्च ये
गर्भास्ते योषितस्ताश्च ज्ञेयाः पापकृतो भृशम् ६०

गर्भो वातप्रकोपेण दोहदे चापमानिते
भवेत् कुब्जः कुणिः पङ्गुर्मूको मिन्मिन एव च ६१

आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ
स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ६२

गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकः
प्रकृतिः सविकारा च तत्सर्वं गर्भसंज्ञकम् ६३

कालेन वर्द्धितो गर्भो यद्यङ्गोपाङ्गसंयुतः
भवेत्तदा स मुनिभिः शरीरीति निगद्यते ६४

तस्य त्वङ्गान्युपाङ्गानि ज्ञात्वा सुश्रुतशास्त्रतः
मस्तकादभिधीयन्ते शिष्याः शृणुत यत्नतः ६५

आद्यमङ्गं शिरः प्रोक्तं तदुपाङ्गानि कुन्तलाः
तस्यान्तर्मस्तुलुङ्गं च ललाटं भ्रूयुगन्तथा ६६

नेत्रद्वयं तयोरन्तर्वर्त्तेते द्वे कनीनिके
दृष्टिद्वयं कृष्णगोलौ श्वेतभागौ च वर्त्मनी ६७

पक्ष्माण्यपाङ्गौ शङ्खौ च कर्णौ तच्छष्कुलीद्वयम्

पालिद्वयं कपोलौ च नासिका च प्रकीर्त्तिता ६८

ओष्ठाधरौ च सृक्किण्यौ मुख तालु हनुद्वयम्
दन्ताश्च दन्तवेष्टश्च रसना चिबुकङ्गलः ६९

द्वितीयमङ्गं ग्रीवा तु यया मूर्द्धा विधार्यते
तृतीयं बाहुयुगलं तदुपाङ्गान्यथ ब्रुवे ७०

तत्रोपरि मतौ स्कन्धौ प्रगण्डौ भवतस्त्वधः
कफोणियुग्मं तदधं प्रकोष्ठयुगलन्तथा ७१

मणिबन्धौ तले हस्तौ तयोश्चाङ्गुलयो दश
नखाश्च दश ते स्थाप्या दशच्छेद्याःप्रकीर्त्तिताः ७२

चतुर्थमङ्गं वक्षस्तु तदुपाङ्गान्यथ ब्रुवे
स्तनौ पुंसस्तथा नार्या विशेष उभयोरयम् ७३

यौवनागमने नार्याः पीवरौ भवतः स्तनौ
गर्भवत्या प्रसूतायास्तावेव क्षीरपूरितौ ७४

हृदयं पुण्डरीकेण सदृशं स्यादधोमुखम्
जाग्रतस्तद्विकसति स्वपतस्तु निमीलति ७५

आशयस्तत्तु जीवस्य चेतनास्थानमुत्तमम्
अतस्तस्मिंस्तमोव्याप्ते प्राणिनः प्रस्वपन्ति हि ७६

कक्षयोर्वक्षसः सन्धी जत्रुणी समुदाहृते
कक्षे उभे समाख्याते तयोः स्यातां च वङ्क्षणौ ७७

उदरं पञ्चमञ्चाङ्गं षष्ठं पार्श्वद्वयं मतम्
सपृष्ठवंशं पृष्ठं तु समस्तं सप्तमं स्मृतम् ७८

उपाङ्गानि च कथ्यन्ते तानि जानीहि यत्नतः
शोणिताज्जायते प्लीहा वामतो हृदयादधः ७९

रक्तवाहिशिराणां स मूलं ख्यातो महर्षिभिः
हृदयाद्वामतोऽधश्च फुप्फुसो रक्तफेनजः ८०

अधो दक्षिणतश्चापि हृदयाद्यकृतः स्थितिः
तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् ८१

अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति
जलवाहिशिरामूलं तृष्णाऽच्छादनकृन्मतम् ८२

मेदः शोणितयोः साराद्वृक्कयोर्युगलं भवेत्
तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः ८३

अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्दिशेत्
उक्ता सार्द्धास्त्रयो व्यामापुंसामन्त्राणि सूरिभिः ८४

उन्दुकश्च कटी चापि त्रिकं वस्तिश्च वङ्क्षणौ
कराडराणां प्ररोहःस्यान्मेढ्रोऽध्वा वीर्यमूत्रयोः ८५

स एव गर्भस्याधानं कुर्याद्गर्भाशये स्त्रियाः
शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता ८६

तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता
वृषणौ भवतः सारात्कफासृङ्मांसमेदसाम् ८७

वीर्यवाहिशिराधारौ तौ मतौ पौरुषावहौ
गुदस्य मानं सर्वस्य सार्द्धं स्याच्चतुरङ्गुलम् ८८

तत्र स्युर्वलयस्तिस्त्रः शङ्खावर्तनिभास्तु ताः

प्रवाहिणी भवेत्पूर्वा सार्द्धाङ्गुलमिता मता ८९

उत्सर्जनी तु तदधः सा सार्द्धाङ्गुलसम्मिता
तस्याधः संवरणी स्यादेकाङ्गुलसमा मता ९०

अर्द्धाङ्गुलप्रमाणं तु बुधैर्गुदमुखं मतम्
मलोत्सर्गस्य मार्गोऽय पायुर्देहे विनिर्मितः ९१

पुंसः प्रोथौ स्मृतौ यौ तु तौ नितम्बौ च योषितः
तयोः कुकुन्दरे स्यातां सक्थिनोत्वङ्गमष्टमम् ९२

तदुपाङ्गानि च ब्रूमो जानुनी पिण्डकाद्वयम्
जंघे द्वे घुटिके पार्ष्णी तले च प्रपदे तथा ९३

पादावङ्गुलयस्तत्र दश तासां नखा दश
अथ दोषाः प्रवक्ष्यन्ते धातवस्तदनन्तरम् ९४

आहारादेर्गतिस्तस्य परिणामश्च वक्ष्यते
आर्त्तवं चाथ धातूनां मलास्तदुपधातवः ९५

आशयाश्च कलाश्चापि मर्माण्यथ च सन्धयः
शिराश्च स्नायवश्चापि धमन्यः कण्डरास्तथा ९६

रन्ध्राणि भूरि स्रोतांसि जालैः कूर्च्चाश्च रज्जवः
सेवन्यश्चाथ सङ्घाताः सीमान्ताश्च तथा त्वचः ९७

लोमानि लोमकूपाश्च देह एतन्मयो मतः
वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ९८

विकृताविकृता देहं घ्नन्ति ते वर्द्धयन्ति च
ते व्यापिनोऽपि हृन्नाभ्योरधो मध्योर्ध्वसंश्रयाः

वयोऽहोरात्रिभुक्तानामन्तमध्यादिगाः क्रमात् ९९

धातवश्च मलाश्चापि दुष्यन्त्येभिर्यतस्ततः
वातपित्तकफा एते त्रयो दोषा इति स्मृताः १००

ते धातवोऽपि विद्वद्भिर्गदिता देहधारणात् १०१

दोषधातुमलादीनां नेता शीघ्रः समीरणः
रजोगुणमयः सूक्ष्मो रूक्षः शीतो लघुश्चलः १०२

उत्साहोच्छ्वासनिःश्वासचेष्टावेगप्रवर्त्तनैः १०३

सम्यग् गत्या च धातूनामन्द्रियाणाञ्च पाटवैः
अनुगृह्णात्यविकृतो हृदयेन्द्रियचित्तधृक् १०४

रजोगुणमयः सूक्ष्मः शीतो रूक्षो लघुश्चलः
खरो मृदुर्योगवाही संयोगादुभयार्थकृत् १०५

दाहकृत् तेजसा युक्तः शीतकृत्सोमसंश्रयात्
विभागकरणाद्वायुः प्रधानं दोषसंग्रहे १०६

पक्वाशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम्
स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः १०७

उदानस्तदनुप्राणः समानोऽपान एव च
व्यानश्चैतानि नामानि वायोः स्थानप्रभेदतः १०८

कण्ठे हृदि तथाऽधस्तात्कोष्ठवह्नेर्मलाशये
सकलेऽपि शरीरेऽसौ क्रमेण पवनो वसेत् १०९

उदानो नाम यस्तूर्ध्वमुपैति पवनोत्तमः
तेन भाषितगीतादिप्रवृत्तिः कुपितस्तु सः ११०

ऊर्ध्वजत्रुगतान् रोगान्विदधाति विशेषतः
यो वायुः प्राणनामाऽसौ मुखं गच्छति देहधृक् १११

सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते
प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ११२

आमपक्वाशयचरः समानो वह्निसङ्गतः
सोऽन्नं पचति तज्जांश्च विशेषान्विविनक्ति हि ११३

स दुष्टो वह्निमान्द्यातिसारगुल्मान् करोति हि
पक्वाशयालयोऽपानः काले कर्षति चाप्ययम् ११४

समीरणः शकृन्मूत्रशुक्रगर्भार्त्तवान्यधः
क्रुद्धस्तु कुरुते रोगान् घोरान्वस्तिगुदाश्रयान् ११५

शुक्रदोषप्रमेहांश्च व्यानापानप्रकोपजान्
कृत्स्नदेहचरो व्यानो रससंवाहनोद्यतः ११६

स्वेदाऽसृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि
प्रस्पन्दनञ्चोद्वहनं पूरणञ्च विरेचनम् ११७

धारणञ्चेति पञ्चैताश्चेष्टाः प्रोक्ताः नभस्वतः
गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ११८

क्रुद्धः सः कुरुते रोगान् प्रायशः सर्वदेहगान्
युगपत् कुपिता एते देहं भिन्द्युरसंशयम् ११९

पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोत्तरम्
सरं कटु लघु स्निग्धं तीक्ष्णमम्लन्तु पाकतः १२०

पाचकं रञ्जकञ्चापि साधकालोचके तथा
भ्राजकञ्चेति पित्तस्य नामानि स्थानभेदतः १२१

अग्न्याशये यकृत्प्लीह्नोर्हृदये लोचनद्वये
त्वचि सर्वशरीरेषु पित्तं निवसति क्रमात् १२२

पाचकं पचते भुक्तं शेषाग्निबलवर्द्धनम्
रसमूत्रपुरीषाणि विरेचयति नित्यशः १२३

इत्यलमप्रकृतिचिन्तनेन पुनः प्रकृतमनुसरति
रञ्जकं नाम यत्पित्तं तद्रसं शोणितं नयेत्
यत्तु साधकसंज्ञं तत्कुर्याद्बुद्धिं धृतिं स्मृतम् १२४

यदालोचकसंज्ञं तद्रूपग्रहणकारणम्
भ्राजकं कान्तिकारि स्याल्लेपाभ्यङ्गादिपाचकम् १२५

श्लेष्माश्वेतो गुरुः स्निग्धः पिच्छिलः शीतलस्तथा
तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत् १२६

कफस्यैतानि नामानि क्लेदनश्चावलम्बनः
रसनः स्नेहनश्चापि श्लेषणः स्थानभेदतः १२७

आमाशयेऽथ हृदये कण्ठे शिरसि सन्धिषु
स्थानेष्वेषु मनुष्याणां श्लेष्मा तिष्ठत्यनुक्रमात् १२८

क्लेदनः क्लेदयत्यन्नमात्मशक्त्याऽपराण्यपि
अनुगृह्णाति च श्लेष्मस्थानान्युदककर्मणा १२९

रसयुक्तात्मवीर्येण हृदयस्यावलम्बनम्
त्रिकसन्धारणं चापि विदधात्यवलम्बनः १३०

उभावपि ततः सौम्यौ तिष्ठतश्चान्तिके यतः
यतो रसान्विजानीतो रसनारसनौ समौ १३१

स्नेहनः स्नेहदानेन समस्तेन्द्रियतर्पणः
श्लेषणः सर्वसन्धीनां संश्लेषं विदधात्यसौ १३२

एते सप्त स्वयं स्थित्वा देहं दधति यन्नृणाम्
रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः १३३

प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे
गर्भोत्पादश्च कर्माणि धातूनां कथितानि हि १३४

गत्यर्थो रस धातुर्यस्ततोऽभवदयं रसः
सद्रवं सकलं देहे रसतीति रसः स्मृतः १३४

सम्यक्पक्वस्य भुक्तस्य सारो निगदितो रसः
स तु द्रवः सितः शीतः स्वादुः स्निग्धश्चलो भवेत् १३५

सर्वदेहचरस्यापि रसस्य हृदयं स्थलम्
समानमरुता पूर्वं यदयं हृदये धृतः १३६

आरुह्य धमनीर्गत्वा धातून् सर्वानयं रसः
पुष्णाति तदनु स्वीयैर्व्याप्नोति च तनुं गुणैः १३७

मन्दवह्निविदग्धस्तु कटुर्वाऽम्लो भवेद्रसः
स कुर्याद्बहुलान् रोगान् विषकृत्यं करोत्यपि १३८

यदा रसो यकृद्याति तत्र रञ्जकपितत्तः
रागंपाकं च सम्प्राप्य स भवेद्रक्तसंज्ञकः १३९

रक्तं सर्वशरीरस्थं जीवस्याधारमुत्तमम्

स्निग्धं गुरु चलं स्वादु विदग्धं पित्तवद्भवेत् १४०

यकृत् प्लीहा च रक्तस्य मुख्यस्थानन्तयोः स्थितम्
अन्यत्र संस्थितवतां रक्तानां पोषकं भवेत् १४१

शोणितं स्वाग्निना पक्वं वायुना च घनीकृतम्
तदेव मांसं जानीयात्तस्य भेदानपि ब्रुवे १४२

यथाऽथमूष्मणा युक्तो वायुः स्रोतांसिदारयेत्
अनुप्रविश्य पिशितं पेशीर्विभजते तथा १४३

मांसपेश्यः समाख्याता नृणां पञ्च शतानि हि १४४

तासां शतानि चत्वारि शाखासु कथितान्यथ
कोष्ठे षडुत्तरा षष्टिः कथिता मुनिपुङ्गवैः
ग्रीवाया ऊर्ध्वगास्तास्तु चतुस्त्रिंशत् प्रकीर्त्तिताः १४५

स्त्रीणामपि भवन्त्येताः किन्तु विंशतिरुत्तराः
गर्भाशये गर्भमार्गे योनौ च स्तनयोरपि १४६

पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता मेहनमुष्कजाः
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः १४७

शिरास्नाय्वस्थिपर्वाणि सन्धयश्च शरीरिणाम्
पेशीभिःसंवृतान्येव बलवन्ति भवन्ति हि १४८

यन्मांसं स्वाग्निना पक्वं तन्मेद इति कथ्यते
तदतीव गुरु स्निग्धं बलकार्यतिबृंहणम् १४९

मेदो हि सर्वभूतानामुदरेष्वस्थि संस्थितम्
अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् १५०

मेदो यत् स्वाग्निना पक्वं वायुना चातिशोषितम् १५१

तदस्थिसंज्ञां लभते स सारः सर्वविग्रहे
अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः १५२

अस्थिसारैस्तथा देहा ध्रियन्ते देहिनो ध्रुवम्
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम्
अस्थीनि न विनश्यन्ति सारा एतानि सर्वथा १५३

शल्यतन्त्रेऽस्थिखण्डानांशतत्रयमुदाहृतम् १५४

तान्येवात्र निगद्यन्ते तेषां स्थानानि यानि च
सविंशतिशतं त्वस्थ्नां शाखासु कथितं बुधैः १५५

पार्श्वयोः श्रोणिफलके वक्षःपृष्ठोदरेषु च
जानीयाद्भिषगेतेषु शतं सप्तदशोत्तरम्
ग्रीवायामूर्ध्वगां विद्यादस्थ्नां षष्टिंत्रिसंयुताम् १५६

एतान्यस्थीनि पञ्चविधानि भवन्ति तानि यथा
तरुणानि कपालानि रुचकानि भवन्ति हि
वलयानीति तानि स्युर्नलकानि च कानि चित् १५७

अक्षिकोश श्रुतिघ्राणग्रीवासु तरुणानि च १५८

शिरः शङ्खकपोलेषु ताल्वं सप्रोथजानुषु
कपालानि भवन्त्येषु दन्तेषु रुचकानि च १५९

पाष्णर्योः पार्श्वयुगे पृष्ठे वक्षोजठरपायुषु
पादयोर्वलयानि स्युर्नलकानि ब्रुवेऽधुना १६०

हस्ते पादाङ्गुलितले कूर्च्चे च मणिबन्धके

बाहूजङ्घाद्वये चापि जानीयान्नलकानि तु १६१

मांसान्यन्त्राणि बद्धानि शिराभिः स्नायुभिस्तथा
अस्थीन्यालम्बनं कृत्वा न दीर्यन्ते पतन्ति च १६२

अस्थि यत् स्वाग्निना पक्वं तस्य सारो भवेद्घनः
यः स्वेदवत् पृथग्भूतः स मज्जेत्यभिधीयते १६३

स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तरे स्थितः १६४

रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते
मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः १६५

यात्यामाशयमाहारः पूर्वं प्राणानिलेरितः
माधुर्यं फेनभावं च षड्रसोऽपि लभेत सः १६६

षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता
आमपक्वाशयान्तःस्था ग्रहणी साऽभिधीयते १६७

तत्रग्रहरायामामाशयपक्वाशयमध्यवर्त्तिपाचकाख्यपित्ताधिष्ठानेनाग्निनाऽहारः पच्यते स कटुश्च भवतीत्याहग्रहरायां पच्यते कोष्ठे वह्निना जायते कटुः इति १६८

एतदाहारपाके विशेषमाह शरीरं पाञ्चभौतिकम्
तत्र पञ्चसुभूतेषु पञ्चाग्नयस्तिष्ठन्तै उक्तं च चरकेण
भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः
पञ्चाहारगुणान् स्वान् स्वान्पार्थिवादीन् पचन्त्यनु १६९

पञ्च भूतात्मके देहे आहारः पाञ्चभौतिकः
विपक्वः पञ्चधा सम्यग्गुणान्स्वानभिवर्द्धयेत् इति १७०

मिष्टः पटुश्च मधुरमम्लोऽम्ल पच्यते रसः
कटुतिक्तकषायाणां विपाको जायते कटुः इति १७१

आहारस्य रसः सारः सार हीनो मलद्रवः
शिराभिस्तज्जलं नीतं वस्तिं मूत्रत्वमाप्नुयात् १७२

शेषं किट्टञ्च यत्तस्य तत्पुरीषं निगद्यते
समानवायुना नीतन्तत्तिष्ठति मलाशये १७३

मूत्रञ्चोपस्थमार्गेण पुरीषं गुदमार्गतः
अपानवायुना क्षिप्तं बहिर्याति शररीतः १७४

रसस्तु हृदयं याति समानमरुतेरितः
स तु व्यानेन विक्षिप्तः सर्वान् धातून् विवर्द्धयेत् १७५

केदारेषु यथा कुल्याः पुष्णन्ति विविधौषधीः
तथा कलेवरे धातून् सर्वान् वर्द्धयते रसः १७६

रसस्तु तत्र तत्र त्रिधा विभज्यते उक्तञ्च चरके
स्थूलः सूक्ष्मस्तन्मलश्च तत्र तत्र त्रिधा रसः
स्वं स्थूलोंऽश परं सूक्ष्मस्तन्मलो याति तन्मलम् १७७

धातौ रसादौ मज्ञान्ते प्रत्येकं क्रमतो रसः
अहोरात्रात्स्वयं पञ्च सार्द्धदण्डं च तिष्ठति १७८

स्वाग्निभिः पच्यमानेषु मज्ञान्तेषु रसादिषु
षट्सु धातुषु जायन्ते मलानि मुनयो जगुः १७९

यथा सहस्रधा ध्माते न मलं किल काञ्चने
तथा रसे मुहुः पक्वे न मलं शुक्रताङ्गते १८०

ओजः सर्वशरीरस्थं स्निग्धं शीतं स्थिरं सितम्
सोमात्मकं शरीरस्य बलपुष्टिकरं मतम् १८१

गुरु शीतं मृदु स्निग्धं सान्द्रं स्वादु स्थिरं तथा
प्रसन्नं पिच्छिलं सूक्ष्ममोजो दशगुणं स्मृतम् १८२

अष्टविन्दुप्रमाणं तदीषद्रक्तं सपीतकम्
अग्नीषोमात्मकत्वेन द्विरूपं वर्णितन्तु तत् १८३

ओजश्च तेजो धातूनां शुक्रान्तानां परं स्मृतम्
हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् १८४

यस्य प्रवृद्धौ देहस्य तुष्टिपुष्टिबलोदयाः
यन्नाशे नियतो नाशो यस्मिंस्तिष्ठति जीवनम् १८५

निष्पद्यन्ते यतो भावा विविधा देहसंश्रयाः
उत्साहप्रतिभाधैर्यलावण्यसुकुमारताः १८६

ततः स्थूलो भागो रसो मासेन पुंसां शुक्रं स्त्रीणान्त्वार्त्तवं शुक्रञ्च भवति
उक्तञ्च सुश्रुते
एवं मासेन रसः शुक्रो भवति  स्त्रीणामार्त्तवञ्चेति  चकारात् स्त्रीणामपि शुक्रं भवति
अत एवोक्तं सुश्रुते
योषितोऽपि स्रवत्येव शुक्रं पुंसः समागमे
तत्र गर्भस्य किञ्चित्तुन करोतीति न चिन्त्यते १८७

एवञ्च
स्त्रीणां गर्भोपयोगि स्यादार्त्तवं सर्वसम्मतम्
तासामपि बलं वर्णं शुक्रं पुष्टिं करोति हि १८८

एवञ्च

रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते
मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः १८९

रसः शरीरे शब्दार्च्चिर्जलसन्तानवत् त्रिधा
सञ्चरत्यनुरूपोऽय नित्यमेव हि देहिनाम् १९०

वाजीकरिराय श्रोषध्यः स्वप्रभावगुणोच्छ्रयात्
विरेचयन्ति ताः शुक्रं विरेकिद्रव्यवन्नृणाम् १९१

दुग्धं माषाश्च भल्लात फलमज्जामलानि च
जनकानि निगद्यन्ते रेचनानि च रेतसः १९२

बालानां शुक्रमस्त्येव किन्तु सौद्मम्यान्न दृश्यते
पुष्पाणां मुकुले गन्धो यथा सन्नपि नाप्यते १९३

तेषां तदेव तारुराये पुष्टत्वाद्व्यक्तिमेति हि
कुसुमानां प्रफुल्लानां गन्धः प्रादुर्भवेद्यथा १९४

रोमराज्यादयः पुंसां नारीणामपि यौवने
जायतेऽत्र च यो भेदो ज्ञेयो व्याख्यानतः स च १९५

वार्द्धके वर्द्धमानेन वायुना रसशोषणात्
न तथा धातुवृद्धिः स्यात्ततस्तत्रानिलं जयेत् १९६

शुक्रं सौम्यं सितं स्निग्धं बलपुष्टिकरं स्मृतम्
गर्भबीजं वपुःसारो जीवस्याश्रय उत्तमः १९७

जीवो वसति सर्वस्मिन्देहे तत्र विशेषतः
वीर्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं क्षणात् १९८

स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च

शुक्रमिच्छन्ति केचित्तु तैलक्षौद्रनिभञ्च तत् १९९

यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा
एवं हि सकले काये शुक्रं तिष्ठति देहिनाम् २००

द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः
मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते २०१

कृत्स्नदेहस्थितं शुक्रं प्रसन्नमनसस्तथा
स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् सम्प्रवर्त्तते २०२

शुक्रं कामेन कामिन्या दर्शनात् स्पर्शनादपि
शब्दसंश्रवणाद्ध्यानात् संयोगाच्च प्रवर्त्तते २०३

रसादेव रजः स्त्रीणां मासि मासि त्र्यहं स्रवेत्
तद्वर्षाद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् २०४

मासेनोपचितं काले धमनीभ्यस्तदार्त्तवम्
ईषद्विवर्णं कृष्णञ्च वायुर्योनिमुखं नयेत् २०५

शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम्
तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत् २०६

अतिरिक्ता गुणा रक्ते बह्नेर्मांसे तु पार्थिवाः
मेदस्यपां भुवश्चास्थ्नि पृथिव्यनिलतेजसाम् २०७

मज्ज्ञि शुक्रे च सोमस्य मूत्रे च शिखिनोगुणाः
भुवस्तथाऽऽत्तवे त्वग्ने रसे क्षीरे तथाऽम्भसः २०८

कफः पित्तं मलः खेषु प्रस्वेदो नखलोम च
नेत्रविट्त्वक्षु च स्नेहो धातूनां क्रमशो मलाः २०९

वनितानां प्रसूतानां धमनीभ्यां स्तनौ गतात्
रसादेव हि जायेत स्तन्यं स्तनयुगाशयम् २१०

शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता
मेदसस्ताप्यमानस्य स्नेहो वा कथिता वसा २११

स्तन्यं रजो वसा स्वेदो दन्ताः केशास्तथैव च
ओजश्च सप्तधातूनां क्रमात् सप्तोपधातवः २१२

उरोरक्ताशयस्तस्मादधः श्लेष्माशयः स्मृतः
आमाशयस्तु तदधस्तल्लिङ्गं चरकोऽवदत् २१३

आमाशयादधः पक्वाशयादूर्ध्वन्तु या कला
ग्रहणी नामिका सैव कथितः पाचकाशयः २१४

ऊर्ध्वमग्न्याशयो नाभेर्मध्यभागे व्यवस्थितः
तस्योपरि तिलं ज्ञेयं तदधः पवनाशयः २१५

पक्वाशयस्तुतदधः स एव तु मलाशयः
तदधः कथितो वस्तिः स हि मूत्राशयो मतः २१६

आशयानुक्रमस्तु वाग्भटेनोक्तः स यथा
कफाऽमपित्तवातानामाशया मलमूत्रयोः
पुरुषेभ्योऽधिकाश्चान्ये नारीणामाशयास्त्रयः २१७

धरा गर्भाशयः प्रोक्तः पित्तपक्वाशयान्तरे
स्तनौ प्रवृद्धौ तावेव बुधैः स्तन्याशयौ मतौ २१८

स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा
श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान्विदुः २१९

धात्वाशयान्तरे धातोर्यः क्लेदस्त्वधितिष्ठति
देहोष्मणाऽभिपक्वश्च सा कलेत्यभिधीयते २२०

आद्या मांसधरा प्रोक्ता द्वितीया रक्तधारिणी
मेदोधरा तृतीया तु चतुर्थी श्लेष्मधारिणी २२१

पञ्चमी तु मलं धत्ते षष्ठी पित्तधरा मता
रेतोधरा सप्तमी स्यादिति सप्त कलाः स्मृताः २२२

सन्निपातः शिरास्नायुसन्धिमांसास्थिसम्भवः
मर्माणि तेषु तिष्ठन्ति प्राणाः खलु विशेषतः २२३

सप्तोत्तरशतं सन्ति देहे मर्माणि देहिनाम्
तान्येकादश मांसे स्युरष्टावस्थिषु सन्ति हि २२४

सन्धीनां विंशतिस्तानि स्नायूनां सप्तविंशतिः
चत्वारिंशतत्तथैकञ्च शिरामर्माणि तत्र तु २२५

द्वाविंशतिः सक्थियुगे तावत्येव भुजद्वये
द्वादशोरसि कुक्षौ च पृष्ठदेशे चतुर्दश २२६

ग्रीवायामूर्ध्वभागे तु सप्तत्रिंशन्मतानि हि
मर्माणि तानि सन्तीह पञ्चधा च भवन्ति हि २२७

सद्यः प्राणहराणि स्युर्मर्माण्येकोनविंशतिः
मर्मदेशास्त्रयस्त्रिंशत् स्युः कालान्तरमारकाः २२८

चत्वारिंशच्च चत्वारि वैकल्यं जनयन्ति हि
मर्माष्टकं रुजाकारि विशल्यघ्नं त्रिकं मतम् २२९

शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरा गुदम्

हृदयं वस्तिनाभी च सद्यो घ्नन्ति हतानि चेत् २३०

वक्षोमर्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः
वृहत्यौ पार्श्वयोः सन्धी कटीकतरुणे च ये
नितम्बाविति चैतानि कालान्तरहराणि तु २३१

लोहिताक्षाणिजानूर्वी कूर्चा विटपकूर्पराः
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके २३२

अंसांसफलकापाङ्गा नीले मन्ये फणे तथा
वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च २३३

गुल्फौ द्वौ मणिबन्धौ द्वौ तथा कूर्चशिरांसि च
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान् २३४

उत्क्षेपौ स्थपनी चैव विशल्यघ्नं त्रिकम्मतम् २३५

सप्तरात्रान्तरे हन्युः सद्यः प्राणहराणि हि
कालान्तरप्राणहरं पक्षे मासे च मारकम् २३६

सद्यः प्राणहरञ्चान्ते विद्धं कालेन मारयेत्
कालान्तरप्राणहरमन्ते विद्धन्तु दुःखदम् २३७

मर्माण्यधिष्ठाय हि ये विकारा मूर्च्छन्ति काये विविधा नराणाम्
प्रायेण ते कृच्छ्रतमा भवन्ति वैद्येन यत्नैरपि साध्यमानाः २३८

अथ सन्धयः
ते द्विविधाश्चेष्टावन्तः स्थिराश्च
शाखासु हन्वोः कट्याञ्च चेष्टावन्तो भवन्ति हि
शेषास्तु सन्धयः सर्वे स्थिरास्तज्ज्ञैरुदाहृताः २३९

कथिता देहिनां देहे सन्धयो द्वे शते दश
शाखासु तेऽष्टषष्टिश्च कोष्ठे त्वेकोनषष्टिका २४०

ग्रीवाया ऊर्ध्वदेशे तु त्र्यशीतिस्ते प्रकीर्त्तिताः
प्रथमं परिगण्यन्ते तेषु शाखागता इह २४१

कोरोदूखलसामुद्गाः प्रतरस्तूणसेवनी
काकतुण्डं मण्डलञ्च शङ्खावर्त्तोऽष्टसन्धयः २४२

अस्थ्नां तु सन्धयो ह्येते केवलाः समुदाहृताः
पेशीस्नायु शिराणान्तु सन्धिसंख्या न विद्यते २४३

सन्धिबन्धनकारिण्यो दोषधातुवहाः शिराः
नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः २४४

शरीरं सकलञ्चैतच्छिराभिः पोष्यते सदा
प्रणालीभिरिवारामाः कुल्याभिः क्षेत्रधान्यवत् २४५

प्रसारणाकुञ्चनादिक्रियाभिः सततं तनौ
शिरा एवोपकुर्वन्ति ताः स्युः सप्तशतानि तु २४६

यथा द्रुमदले साक्षाद् दृश्यन्ते प्रतताः शिराः
तथैव दैहिनो देहे वर्त्तन्ते सकले शिराः २४७

नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिरुपाश्रिता
शिराभिरावृता नाभिश्चक्रनाभिरिवारकैः २४८

क्रियाणामप्रतीघातममोहं बुद्धिकर्मणाम्
करोत्यन्यान् गुणांश्चापि स्वाः शिराः पवनश्चरन् २४९

यदा तु कुपितो वायुः स्वाः शिराः प्रतिपद्यते

तदाऽस्य विविधा रोगा जायन्ते वातसम्भवाः २५०

भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्
करोत्यन्यान् गुणांश्चापि पित्तमात्मशिराश्चरद् २५१

यदा तु कुपितं पित्तं सेवते स्ववहाः शिराः
तदाऽस्यविविधा रोगा जायन्ते पित्तसम्भवाः २५२

स्नेहमङ्गेषु सन्धीनां स्थैर्यं बलमरोगाताम्
करोत्यन्यान् गुणांश्चापि वलासःस्वाःशिराश्चरन् २५३

यदा तु कुपितः श्लेष्मा स्वाः शिराः प्रतिपद्यते
तदाऽस्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः २५४

धातूनां पूरणं वर्णस्पर्शज्ञानमसंशयम्
स्वशिरासु चरद्रक्तं कुर्याच्चान्यान् गुणानपि २५५

यदा तु कुपितं रक्तं सेवते स्ववहाः शिराः
तदाऽस्य विविधा रोगा जायन्ते रक्तसम्भवाः २५६

तत्रारुणा वातवहाः पूर्यन्ते वायुना शिराः
पित्तादुष्णाश्च नीलाश्च शीता गौर्यः स्थिराः कफात्
असृग्धरास्तु ता रक्ताः स्युश्च नात्युष्णशीतलाः २५७

मेदसः स्नेहमादाय शिरा स्नायुत्वमाप्नुयात्
शिराणां हि मृदुः पाकः स्नायूनान्तु ततः खरः २५८

स्नायवो बन्धनानिस्युर्देहमांसास्थिमेदसाम्
सन्धीनामपि यत्तास्तु शिराभ्यः सुदृढाः स्मृताः २५९

नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता

नियुक्ताऽगाधसलिले भवेद्भारसहा भृशम् २६०

एवमेव शरीरेस्मिन्यावन्तः सन्धयः स्मृताः
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः २६१

शतानि नव जायन्ते शरीरे स्नायवो नृणाम्
तासां विवरणं ब्रूमः शिष्याः शृणुत यत्नतः २६२

शाखासु षट्शतानि स्युः कोष्ठे त्रिंशच्छतद्वयम्
ग्रीवाया ऊर्ध्वदेशे तु स्नायूनां सप्ततिः समृता २६३

धमन्यो नाभितो जाताश्चतुर्विंशतिसंख्यया
दशोर्ध्वगा दशाधोगाः शेषास्तिर्यग्गताः स्मृता २६४

यथा स्वभावतः खानि मृणालेषु विसेषु च
धमनीनां तथा खानि रसो यैरभितश्चरेत् २६५

पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भाबयन्ति
पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले २६६

महत्यः स्नायवः प्रोक्ताः कराडरास्तास्तु षोडश
प्रसाराणाकुञ्चनयोर्दृष्टं तासां प्रयोजनम् २६७

चतस्रो हस्तयोस्तासां तावत्यः पादयोः स्मृताः
ग्रीवायामपि तावत्यस्तावत्यः पृष्ठसङ्गताः २६८

नेत्रश्रवणनासानां द्वे द्वे रन्ध्रे प्रकीर्त्तिते
मुखमेहनपायूनामेकैकं रन्ध्रमुच्यते २६९

दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां विदुः
स्त्रीणामन्यानि च त्रीणि स्तनयोर्गर्भवर्त्मनि २७०

मनः प्राणान्नपानीयदोषधातूपधातवः
धातूनां च मला मूत्रं मलमित्यादयस्तनौ २७१

सञ्चरन्ति हि यैर्मार्गैस्तानि स्रोतांसि सञ्जगुः
बहूनि तानि संख्याय शक्यन्ते नैव भाषितुम् २७२

जालानि तु शिरास्नायुमांसास्थ्नामुद्भवन्ति हि
तानि चत्वारि चत्वारि सर्वाण्येव च षोडश २७३

कूर्चा स्युर्हस्तयोर्द्वौ तु तावन्तौ पादयोरपि
ग्रीवायामेक एकस्तु मेढ्रे सर्वेऽपि षट् स्मृताः २७४

पृष्ठवंशस्योभयत्र महत्यो मांसरज्जवः
चतस्रो मांसपेशीनां बन्धनं तत्प्रयोजनम् २७५

सेवन्यः सप्त तासां तु भवेयुः पञ्च मस्तके
एका शेफसि जिह्वायामेका विध्येन्न ताः क्वचित् २७६

चतुर्दशास्थ्नां सङ्घातास्तेषां त्रयो गुल्फजानुवंक्षणेषु
एतेनेतरसक्थिबाहू च व्याख्यातौ त्रिकशिरसोरेकैकम् २७७

चतुर्दशैव सीमन्ताः कथिता मुनिपुङ्गवैः
सङ्घाताः सीविता यैस्तु सीमन्तास्ते प्रकीर्त्तिताः २७८

क्षीरस्य पच्यमानस्य यथा सन्तानिका भवेत्
पच्यमानस्य शुक्रस्य रजसश्च तथा त्वचः
पूर्वावभासिनी तासां सिध्मस्थानं च सा स्मृता २७९

द्वितीया लोहिता ज्ञेया तिलकालकजन्मभूः २८०

तृतीया तु भवेच्छ्वेता स्थानं चर्मदलस्य सा २८१

ताम्रा चतुर्थी विज्ञेया किलासश्वित्रभूमिका २८२

पिञ्चमी वेदिनी नाम्ना पञ्चभागप्रमाणिका
विसर्पकुष्ठाधिष्ठाना ज्ञेया षष्ठी तु रोहिणी
विख्याता रोहिणी षष्ठी ग्रन्थिगगडापचीस्थितिः २८३

स्थूला त्वक्सप्तमी ख्याता विद्रध्यादेः स्थितिश्च सा २८४

अस्थ्नो मलानि लोमानि चासंख्यानि भवन्ति हि
सन्ति यावन्ति लोमानि तावन्तो लोमकूपकाः २८५

अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते
सन्निवेशश्च गात्राणां नात्रास्ते कारणान्तरम् २८६

अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्त्यगुणा गुणाः
ते ते गर्भस्य विज्ञेया धर्माधर्मनिमित्तजाः २८७

दन्तानां पतनं जन्म पुनः पाते त्वसम्भवः
तलेष्वनुद्भवो लोम्नामेतत्सर्वं स्वभावतः २८८

गर्भाशये निपतितं यादृक्शुक्रं तथाऽतवम्
तादृगेव द्रवीभूतं प्रथमे मासि तिष्ठति २८९

मरुत्पित्तकफैस्तत्स्थैः पच्यमानो द्वितीयके
कललस्थमहाभूतसमुदायो घनीभवेत् २९०

तृतीये मासि शिरसो हस्तयोः पादयोस्तथा
पिगडकाः पञ्च सिध्यन्ति सूक्ष्माङ्गावयवास्तनोः २९१

सर्वाण्यङ्गान्युपाङ्गानि चतुर्थे स्युः स्फुटानि हि
हृदयव्यक्तभावेन व्यज्यते चेतनाऽपि च २९२

तस्माच्चतुर्थे गर्भस्तु नाना वस्तूनि वाञ्छति
ततो द्विहृदया यत्स्यान्नारी दौहृदिनी मता २९३

दौहृदावज्ञया कुब्जं कुणिं षराढं च वामनम्
विकृताद्मनन्धं वा पुत्रं नारी प्रसूयते २९४

यतः स्त्री दौहृदं प्राप्य वीर्यवन्तं चिरायुषम्
पुत्रं प्रसूयते तस्मात्तस्यै वाच्छितमर्पयेत् २९५

इन्द्रियार्थांस्तु यान्यान्सा भोक्तुमिच्छति गर्भिणी
गर्भबाधाभयात्तांस्तान्भिषगाहृत्य दापयेत् २९६

सा प्राप्तदौहृदा पुत्रं जनयेत्तु गुणान्वितम्
अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम् २९७

येषु येष्विन्द्रियार्थेषु दौहृदे साऽवमानिता
प्रसूयते सुतं सार्तिं तस्मिंस्तस्मिंस्तदिन्द्रिये २९८

राजसन्दर्शने यस्या दौहृदंजायते स्त्रियाः
अर्थवन्तं महाभागं कुमारं सा प्रसूयते २९९

दुकूलपट्टकौशेयभूषणादिषु दौहृदात्
अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते ३००

आश्रमे संयतात्मानं धर्मशीलं प्रसूयते
देवताप्रतिमायां तु प्रसूते पार्षदोपमम् ३०१

दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते
रक्ताद्मं लोमशं शूरं महिषामिषदौहृदात् ३०२

वाराहमांसे स्वप्नालुं शूरं सञ्जनयेत्सुतम्

मृगमांसे तु जङ्घालं विक्रान्तं वनचारिणम् ३०३

अतोऽनुक्तेषु या नारी दौहृदं विदधाति हि
शरीराचारशीलैः सा समानं जनयिष्यति ३०४

पञ्चमे मानसं षष्ठे बुद्धिश्चातिप्रबुद्ध्यते
सर्वाण्यङ्गान्युपाङ्गानि भृशं व्यक्तानि सप्तमे ३०५

ओजोऽष्टमे सञ्चरति माता पुत्रौ मुहुः क्रमात्
तेन तौम्लानमुदितौ स्यातां जातो न जीवति ३०६

न जीवत्यष्टमे जातस्तत्रौजो न स्थिरं यतः
तथा नेर्ऋत्यभागत्वाद्दापयेत्तद्बलि ततः ३०७

नवमे दशमे मासि नारी बालं प्रसूयते
एकादशे द्वादशे वा ततोऽन्यत्र विकारतः ३०८

शिरो भवति चाङ्गस्य पूर्वमित्याह शौनकः
शिरस्येवोपजायन्ते प्रधानानीन्द्रियाणि यत् ३०९

हृदयं जायते पूर्वं कृतवीर्योऽवदन्मुनिः
बुद्धेश्च मनसश्चापि यतस्तत्स्थानमीरितम् ३१०

पाराशर्य इति प्राह पूर्वं नाभिसमुद्भवः
प्राणो यत्र स्थितो देहं वर्द्धयत्यूष्मसंयुतः ३११

पाणिपादं भवेत्पूर्वं मार्कण्डेयमुनेर्मतम्
देहिनः सकलाश्चेष्टाः पाणिपादाश्रया यतः ३१२

प्रथमं जायते कोष्ठं ततः सर्वांगसम्भवः
एतत्तुं कथयामास गौतमो मुनिपुंगवः ३१३

सर्वाण्यङ्गान्युपाङ्गानि युगपत्सम्भवन्ति हि
सूक्ष्मत्वान्नोपलभ्यन्ते मतं धन्वन्तरेरिदम् ३१४

आम्रस्याणुफले भवन्ति युगपन्मांसास्थिमज्ञादयो
लक्ष्यन्ते न पृथक्पृथक्तनुतया पुष्टास्त एव स्फुटाः
एवं गर्भसमुद्भवे त्ववयवाः सर्वे भवन्त्येकदा
लक्ष्याः सूक्ष्मतया न ते प्रकटतामायान्ति वृद्धिं गताः ३१५

अथ शरीरे पितृज-मातृज-रसजात्मजा भागा उच्यन्ते तत्र
केशाःश्मश्रु च लोमानि नखा दन्ताः शिरास्तथा
धमन्यः स्नायवः शुक्रमेतानि पितृजानि हि ३१६

मांसासृङ्मज्ञमेदांसि यकृत्प्लीहान्त्रनाभयः
हृदयं च गुदं चापि भवन्त्येतानि मातृतः ३१७

शरीरोपचयो वर्णो बलं देहस्थितिस्तथा
रसादेतानि जायन्ते भिषजो मुनयो जगुः ३१८

ज्ञानं विज्ञानमायुश्च सुखदुःखादिकं तथा
इन्द्रियाणि च सर्वाणि भवन्त्येतानि चात्मनः ३१९

अग्नीषोमौ मही वायुर्नभः सत्त्वं रजस्तमः
पञ्चेन्द्रियाणि भूतात्मा गर्भं सञ्जीवयन्ति हि ३२०

गर्भस्य नाभिनाड्या तु नाडी रसवहा स्त्रियाः
संलग्ना तेन गर्भस्य वृद्धिर्भवति नित्यशः ३२१

निःश्वासोच्छ्वाससंक्षोभस्वप्नांशान्सोऽधिगच्छति
मातुर्निःश्वसितोच्छ्वाससंक्षोभस्वप्नसंभवान् ३२२

गर्भस्य नाभिमध्ये तु ज्योतिःस्थानं ध्रुवं स्मृतम्

तदाधमति वातश्च देहस्तेनास्य वर्धते ३२३

ऊष्मणा सहिताश्चापि दारयत्यस्य मारुतः
ऊर्ध्वं तिर्यगधस्ताच्च स्रोतांसि तु यथा तथा ३२४

दृष्टिश्च रामकूपाश्च न वर्धन्ते कदा च न
ध्रुवाराग्येतानि मर्त्यानामिति धन्वन्तरेर्मतम् ३२५

शरीरे न्नीयमाराेऽपि वर्धेते द्वाविमौ सदा
स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः ३२६

चेतनानामधिष्ठानं मनो देहश्च सेन्द्रियः
केशलोमनखाग्रान्नमलद्रवगुरौर्विना ३२७

वाताल्पत्वादयोगाच्च वायोः पक्वाशयस्य च
वातमूत्रपुरीषाणि गर्भस्थो न विमुञ्चति ३२८

जरायुणा मुखे छन्ने कराठे च कफवेष्टिते
वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति ३२९

गर्भिणी प्रथमादह्नः प्रहृष्टा भूषिता शुचिः
भवेच्छुक्लाम्बरधरा गुरुविप्रार्चने रता ३३०

भोज्यं तु मधुरप्रायं स्निग्धं हृद्यं द्रवं लघु
सस्कृतं दीपनीयं तु नित्यमेवोपयोजयेत् ३३१

गर्भिणी न तु कुर्वीत व्यायाममपतर्पणम्
व्यवायं च न सेवेत न कुर्याददतितर्पणम् ३३२

रात्रौ जागरणं शोकं यानस्यारोहणं तथा
रक्तमोन्नं वेगरोधं न कुर्यादुत्कटासनम् ३३३

दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते
स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ३३४

मलिनां विकृताकारां हीनाङ्गीं न स्पृशेत्स्त्रियम्
न जिघ्रेदपि दुर्गन्धं न पश्येन्नयनाप्रियम् ३३५

वचांसि नापि शृणुयात्कर्णयोरप्रियाणि च
नान्नं पर्युषितं शुष्कं भुञ्जीत क्वथितं न च ३३६

चैत्यश्मशानवृक्षांश्च भावांश्चाप्ययशस्करान्
बहिर्निष्क्रमणं क्रोधं शून्यागारं च वर्जयेत् ३३७

नोच्चैर्ब्रूयान्न तत्कुर्याद्येन गर्भो विनश्यति
तैलाभ्यङ्गोद्वर्तनं च नात्यर्थं कारयेदपि ३३८

नामृद्वास्तरणं कुर्यान्नात्युच्चं शयनासनम्
एतांस्तु नियमान्सर्वान्यत्नात्कुर्वीत गर्भिणी ३३९

नवमे दशमे मासि नारी गर्भं प्रसूयते
एकादशे द्वादशे वा ततोऽन्यत्र विकारतः ३४०

अष्टहस्तायतं चारु चतुर्हस्तविशालकम्
प्राचीद्वारमुदग्द्वारं विदध्यात्सूतिकागृहम् ३४१

जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने
सशूले जघने नारी विज्ञेया प्रसवोत्सुका ३४२

आसन्नप्रसवायास्तु कटीपृष्ठं तु सव्यथम्
भवेन्मुहुः प्रवृत्तिश्च मूत्रस्य च मलस्य च ३४३

तैलेनाभ्यक्तगात्रान्तां संस्नातामुष्णवारिणा

यवागूं पाययेत्कोष्णां मात्रया घृतसंयुताम् ३४४

कृतोपधाने मृदुनि विस्तीर्णे शयने शनैः
अभुग्नसक्थी चोत्ताना नारी तिष्ठेद्व्यथाऽन्विता ३४५

चतस्रोऽशकनीयाश्च स्रावणे कुशला हिताः
वृद्धाः परिचरेयुस्ताः सम्यक्छिन्ननखाः स्त्रियः ३४६

अपत्यमार्गं तैलेन समभ्यज्य समन्ततः
एका तु तासु सुभगे प्रवाहस्वेति तां वदेत् ३४७

अव्यथा मा प्रवाहिष्ठाः प्रावहेथा व्यथा यदि
प्रवाहेथाः शनैः पूर्वंप्रगाढं च ततः परम् ३४८

ततो गाढतमं गर्भे योनिद्वारमुपागते
अपरासहितो गर्भो यावत्पतति भूतले ३४९

मूकं वा बधिरं कुब्जं श्वासकासक्षयान्वितम्
सूते स्रस्ततनुं बालमकाले तु प्रवाहणात् ३५०

इति श्रीमिश्रलटकन तनय श्रीमन्मिश्रभाव विरचिते
भावप्रकाशे गर्भप्रकरणं तृतीयम् ३

अथ चतुर्थं बालप्रकरणम् ४

अथ बाले समुत्पन्ने विदधीत विधिं तथा
यथैव कुलवृद्धस्त्रीव्यवहारपरम्परा १

प्रसूता हितमाहारं विहारं च समाचरेत्
व्यायामं मैथुनं क्रोधं शीतसेवां विवर्जयेत् २

मिथ्याचारात्सूतिकाया यो व्याधिरुपजायते
स कृच्छ्रसाध्योऽसाध्यो वा भवेत्तत्पथ्यमाचरेत् ३

सर्वतः परिशुद्धा स्यात्स्निग्धपथ्याऽल्पभोजना
स्वेदाभ्यङ्गपरा नित्यं भवेन्मासमतन्द्रिता ४

प्रसूता सार्धमासान्ते दृष्टे वा पुनरार्त्तवे
सूतिकानामहीना स्यादिति धन्वन्तरेर्मतम् ५

व्युपद्रवां विशुद्धां च विज्ञाय वरवर्णिनीम्
ऊर्ध्वं चतुर्भ्यो मासेभ्यो नियमं परिहारयेत् ६

रसप्रसादो मधुरः पक्वाहारनिमित्तजः
कृत्स्नाद्देहात्स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ७

स्तन्यं त्रिरात्रात्स्त्रीणां वा चतूरात्रादनन्तरम्
प्रवर्त्तयन्ति विवृता धमन्यो हृदये स्थिताः ८

पयः पुत्रस्य संस्पर्शाद्दर्शनात्स्मरणादपि
ग्रहणादप्युरोजस्य शुक्रवत्सम्प्रवर्त्तते
स्नेहो निरन्तरस्तस्य प्रवाहे हेतुरुच्यते ९

अवात्सल्याद्भयाच्छोकात्क्रोधादत्यपतर्पणात्
स्त्रीणां स्तन्यं भवेत्स्वल्पं गर्भान्तरविधारणात् १०

शालिषष्टिकगोधूमान्मांसक्षुद्रझषानपि
कालशाकमलाबूं च नारिकेलं कसेरुकम् ११

शृङ्गाटकं वरीं चापि विदारीकन्दमेव च
लशुनं दुग्धवृद्ध्यै स्त्री सेवेत सुमना भवेत् १२

कलमस्य तण्डुलानां कल्कं या क्षीरपेषितं पिबति
सा भवति भृशं तरुणी क्षीरभरेणैव तुङ्गकुचयुगला १३

कलमः कलिविख्यातो जायते स बृहद्ध्रदे
काश्मीरदेश एवोक्तो महातण्डुलसंज्ञकः १४

विदारिकन्दस्य रसं पिबेत्स्तन्यस्य वृद्धये
तच्चूर्णं तस्य वृद्ध्यर्थं पिबेद्वा क्षीरसंयुतम् १५

धात्र्या गुरुभिराहारैर्विहारैर्दोषलैस्तथा
देहे दोषाः प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति १६

मिथ्याऽहारविहारिण्या दुष्टा वातादयः स्त्रियाः
दूषयन्ति पयस्तेन शरीरं व्याधयः शिशोः १७

कषायं सलिलप्लावि स्तन्यं मारुतदूषितम्
पित्तादम्लं च कटुकं राज्योऽम्भसि तु पीतिकाः १८

कफदुष्टं तु यत्तोये निमज्जति च पिच्छिलम्
द्वन्द्वजं तु द्विलिङ्गं स्यात्त्रिलिङ्गं सान्निपातिकम् १९

धात्री क्षीरविशुद्ध्यर्थं मुद्गयूषरसाशिनी
भार्ङ्गीदारुवचाः पिष्ट्वा पिबेत्साऽतिविषास्तथा २०

पाठामूर्वाऽब्दभूनिम्बदारुशुण्ठीकलिङ्गकैः
सारिवामत्स्यपित्ताऽख्यै क्वाथः स्तन्यविशोधनः २१

पटोलनिम्बासनदारुपाठा मूर्वां गुडूचीं कटुरोहिणीं च
सनागरां च क्वथितां च तोये धात्री पिबेत्स्तन्यविशुद्धिहेतोः २२

नीरे स्यन्यं यदेकि स्वादविवर्णमतन्तुमत्
पाण्डुरं तनु शीतं च तद्दुग्धं शुंद्धमादिशेत् २३

पीताय यदि बालस्य विदध्यादुपमातरम्

सुविचार्य गुणान्दोषान्कुर्याद्धात्रीं तदेदृशीम् २४

सवर्णां मध्यवयसां सच्छीलां मुदितां सदा
शुद्धदुग्धां बहुक्षीरां सवत्सामतिवत्सलाम् २५

स्वाधीनामल्पसन्तुष्टां कुलीनां सज्जनात्मजाम्
कैतवेन परित्यक्तां निजपुत्रशदृशं शिशौ २६

शोकाकुलाक्षु धार्ता च श्रान्ता व्याधिमती सदा
अत्युच्चा नितरां नीचा स्थूलातीव भृशं कृशा २७

गर्भिणी ज्वरिणी चापि लम्बोन्नतपयोधरा
अजीर्णभोजिनी चापि तथा पथ्यविवर्जिता २८

आसक्ता क्षुद्रकार्येषु दुःखार्ता चञ्चलाऽपि च
एतासां स्तन्यपानेन शिशुर्भवति सामयः २९

तत्र माता प्रशस्ताङ्गी चारुवस्त्रा पुरोमुखी
उपविश्यासने सम्यग्दक्षिणं स्तनमम्बुना ३०

प्रक्षाल्येषत्परिस्राव्य मन्त्राभ्यामभिमन्त्रितम्
उदङ्मुखं शिशुं क्रोडे शनैः सन्धाय पाययेत् ३१

अस्रावितं स्तनं बालः पिबन्स्तन्येन भूयसा
पूर्णस्रोता वमीकासश्वासैर्भवति पीडितः ३२

क्षीरनीरनिधिस्तेऽस्तु स्तनयोः क्षीरपूरकः
सदैव सुभगो बालो भवत्वेष महाबलः ३३

पयोऽमृतसमं पीत्वा कुमारस्ते शुभानने
दीर्घमायुरवाप्नोतु देवाः प्राप्यामृतं यथा ३४

क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा
दद्यादास्तन्यपर्याप्तेर्बालेभ्यो वीक्ष्य मात्रया ३५

यथोक्तविधिना बालं मासि षष्ठेऽष्टमेऽपि च
अन्नं सम्प्राशयेत्किञ्चित्ततस्तद्वर्धयेत्क्रमात् ३६

बालमङ्के सुखं दध्यान्न चैनं तर्जयेत्क्वचित्
सहसा बोधये न्नैव नायोग्यमुपवेशयेत् ३७

नाकृष्य स्थापयेत्क्रोडे न क्षिप्रं शयने क्षिपेत्
रोदयेन्न क्वचित्कार्ये विधिमावश्यकं विना ३८

तच्चित्तमनुवर्त्तेत तं सदैवानुमोदयेत्
वातातपतडिद्वृष्टिधूमानलजलादितः
निम्नोच्चस्थानतश्चापि रक्षेद्बालं प्रयत्नतः ३९

अभ्यङ्गोद्वर्त्तन स्नानं नेत्रयोरञ्जनं तथा
वसनं मृदु यत्तच्च तथा मृद्वनुलेपनम्
जन्मप्रभृति पथ्यानि बालस्यैतानि सर्वथा ४०

कवलः पञ्चमाद्वर्षादष्टमान्नस्यकर्म च
विरेकः षोडशाद्वर्षाद्विंशतेश्चैव मैथुनम् ४१

वयस्तु त्रिविधं बाल्यं मध्यमं वार्धकं तथा
ऊनषोडशवर्षस्तु नरो बालो निगद्यते ४२

त्रिविधः सोऽपि दुग्धाशी दुग्धान्नाशी तथाऽन्नभुक्
दुग्धाशी वर्षपर्यन्तं दुग्धान्नाशी शरद्द्वयम् ४३

तदुत्तरं स्यादन्नाशी एवं बालस्त्रिधा मतः
मध्ये षोडशसप्तत्योर्मध्यमः कथितो बुधैः ४४

चतुर्धा मध्यमं वृद्धियुवपूर्णक्षयान्वितम्
भवेदाविंशतेर्वृद्धिर्युवा त्वात्रिंशतो मतः ४५

चत्वारिंशत्समा यावत्तिष्ठेद्वीर्यादिपूरितः
ततः क्रमेण क्षीणः स्याद्यावद्भवति सप्ततिः ४६

ततस्तु सप्ततेरूर्ध्वं क्षीणधातुरसादिकः
क्षीयमाणेन्द्रियबलः क्षीणरेता दिने दिने ४७

बलीपलितखालित्ययुक्तः कर्मसु चाक्षमः
कासश्वासादिभिः क्लिष्टो वृद्धो भवति मानवः ४८

बाल्ये विवर्धते श्लेष्मा पित्तं स्यान्मध्यमेऽधिकम्
वार्धके वर्द्धते वायुर्विचार्यैतदुपक्रमेत् ४९

बाल्यं वृद्धिश्छविर्मेधा त्वग्दृष्टिः शुक्रविक्रमौ
बुद्धिः कर्मेन्द्रियं चेतो जीवितं दशतो ह्रसेत् ५०

सप्त प्रकृतयो नृणां वातात्पित्तात्कफात्तथा
संसर्गात्सन्निपाताच्च भवन्ति भिषजां मते ५१

शुक्रशोणितसंयोगे यो दोषस्तूत्कटो भवेत्
प्रकृतिर्जायते तेन तस्या लक्षणमुच्यते ५२

शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयार्त्तिषु
यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ५३

जागरूकोऽल्पकेशश्च स्फुटितांघ्रिकरः कृशः
शीघ्रगो बहुवाग्रूक्षः स्वप्ने वियति गच्छति
एवंविधः स विज्ञेयो वातप्रकृतिको नरः ५४

पित्तप्रकृतिको लोको यादृशोऽथ निगद्यते
अकालपलितो गौरः क्रोधी स्वेदी च बुद्धिमान् ५५

बहुभुक्ताम्रनेत्रश्च स्वप्ने ज्योतींषि पश्यति
एवंविधो भवेद्यस्तु पित्तप्रकृतिको नरः ५६

श्यामकेशः क्षमी स्थूलो बहुवीर्यो महाबलः
स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः ५७

दृश्यते प्रकृतौ यत्र रूपं दोषद्वयस्य तु
द्विसंसर्गेण जानीयात्सर्वलिङ्गैस्त्रिदोषजम् ५८

विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात्
स्वातन्त्र्याद्बहुरोगत्वाद्दोषाणां प्रबलोऽनिलः ५९

प्रायोऽत एव पवनाध्युषिता मनुष्या दोषात्मकाः स्फुटितधूसरकेशगात्राः
शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टासौहार्ददृष्टिगतयोऽतिबहुप्रलापाः ६०

अल्पपित्तबलजीवितनिद्राः सन्नसक्तचलजर्जरवाचः
नास्तिका बहुभुजः सविलासा गीतहास्यमृगयाकलिलोलाः ६१

मधुराम्लपटूष्णसात्म्यकांक्षाः कृशदीर्घाकृतयः सशब्दयाताः
न दृढा न जितेन्द्रिया न चार्या न च कान्तादयिता बहुप्रजा वा ६२

नेत्राणि चैषां खरधूसराणि वृत्तान्यचारूणि मृतोपमानि
उन्मीलितानीव भवन्ति सुप्ते शैलद्रुमांस्ते गगनं च यान्ति ६३

अधन्या मत्सराध्माताः स्तेना प्रोद्बद्धपिण्डिकाः
श्वशृगालोष्ट्रगृध्राखुकाकानूकाश्च वातिकाः ६४

पित्तं वह्निर्वह्निजं वा यदस्मात्पित्तोद्रिक्तस्तीक्ष्णतृष्णाबुभुक्षः

गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः शूरो मानी पिङ्गकेशोऽल्परोमा ६५

दयितमाल्यविलेपनमण्डनः सुचरितः शुचिराश्रितवत्सलः
विभवसाहसबुद्धिबलान्वितो भवति भीषु गतिर्द्विषतामपि ६६

मेधावी प्रशिथिलसन्धिबन्धमांसो नारीणामनभिमतोऽल्पशुक्रकामः
आवासः पलिततरंगनीलिकानां भुक्तान्नं मधुरकषायतिक्तशीतम् ६७

धर्मद्वेषी स्वेदनः पूतिगन्धिर्भूर्युच्चारक्रोधपानाशनेर्ष्यः
सुप्तं पश्येत्कर्णिकारान् पलाशान् दिग्दाहोल्काविद्युदर्कानलांश्च ६८

तनूनि पिङ्गानि चलानि चैषां तन्वल्पपक्ष्माणि हिमप्रियाणि
क्रोधेन मद्येन रवेश्च भासा रागं व्रजन्त्याशु विलोचनानि ६९

मध्यायुषो मध्यबलाः पण्डिताः क्लेशभीरवः
व्याघ्रर्क्षकपिमार्जारवृकानूकाश्च पैत्तिकाः ७०

श्लेष्मा सोमं श्लेष्मलस्तेन सौम्यो गूढस्निग्धश्लिष्टसन्ध्यस्थिमांसः
क्षुत्तृड्दुःखक्लेशधर्मैरतप्तो बुद्ध्या युक्तः सात्त्विकः सत्यसन्धः ७१

प्रियंगुदूर्वाशरकाण्डदर्भगोरोचनापद्मसुवर्णवर्णः
प्रलम्बबाहुः पृथुपीनवक्षा महाललाटो घननीलकेशः ७२

मृद्वङ्गः समसुविभक्तचारुदेहो बह्वोजोरतिरसशुक्रपुत्रभृत्यः
धर्मात्मा वदति न निष्ठुरं च जातु प्रच्छन्नं वहति दृढं चिरं च वैरम् ७३

समदद्विरदेन्द्रतुल्ययातो जलदाम्भोधिमृदङ्गसिंहघोषः
स्मृतिमानभियोगवान्विनीतो न च बाल्येऽप्यतिरोदनो न लोलः ७४

तिक्तं कषायं कटुकोष्णरूक्षमल्पं स भुंक्ते बलवांस्तथाऽपि
रक्तान्तसुस्निग्धविशालदीर्घसुव्यक्तशुक्लासितपक्ष्मलाक्षः ७५

अल्पव्याहारक्रोधपानाशनेर्ष्यः प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः
श्राद्धो गम्भीरः स्थूललक्ष्यः क्षमावानार्योनिद्रालुर्दीर्घसूत्रः कृतज्ञः ७६

ऋजुर्विपश्चित्सुभगः सलज्जो भक्तो गुरूणां स्थिरसौहृदश्च
स्वप्ने सपद्मान्सविहङ्गमालांस्तोयाशयान्पश्यति तोयदांश्च ७७

ब्रह्मरुद्रेन्द्रवरुणतार्क्ष्यहंसगजाधिपैः
श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहाश्वगोवृषैः ७८

विषजातो यथा कीटो न विषेण प्रबाध्यते
तद्वत्प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम् ७९

प्रकोपो वाऽन्यभावो वा शमो वा नोपजायते
प्रकृतीनां स्वभावेन जायते तु गतायुषः ८०

इति श्रीमिश्रलटकन तनय श्रीमन्मिश्रभाव विरचिते
भावप्रकाशे बालप्रकरणं चतुर्थम् ४

अथ पञ्चमं दिनचर्यादिप्रकरणम् ५

भूमिदेशस्त्रिधाऽनूपो जांगलो मिश्रलक्षणः १

नदीपल्वलशैलाढ्यः फुल्लोत्पलकुलैर्युतः
हंससारसकारंडचक्रवाकादिसेवितः २

शशवाराहमहिषरुरुरोहिकुलाकुलः
प्रभूतद्रुमपुष्पाढ्यो नीलशस्यफलान्वितः ३

अनेकशालिकेदारकदलीक्षुविभूषितः
अनूपदेशो ज्ञातव्यो वातश्लेष्मामयार्त्तिमान् ४
आकाशसम उच्चश्च स्वल्पपानीयपादपः
शमीकरीरबिल्वार्कपीलुकर्कंधुसङ्कुलः ५

हरिणैणर्क्षपृषतगोकर्णखरसङ्कुलः
सुस्वादुफलवान्देशो वातलो जाङ्गलः स्मृतः ६

बहूदकनगोऽनूपः कफमारुतरोगवान्
जाङ्गलोऽल्पाम्बुशाखी च पित्तासृङ्मारुतोत्तरः ७

संसृष्टलक्षणो यस्तु देशः साधारणो मतः
समाः सधारणे यस्माच्छीतवर्षोष्णमारुताः
समता तेन दोषाणां तस्मात्साधारणो वरः ८

उचिते वर्तमानस्य नास्ति दुर्देशजं भयम्
आहारस्वप्नचेष्टाऽदौ तद्देशस्य कृते सति ९

यस्य देशस्य यो जन्तुस्तज्जं तस्यौषधं हितम्
देशादन्यत्र वसतस्तत्तुल्यगुणमौषधम् १०

स्वे देशेनिचिता दोषा अन्यस्मिन्कोपमागताः
बलवन्तस्तथा न स्युर्जलजाः स्थलजास्तथा ११

मानवो येन विधिना स्वस्थस्तिष्ठति सर्वदा
तमेव कारयेद्वैद्यो यतः स्वास्थ्यं सदेप्सितम् १२

दिनचर्यां निशाचर्यामृतुचर्यां यथोदिताम्
आचरन्पुरुषः स्वस्थः सदा तिष्ठति नान्यथा १३

समदोषः समाग्निश्च समधातुमलक्रियः
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते १४

ब्राह्मे मुहूर्ते बुध्येत स्वस्थो रक्षाऽथमायुषः
तत्र सर्वाघशान्त्यर्थं स्मरेद्धि मधुसूदनम् १५

दध्याज्यादर्शसिद्धार्थं बिल्वगोरोचनस्त्रजाम्
दर्शनं स्पर्शनं कार्यं प्रबुद्धेन शुभावहम् १६

स्वमाननं घृते पश्येद् यदीच्छेच्चिरजीवितम्
ग्रायुष्यमुषसि प्रोक्तं मलादीनां विसर्जनम्
तदन्त्रकूजनाध्मानोदरगौरववारणम् १७

ग्राटोपशूलौ परिकर्त्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य १८

वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा
जठरे वातजाश्चान्येरोगाः स्युर्वातनिग्रहात् १९

बस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा
विनामो वङ्क्षणानाहः स्यालिङ्गं मूत्रनिग्रहे २०

न वेगितोऽन्यकार्यः स्यान्न वेगानीरयेद्बलात्
कामशोकभयक्रोधान्मनोवेगान्विधारयेत् २१

गुदादिमलमार्गाणां शौचं कान्तिबलप्रदम्
पवित्रकरमाख्यातमलक्ष्मीकलिपापहृत् २२

प्रक्षालनं मतं पाणयोः पादयोः शुद्धिकारणम्
मलश्रमहरं वृष्यं चक्षुष्यं राजसापहम् २३

भक्षयेद्दन्तपवनं द्वादशाङ्गुलमायतम्
कनिष्ठिकाऽग्रवत्स्थूलमृज्वग्रन्थिं तथाऽव्रणम् २४

एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन तु
दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् २५

क्षौद्रत्रिकटुकाक्तेन तैलसिन्धुभवेन वा
चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् २६

मधुको मधुरे श्रेष्ठः करञ्जः कटुके तथा
निम्बः स्यात्तिक्तके श्रेष्ठः कषाये खदिरस्तथा २७

समयं तु समालोक्य दोषं च प्रकृतिं तथा
यथोचितै रसैर्वीर्यैर्युक्तं द्रव्यं प्रयोजयेत् २८

तेनास्य मुखवैरस्यदन्तजिह्वाऽस्यजा गदाः
रुचिवैशद्यलघुता न भवन्ति भवन्ति च २९

अर्के वीर्यं वटे दीप्तिः करञ्जे विजयो भवेत्
प्लक्षे चैवार्थसम्पत्तिर्वैदर्यां मधुरोध्वनिः ३०

खदिरे मुखसौगन्ध्यं बिल्वे तु विपुलं धनम्
उदुम्बरे तु वाक्सिद्धिराम्रे त्वारोग्यमेव च ३१

कदम्बे तु धृतिर्मेधा चम्पके च दृढा मतिः
शिरीषे कीर्त्तिसौभाग्यमायुरारोग्यमेव च ३२

अपामार्गे धृतिर्मेधा प्रज्ञाशक्तिस्तथाऽसने
दाडिम्यां सुन्दराकारः ककुभे कुटजे तथा ३३

जातीतगरमन्दारैर्दुःस्वप्नं च विनश्यति ३४

गुर्वाकस्तालहिन्तालौ केतकश्च बृहत्तृणः
खर्जूरं नारिकेलं च सप्तैते तृणराजकाः ३५

तृणराजसमुत्पन्नं यः कुर्याद्दन्तधावनम्
नरश्चाण्डालयोनिः स्याद्यावद्गङ्गां न पश्यति ३६

न खादेद्गलताल्वोष्ठजिह्वादन्तगदेषु तत्
मुखस्य पाके शोथे च श्वासकासवमीषु च ३७

दुर्बलोऽजीर्णभुक्तश्च हिक्कामूर्च्छामदान्वितः
शिरोरुजार्तस्तृषितः श्रान्तः पानक्लमान्वितः ३८

अर्दितः कर्णशूली च नेत्ररोगी नवज्वरी
वर्जयेद्दन्तकाष्ठं तु हृदामययुतोऽपि च ३९

जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा
पाटितं मृदु तत्काष्ठं मृदुपत्रमयं तथा ४०

दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत्सुखम्
तज्जिह्वामलवैरस्यदुर्गन्धजडताहरम् ४१

गण्डूषमपि कुर्वीत शीतेन पयसा मुहुः
कफतृष्णामलहरं मुखान्तःशुद्धिकारकम् ४२

सुखोष्णोदकगण्डूषः कफारुचिमलापहः
दन्तजाड्यहरश्चापि मुखलाघवकारकः ४३

विषमूर्च्छामदार्त्तानां शोषिणां रक्तपित्तिनाम्
कुपिताक्षिमलक्षीणरूक्षाणां स न शस्यते ४४

मुखप्रक्षालनं शीतपयसा रक्तपित्तजित्
मुखस्य पिडिकाशोषनीलिकाव्यङ्गनाशनम् ४५

कुर्याद्वाऽपि कदुष्णेन पयसाऽस्यविशोधनम्
कफवातहरं स्निग्धं मुखशोषविनाशनम् ४६

कटुतैलादि नस्यार्थे नित्याभ्यासेन योजयेत्

प्रातः श्लेष्मणि मध्याह्ने पित्ते सायं समीरणे ४७

सुगन्धवदनाः स्निग्धनिःस्वना विमलेन्द्रियाः
निर्बलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः ४८

सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत्
लोचने भवतस्तेन मनोज्ञे सूक्ष्मदर्शने ४९

स्रोतोऽञ्जनं मतं श्रेष्ठं विशुद्धं सिन्धुसम्भवम्
दृष्टेः कण्डूमलहरं दाहक्लेदरुजापहम् ५०

अक्ष्णो रूपावहं चैव सहते मारुतातपौ
नेत्रे रोगा न जायन्ते तस्मादञ्जनमाचरेत् ५१

रात्रौ जागरितः श्रान्तश्छर्दितो भुक्तवांस्तथा
ज्वरातुरः शिरः स्नातो नाक्ष्णोरञ्जनमाचरेत् ५२

पञ्चरात्रान्नखश्मश्रुकेशरोमाणि कर्त्तयेत्
केशश्मश्रुनखादीनां कर्त्तनं सम्प्रसाधनम्
पौष्टिकं धन्यमायुष्यं शौचकान्तिकरं परम् ५३

उत्पाटयेत्तु लोमानि नासाया न कदाचन
तदुत्पाटनतो दृष्टेर्दौर्बल्यं त्वरया भवेत् ५४

केशपाशे प्रकुर्वीत प्रसाधन्या प्रसाधनम्
केशप्रसाधनं केश्यं रजोजन्तुमलापहम् ५५

आदर्शालोकनं प्रोक्तं मङ्गल्यं कान्तिकारम्
पौष्टिकं बल्यमायुष्यं पापालक्ष्मीविनाशनम् ५६

लाघवं कर्मसमर्थ्यं विभक्तघनगात्रता

दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ५७

व्यायामदृढगात्रस्य व्याधिर्नास्ति कदाचन
विरुद्धं वा विदग्धं वा भुक्तं शीघ्रं विपच्यते ५८

भवन्ति शीघ्रं नैतस्य देहे शिथिलतादयः
न चैवं सहसाऽक्रम्य जरा समधिरोहति ५९

न चास्ति सदृशं तेन किञ्चित्स्थौल्यापकर्षकम्
स सदा गुणमाधत्ते बलिनां स्निग्धभोजिनाम् ६०

वसन्ते शीतसमये सुतरां स हितो मतः
अन्यदाऽपि च कर्त्तव्यो बलार्धेन यथा बलम् ६१

हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते
मुखं च शोषं लभते तद्बलार्धस्य लक्षणम् ६२

किं वा ललाटे नासायां गात्रसन्धिषु कक्षयोः
यदा सञ्जायते स्वेदो बलार्धं तु तदादिशेत् ६३

भुक्तवान्कृतसम्भोगः कासी श्वासी कृशः क्षयी
रक्तपित्ती क्षती शोषी न तं कुर्यात्कदाचन ६४

अतिव्यायामतः कासो ज्वरश्छर्दिं श्रमः क्लमः
तृष्णा क्षयः प्रतमको रक्तपित्तं च जायते ६५

अभ्यङ्गं कारयेन्नित्यं सर्वेष्वङ्गेषु पुष्टिदम्
शिरः श्रवणपादेषु तं विशेषेण शीलयेत् ६६

सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम्
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ६७

अभ्यङ्गो वातकफहृच्छ्रमशान्तिबलं सुखम्
निद्रावर्णमृदुत्वायुष्कुरुते देहपुष्टिकृत् ६८

अभ्यङ्गः शीलितो मूर्ध्नि सकलेन्द्रियतर्पकः
दृष्टितुष्टिकरो हन्ति शिरोभूमिगतान्गदान् ६९

केशानां बहुतां दाढर्यं मृदुतां दीर्घतां तथा
कृष्णतां कुरुते कुर्याच्छिरसःपूर्णतामपि ७०

न कर्णरोगा न मलं न च मन्याहनुग्रहः
नोच्चैः श्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णपूरणात् ७१

रसाद्यैः पूरणं कर्णे भोजनात्प्राक्प्रशस्यते
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ७२

पादाभ्यङ्गश्च तत्स्थैर्यनिद्रादृष्टिप्रसादकृत्
पादसुप्तिश्रमस्तम्भसङ्कोचस्फुटनप्रणुत् ७३

व्यायामक्षुराणवपुषं पद्भ्यां सम्मर्दितं तथा
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ७४

लोमकूपशिराजालधमनीभिः कलेवरे
तर्पयेद्बलमाधत्ते स्नेहयुक्तेऽवगाहने ७५

अद्भिः संसिक्तमूलानां तरूणां पल्लवादयः
वर्द्धन्ते हि तथा नृणां स्नेहसंसिक्तधातवः ७६

नवज्वरी अजीर्णी च नाभ्यक्तव्यः कथञ्चन
तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः ७७

पूर्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा

शेषाणां च त्विह प्रोक्ता वह्निसादादयो गदाः ७८

उद्वर्त्तनं कफहरं मेदोघ्नं शुक्रदं परम्
बल्यं शोणितकृच्चापि त्वक्प्रसादमृदुत्वकृत् ७९

मुखलेपाद्दृढं चक्षुः पीनो गण्डस्तथाऽननम्
कान्तमव्यङ्गपिडकं भवेत्कमलसन्निभम् ८०

दीपनंवृष्यमायुष्यं स्नानमोजोबलप्रदम्
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मनुत् ८१

बाह्यैश्च सेकैः शीताद्यैरूष्माऽन्तर्याति पीडितः
नरस्य स्नानमात्रस्य दीप्यते तेन पावकः ८२

शीतेन पयसा स्नानं रक्तपित्तप्रशान्तिकृत्
तदेवोष्णेन तोयेन बल्यं वातकफापहम् ८३

शिरः स्नानमचक्षुष्यमत्युष्णेनाम्बुना सदा
वातश्लेष्मप्रकोपे तु हितं तच्च प्रकीर्त्तितम् ८४

अशीतेनाम्भसा स्नानं पयःपानं नवाःस्त्रियः
एतद्वो मानवाः पथ्यं स्निग्धमल्पं च भोजनम् ८५

यः सदाऽमलकैः स्नानं करोति स विनिश्चितम्
बलीपलितनिर्मुक्तो जीवेद्वर्षशतं नरः ८६

स्नानं ज्वरेऽतिसारे च नेत्रकर्णानिलार्तिषु
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ८७

स्नानस्यानन्तरं सम्यग्वस्त्रेणाङ्गस्य मार्जनम्
कान्तिप्रदं शरीरस्य कण्डूत्वग्दोषनाशनम् ८८

कौशेयौर्णिकवस्त्रं च रक्तवस्त्रं तथैव च
वातश्लेष्महरं तत्तु शीतकाले विधारयेत् ८९

मेध्यं सुशीतं पित्तघ्नं कषायं वस्त्रमुच्यते
तद्धारयेदुष्णकाले तत्रापि लघु शस्यते ९०

शुक्लं तु शुभदं वस्त्रं शीतातपनिवारणम्
न चोष्णं न च वा शीतं तत्तुवर्षासु धारयेत् ९१
यशस्यं काम्यमायुष्यं श्रीमदानन्दवर्धनम्
त्वच्यं वशीकरं रुच्यं नवनिर्मलमम्बरम् ९२

कदाऽपि न जनैः सद्भिर्धार्यं मलिनमम्बरम्
तत्तु कण्डूकृमिकरं ग्लान्यलक्ष्मीकरं परम् ९३

कुङ्कुमं चन्दनं चापि कृष्णागुरु च मिश्रितम्
उष्णं वातकफध्वंसि शीतकाले तदिष्यते ९४

चन्दनं घनसारेण बालकेन च मिश्रितम्
सुगन्धि परमं शीतमुष्णकाले प्रशस्यते ९५

चन्दनं घुसृणोपेतं मृगनाभिसमायुतम्
न चोष्णं न च वा शीतं वर्षाकाले तदिष्यते ९६

अनुलेपस्तृषामूर्च्छादुर्गन्धस्वेददाहजित्
सौभाग्यतेजस्त्वग्वर्णप्रीत्यौजोबलवर्धनः
स स्नानानर्हलोकानाममुलेपोऽपि नो हितः ९७

सुगन्धिपुष्पपत्राणां धारणं कान्तिकारकम्
पापरक्षोग्रहहरं कामदं श्रीविवर्द्धनम् ९८

भूषणैर्भूषयेदङ्गं यथायोग्यं विधानतः

शुचिसौभाग्यसन्तोषदायकं काञ्चनं स्मृतम् ९९

ग्रहदृष्टिहरं पुष्टिकरं दुःस्वप्ननाशनम्
पापदौर्भाग्यशमनं रत्नाभरणधारणम् १००

माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगो
र्माहेयस्य च विद्रुमो निगदितः सौम्यस्य गारुत्मतम्
देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं शने
र्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैदूर्यके १०१

वासःशृङ्गाररत्नानां धारणं प्रीतिबर्धकम्
रक्षोघ्नमर्थ्यमोजस्यं सौभाग्यकरमुत्तमम् १०२

सततं सिद्धमन्त्रस्य महौषध्यास्तथैव च
रोचनासर्षपादीनां मङ्गल्यानां च धारणम् १०३

आयुर्लक्ष्मीकरं रक्षोहरं मङ्गलदं शुभम्
हिंस्नादिभयविध्वंसि वशीकरणकारणम् १०४

ततो भोजनवेलायां कुर्यान्मङ्गल्यदर्शनम्
तस्य प्रदर्शनं नित्यमायुर्धर्मविवर्धनम् १०५

लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः
पुष्पस्त्रक्सर्पिरादित्य आपो राजा तथाऽष्टमः १०६

पादुकाधारणं कुर्यात्पूर्वं भोजनतः परम्
पादरोगहरं वृष्यं चक्षुष्यं चायुषो हितम् १०७
शरीरे जायते नित्यं वाञ्छा नृणां चतुर्विधः
बुभुक्षा च पिपासा च सुषुप्सा च रतिस्पृहा १०८

भोजनेच्छाविघातात्स्यादङ्गमर्दोऽरुचिः श्रमः

तन्द्रा लोचनदौर्बल्य धातुदाहो बलक्षयः १०९

विघातेन पिपासायाः शोषः कण्ठास्ययोर्भवेत्
श्रवणस्यावरोधश्च रक्तशोषो हृदि व्यथा ११०

निद्राविघाततो जृम्भा शिरोलोचनगौरवम्
अङ्गमर्दस्तथा तन्द्रा स्यादन्नापाक एव च १११

बुभुक्षितो न योऽश्नाति तस्याहारेन्धनक्षयात्
मन्दीभवति कायाग्निर्यथा चाग्निर्निरिन्धनः ११२

आहारं पचति शिखी दोषानाहारवर्जितः
पचेद् दोषक्षये धातून्प्राणान्धातुक्षयेऽपि च ११३

आहारः प्रीणनः सद्यो बलकृद् देहधारणः
स्मृत्यायुःशक्तिवर्णौजःसत्त्वशोभाविवर्धनः ११४

यथोक्तगुणसम्पन्नं नरः सेवेत भोजनम्
विचार्य दोषकालादीन्कालयोरुभयोरपि ११५

सायं प्रातर्मनुष्याणामशनं श्रुतिबोधितम्
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ११६

याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत्
याममध्ये रसोत्पत्तिर्यामयुग्माद्बलक्षयः ११७

क्षुत्सम्भवति पक्वेषु रसदोषमलेषु च
काले वा यदि वाऽकाले सोऽन्नकाल उदाहृतः ११८

उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ११९

आहारं तु रहः कुर्यान्निर्हारमपि सर्वदा
उभाभ्यां लक्ष्म्युपेतः स्यात्प्रकाशे हीयते श्रिया १२०

आहारनिर्हारविहारयोगाः सदैव सद्भिर्विजने विधेयाः १२१

पितृमातृसुहृद्वैद्यपाककृद्धंसबर्हिणाम्
सारसस्य चकोरस्य भोजने दृष्टिरुत्तमा १२२

दीनहीनक्षुधाऽऽर्त्तानां पापपाषण्डरोगिणाम्
कुक्कुटादेः शुनो दृष्टिर्भोजने नैव शोभना १२३

दोषहृद् दृष्टिदं पथ्यं हैमं भोजनभाजनम्
रौप्यं भवति चक्षुष्यं पित्तहृत्कफवातकृत् १२४

कांस्यं बुद्धिप्रदं रुच्यं रक्तपित्तप्रसादनम्
पैत्तलं वातकृद्रूक्षमुष्णं कृमिकफप्रणुत् १२५

आयसे काचपात्रे च भोजनं सिद्धिकारकम्
शोथपाण्डुहरं बल्यं कामलाऽपहमुत्तमम् १२६

शैलेये मृण्मये पात्रे भोजनं श्रीनिवारणम्
दारूद्भवे विशेषेण रुचिदं श्लेष्मकारि च
पात्रं पत्रमयं रुच्यं दीपनं विषपापनुत् १२७

जलपात्रं तु ताम्रस्य तदभावे मृदो हितम् १२८

पवित्रं शीतलं पात्रं रचितं स्फटिकेन यत्
काचेन रचितं तद्वत्तथा वैदूर्यसम्भवम् १२९

भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम्
अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनम् १३०

अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः
इति सञ्चिन्त्य भुञ्जानं दृष्टिदोषो न बाधते १३१

अञ्जनागर्भसम्भूतं कुमारं ब्रह्मचारिणम्
दृष्टिदोषविनाशाय हनुमन्तं स्मराम्यहम् १३२

अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम्
मध्येऽम्ललवणौ पश्चात्कटुतिक्तकषायकान् १३३

फलान्यादौ समश्नीयाद्दाडिमादीनि बुद्धिमान्
विना मोचफलं तद्वद्वर्जनीया च कर्कटी १३४

मृणालबिसशालूककन्देक्षुप्रभृतीनपि
पूर्वमेव हि भोज्यानि न तु भुक्त्वा कदाचन १३५

गुरु पिष्टमयं द्रव्यं तण्डुलान्पृथुकानपि
न जातु भुक्तवान्खादेन्मात्रां खादेद्बुभुक्षितः १३६

घृतपूर्वं समश्नीयात्कठिनं प्राक् ततो मृदु
अन्ते पुनर्द्रवाशी तु बलाद्रोगेण मुञ्चति १३७

यद्यत्स्वादुतरं तत्तद्विदध्यादुत्तरोत्तरम्
भुक्त्वा यत्प्रार्थ्यते भूयस्तदुक्तं स्वादु भोजनम् १३८

सौमनस्यं बलं पुष्टिमुत्साहं वृद्धिमायुषः
स्वादु सञ्जनयत्यन्नमस्वादु च विपर्ययम् १३९

अत्युष्णान्नं बलं हन्ति शीतं शुष्कं च दुर्जरम्
अतिक्लिन्नं ग्लानिकरं युक्तियुक्तं हि भोजनम् १४०

अतिद्रुताशिताहारे गुणान्दोषान्न विन्दति

भोज्यं शीतमहृद्यं च स्याद्विलम्बितमश्नतः १४१

मन्दानलो नरो द्रव्यं मात्रागुरु विवर्जयेत्
स्वभावतश्च गुरु यत्तथा संस्कारतो गुरु १४२

मात्रागुरुस्तु मुद्गादिर्माषादिः प्रकृतेर्गुरुः
संस्कारगुरु पिष्टान्नं प्रोक्तमित्युपलक्षणम् १४३

आहारं षड्विधं चूष्यं पेयं लेह्यं तथैव च
भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्याद्यथोत्तरम् १४४

गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते
द्रवो द्रवोत्तरश्चापि न मात्रागुरुरिष्यते १४५

विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति १४६

शुष्कं निरुद्धं विष्टम्भि वह्निव्यापादकृद्भवेत् १४७

न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून्
न जलान्तरितानद्भिः सक्तूनद्यान्न केवलान् १४८

पुनर्दानं पृथक्पानं सामिषं पयसा निशि
सदन्तच्छेदमुष्णं च सप्त सक्तुषु वर्जयेत् १४९

सक्तूनामाशु जीर्येत मृदुत्वादवलेहिका १५०

यथाकालेऽतिमात्रं यत् तद्भवेद्विषमाशनम्
बहुस्तोकमकाले वा ज्ञेयं तद्विषमाशनम् १५१

आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम्
हीनमात्रं तनोःकार्श्यं करोति च बलक्षयम् १५२

अप्राप्तकाले भुञ्जानो ह्यसमर्थतनुर्नरः
तांस्तान् व्याधीनवाप्नोति मरणं चाधिगच्छति १५३

कालेतीतेश्नतो जन्तोर्वायुनोपहतेऽनले
कृच्छ्राद्विपच्यते भुक्तं न स्याद्भोक्तुं पुनः स्पृहा १५४

कुक्षेर्भागद्वयं भोज्यैस्तृतीये वारि पूरयेत्
वायोः सञ्चारणार्थाय चतुर्थमवशेषयेत् १५५

रसेनान्नस्य रसना प्रथमेनोपतर्पिता
न तथा स्वादमाप्नोति ततः शोध्याम्बुनान्तरा १५६

अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः
तस्मान्नरो वह्निविवर्धनाय मुहुर्मुहुर्वारि पिबेदभूरि १५७

भुक्तस्यादौ जलं पीतं कार्श्यमन्दाग्निदोषकृत्
मध्येऽग्निदीपनं श्रेष्ठमन्ते स्थौल्यकफप्रदम् १५८

समस्थूलकृशा भुक्तमध्यान्तप्रथमाम्बुपाः १५९

तृषितस्तु न चाश्नीयात्क्षुधितो न पिबेज्जलम्
तृषितस्तु भवेद्गुल्मी क्षुधितस्तु जलोदरी १६०

अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम्
मध्येऽम्ललवणौ पश्चात्कटुतिक्तकषायकान् १६१

दुग्धं स्वादुरसं स्निग्धमोजस्यं धातुवर्धनम्
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् १६२

विदाहीन्यन्नपानानि यानि भुंङ्क्ते हि मानवः
तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् १६३

कुर्यात्क्षीरान्तमाहारं न दध्यन्तं कदाचन
लवणाम्लकटूष्णानि विदाहीन्यत्ति यानि तु
तद्दोषं हर्तुमाहारं मधुरेण समापयेत् १६४

बलवच्छत्रुविनाशनेन शत्रुहन्तुः क्षीणता च दृश्यते तथा च
नाशनात्प्रत्यनीकस्य स्वयं च क्षीयते यथा
वह्निसन्तप्तलोहस्य तप्ततां नाशयेज्जलम् १६५

ननु भोजनावसानसमये प्रयुक्ताः कटुतिक्तकषायरसाः कफं
शमयिष्यन्ति वातस्य वृद्धिं विधास्यन्तीति चेतै् तन्न
कट्वादीनां क्षीणशक्तित्वात्  तथा च
यदेकं नाशयेद्दोषं तदन्यं वर्धयेत्कुतः
नाशने ह्येकदोषस्य यतस्तत्क्षीणशक्तिकम् १६६

जग्धाः सर्वेऽपि गच्छन्ति बलिनो वश्यतां रसाः
यथा प्रकुपिता दोषा वशं यान्ति बलीयसः १६७

एवं भुक्त्वा समाचामेद्रूक्षग्रहणपूर्वकम्
भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् १६८

दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः
कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् १६९

दन्तलग्नमनिर्हार्यं लेपं मन्येत दन्तवत्
न तत्र बहुशः कुर्याद्यत्नं निर्हरणं प्रति १७०

आचम्य जलयुक्ताभ्यां पाणिभ्यां चक्षुषी स्पृशेत्
भिुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते
अचिरेणैव तद्वारि तिमिराणि व्यपोहति १७१

भुक्त्वा च संस्मरेन्नित्यमगस्त्यादीन्सुखावहान् १७२

विष्णुरात्मा तथैवान्नं परिणामश्च वै यथा
सत्येन तेन मद्भुक्तं जीर्यत्वन्नमिदं तथा १७३

अगस्तिरग्निर्वडवानलश्च भुक्तं ममान्नं जरयन्त्वशेषम्
सुखं च मे तत्परिणामसम्भवं यच्छन्त्वरोगं मम चास्तु देहम् १७४

अङ्गारकमगस्तिं च पावकं सूर्यमश्विनौ
पञ्चैतान्संस्मरेन्नित्यं भुक्तं तस्याशु जीर्यति १७५

इत्युच्चार्य स्वहस्तेन परिमार्ज्य तथोदरम्
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः १७६

जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेधते
भुक्तमात्रे कफश्चापि क्रमोऽय भोजनोपरि १७७

धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः
पूगैः कर्पूरकस्तूरीलवंगसुमनः फलैः १७८

फलैः कटुकषायैर्वा मुखवैशद्यकारिभिः
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः १७९

रतौ सुप्तोत्थिते स्नाते भुक्तेवान्ते च संगरे
सभायां विदुषां राज्ञां कुर्यात्ताम्बूलचर्वणम् १८०

ताम्बूलमुक्तं तीक्ष्णोष्णं रोचनं तुवरं सरम्
तिक्तं क्षारोषणं कामरक्तपित्तकरं लघु १८१

वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्
मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् १८२

हनुदन्तमलध्वंसि जिह्वेन्द्रियविशोधनम्

मुखप्रसेकशमनं गलामयविनाशनम् १८३

नवं तदेव मधुरं कषायानुरसं गुरु
बलासजननंप्रायः पत्रशाकगुणं स्मृतम् १८४

वङ्गदेशोद्भवं पर्णं परं कटुरसं सरम्
पाचनं पित्तजनकमुष्णं कफहरं स्मृतम् १८५

पर्णं पुराणमकटु क्षुल्लकं तनु पाण्डुरम्
विशेषाद्गुणवद्वेद्यमन्वद्धीनगुणं स्मृतम् १८६

पूगं गुरु हिमं रूक्षं कषायं कफपित्तनुत्
मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् १८७

पूगं स्यात् दृढमध्यं यत्स्विन्नं वाऽपि त्रिदोषनुत्
सरसङ्गुर्वभिष्यन्दि तद् भृशं वह्निनाशनम् १८८

खदिरं कफपित्तघ्नश्चूर्णं वातबलासनुत्
संयोगतस्त्रिदोषघ्नं सौमनस्यं करोति च १८९

मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम्
प्रभाते पूगमधिकं मध्याह्ने खदिरं तथा
निशासु चूर्णमधिकं ताम्बूलं भक्षयेत्सदा १९०

आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता
तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत् १९१

पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः
पर्णमध्यं हरत्यायुः शिरा बुद्धि विनाशिनी १९२

आद्यं विषोपमं पीतं द्वितीयं भेदि दुर्जरम्

तृतीयादनुपातव्यं सुधातुल्यं रसायनम् १९३

ताम्बूलं नातिसेवेत न विरिक्तो बुभुक्षितः १९४

देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः
शोषः पित्तानिलास्रं स्यादतिताम्बूलचर्वणात् १९५

ताम्बूलं न हितं दन्तदुर्बलेक्षणरोगिणाम्
विषमूर्च्छामदार्त्तानां क्षयिणां रक्तपित्तिनाम् १९६

भुक्त्वा शतपदं गच्छेच्छनैस्तेन तु जायते
अन्नसंघातशैथिल्यं ग्रीवाजानुकटीषु च १९७

भुक्त्वोपविशतस्तन्द्रा शयानस्य तु पुष्टता
आयुश्चंक्रममाणस्य मृत्युर्धावति धावतः १९८

श्वासानष्टौ समुत्तानस्तान् द्विःपार्श्वे तु दक्षिणे
ततस्तद्द्विगुणान्वामे पश्चात्स्वप्याद्यथासुखम् १९९

वामदिशायामनलो नाभेरूर्ध्वेऽस्ति जन्तूनाम्
तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम् २००

त्रिदोषशमनी षट्वा तूली वातकफापहा
भूशय्या वृंहणी वृष्या काष्ठपट्टी तु वातला २०१

भूशय्या वातलाऽतीवरूक्षा पित्तास्रनाशिनी
सुशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम्
श्रमानिलहरं वृष्यं विपरीतमतोऽन्यथा २०२

संवाहनं मांसरक्तत्वक्प्रसादकरं परम्
प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम् २०३

प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपित्तनुत्
स्वेदमूर्च्छापिपासाघ्नमप्रवातमतोऽन्यथा २०४

सुखं प्रवातं सेवेत ग्रीष्मे शरदि चान्तरा
निर्वातमायुषे सेव्यमारोग्याय च सर्वदा २०५

पूर्वाऽनिलो गुरुः सोष्णः स्निग्धः पित्तास्रदूषकः
विदाही वातलः श्रान्तिकफशोषवतां हितः २०६

स्वादुः पटुरभिष्यन्दी त्वग्दोषार्शोविषकृमीन्
सन्निपातं ज्वरं श्वासमामवातं च कोपयेत् २०७

दक्षिणः पवनः स्वादुः पित्तरक्तहरो लघुः
वीर्येण शीतलो बल्यश्चक्षुष्यो न तु वातलः २०८

पश्चिमः पवनस्तीक्ष्णः शोषणो बलहृल्लघुः
मेदः पित्तकफध्वंसी प्रभञ्जनविवर्धनः २०९

उत्तरो मारुतः शीतः स्निग्धो दोषप्रकोपकृत्
क्लेदनः प्रकृतिस्थानां बलदो मधुरो मृदुः २१०

आग्नेयो दाहकृद्रूक्षो नैर्ऋतो न विदाहकृत्
वायव्यस्तु भवेत्तिक्त एशानः कटुकः स्मृतः २११

विष्वग्वायुरनायुष्यः प्राणिनां बहुरोगकृत्
अतस्तं नैव सेवेत सेवितः स्यान्न शर्मणे २१२

व्यजनस्यानिलो दाहस्वेदमूर्च्छाश्रमापहः
तालवृन्तभवो वातस्त्रिदोषशमको मतः २१३

वंशब्यजनजस्तूष्णो रक्तपित्तप्रकोपणः

चामरो वस्त्रसम्भूतो मायूरो वेत्रजस्तथा २१४

पूते दोषजिता वाताः स्निग्धाः हृद्याः सुपूजिताः २१५

दिवा स्वापं न कुर्वीत यतोसौ स्यात्कफावहः
ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नो निषिध्यते २१६

उचितो हि दिवास्वप्नो नित्यं येषां शरीरिणाम्
वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा २१७

व्यायामप्रमदाऽध्ववाहनरतान् क्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान्
क्षीणान् क्षीणकफाञ्छिशून्मदहतान्वृद्धान् रसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान्कामं दिवा स्वापयेत् २१८

दिवा वा यदि वा रात्रौ निद्रा सात्मीकृता तु यैः
न तेषां स्वपतां दोषो जाग्रतां चोपजायते २१९

भोजनानन्तरं निद्रा वातं हरति पित्तहृत्
कफं करोति वपुषः पुष्टिं सौख्यं तनोति हि २२०

शयनं पित्तनाशाय वातनाशाय मर्दनम्
वमनं कफनाशाय ज्वरनाशाय लङ्घनम् २२१

आसीनं घूर्णितं यत्तु नाभिष्यन्दि न रूक्षणम् २२२

शब्दान् स्पर्शांश्च रूपाणि रसान्गन्धान्मनःप्रियान्
भुक्तवानपि सेवेत तेनान्नं साधु तिष्ठति २२३

शब्दः स्पर्शस्तथा रूपं रसो गन्धो जुगुप्सितः
भुक्तमप्रयतं चान्नमतिहास्यं च वामयेत् २२४

शयनं चाशनं चाति न भजेन्न द्रवाधिकम्
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् २२५

व्यायामं च व्यवायं च धावनं यानमेव च
युंद्धं गीतं च पाठं च मुहूर्त्तं भुक्तवांस्त्यजेत् २२६

अत्यम्बुपानाद्विषमाशनाच्च सन्धारणात् स्वप्नविपर्ययाच्च
कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य २२७

ईर्ष्याभय क्रोधसमन्वितेन लुब्धेन रुग्दैन्यनिपीडितेन
विद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक्परिपाकमेति २२८

अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते २२९

प्राग्भुक्ते चानले मन्दे द्विरह्नि न समाहरेत् २३०

पूर्व भुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् २३१

सायमाशे त्वजीर्णे तु प्रातर्भुक्तं विषोपमम् २३२

भवेद्यदि प्रातरजीर्णशङ्का तदाऽभयां नागरसैन्धवाभ्याम्
विचूर्णितां शीतजलेन भुक्त्वा भुञ्जीत चान्नं मितमन्नकाले २३३

आयुःक्षयभयाद्विद्वान्नाह्नि सेवेत कामिनीम्
अवशो यदि सेवेत तदा ग्रीष्मवसन्तयोः २३४

आस्या वर्णकफस्थौल्यसौकुमार्यसुखप्रदा
अध्वा वर्णकफस्थौल्यसौकुमार्यविनाशनः २३५

यत्तु चंक्रमणं नातिदेहपीडाकरं भवेत्
तदायुर्बलमेधाऽग्निप्रदमिन्द्रियबोधनम् २३६

उष्णीषं कान्तिकृत्केश्यं रजोवातकफापहम्
लघु यच्छस्यते तस्माद् गुरु पित्ताद्धिरोगकृत् २३७

उपानद्धारणं नेत्र्यमायुष्यं पादरोगहृत्
सुखप्रचारमोजस्यं वृष्यं च परिकीर्तितम् २३८

पादाभ्यामनुपानद्भ्यां सदा चंक्रमणं नृणाम्
अनारोग्यमनायुष्यमिन्द्रियघ्नमदृष्टिदम् २३९

छत्रस्य धारणं वर्षातपवातरजोऽपहम्
हिमघ्नं हितमक्ष्णोश्च मङ्गल्यमपि कीर्त्तितम् २४०

सत्त्वोत्साहवलस्थैर्यधैर्यतेजोविवर्धनम्
अवष्टम्भकरं चापि भयघ्नं दण्डधारणम् २४१

ऊर्ध्वाच्छादनसंयुक्ता शिबिका सर्ववल्लभा
तस्यामारोहणं नृणां त्रिदोषशमकं मतम् २४२

वातश्लेष्मगदार्त्तानामहिता भ्रमकृत्तरिः
पित्तानिलकरो हस्ती लक्ष्म्यायुःपुष्टिवर्द्धनः २४३

घोटकारोहणं वातपित्ताग्निश्रमकृन्मतम्
मेदोवर्णकफघ्नं च हितं तद्बलिनां परम् २४४

आतपः स्वेदमूर्च्छाऽस्रपित्ततृष्णाक्लमश्रमान्
दाहं विवर्णतां कुर्यादेतांश्छाया व्यपोहति २४५

वृष्टिर्वृष्या हिमा बल्या निद्राऽलस्यविधायिनी
भयावहा मोहकरी कुहेलि कफवातला २४६

अग्निर्वातकफस्तम्भशीतवेपथुनाशनः

ग्रामाभिष्यन्दशमनो रक्तपित्तप्रकोपणः २४७

सद्यः श्लेष्मकरो धूमो नेत्रयोरहितो भृशम्
शिरोगौरवकृच्चापि वातपित्तं च कोपयेत् २४८

मैत्री सद्भिः समं कुर्यात्स्नेहं सत्सु तु सर्वथा
संसर्गं साधुभिः कुर्यादसत्सङ्गं परित्यजेत् २४९

सेवेत देवभूदेववृद्धवैद्यनृपातिथीन्
विमुखान्नार्थिनः कुर्यान्नावमन्येत कानपि २५०

गुरूणां सन्निधौ तिष्ठेत्सदैव विनयान्वितः
पादप्रसारणादीनि तत्र नैव समाचरेत् २५१

ग्रपकारपरेऽपि स्यादुपकारपरः पुमान्
ग्रात्मवत्सकलान्पश्येद्वैरिणो दूरतो वसेत् २५२

न कञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम्
प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः २५३

नात्मानमुदके पश्येन्न नग्नः प्रविशेज्जलम्
तथा नाज्ञातगाम्भीर्यं न हिंस्त्रप्राणिसेवितम् २५४

काले हितं मितं सत्यं संवादि मधुरं वदेत्
भुञ्जीत मधुरप्रायं स्निग्धं काले हितं मितम् २५५

न रात्रौ दधि भुञ्जीत न च निर्लवणं तथा
नामुद्गसूपं नाक्षौद्रं न चाप्यघृतशर्करम् २५६

जनस्याशयमालक्ष्य यो यथा परितुष्यति
तं तथैवानुवर्तेत पराराधनपरिडतः २५७

नैकः सुखी न सर्वत्र विश्वस्तो न च शङ्कितः
नोद्यमेविरमेत्क्वापि हेतावीर्ष्येत्फले न तु २५८

वेगान्न धारयेज्ञातु मनोवेगान्विधारयेत्
न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् २५९

वर्षाऽतपादिषु च्छत्री दण्डी रात्रौ भयेषु च
सोपानत्कस्तनुं रक्षेद्विचरेद्युगमात्रदृक् २६०

नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत्
सन्दिग्धनावं वृक्षं च नारोहेद्दुष्टयानकम् २६१

नासंवृतमुखः कुर्यात्सभायां च विचक्षणः
कासं हासं तथोद्गारं जृम्भणं क्षवथुं तथा २६२

नासिकां न विकुष्णीयान्नासीतोत्कटकः क्वचित्
नोर्ध्वजानुश्चिरं तिष्ठेन्न नखेन लिखेद्भुवम् २६३

सम्मार्जनीरजो नैव देहे दद्यात्कदाचन
न नखेन तृणं छिन्द्यान्नोच्छिष्टो ब्राह्मणं स्पृशेत् २६४

नोपरक्तं न चोद्यन्तं नास्तं यातं दिवाकरम्
सर्वथा न समीक्षेत न जले प्रतिबिम्बितम् २६५

नेक्षेत सततं सूक्ष्मं दीप्तामेध्याप्रियाणि च
पौरन्दरं धनुर्नैव दर्शयेत्कमपि क्वचित् २६६

नेच्छेद्बलवता युद्धं न भारं शिरसा वहेत्
गात्रं न वादयेत्केशान्हस्तेन धुनुयान्न च २६७

न गच्छेत्पूज्ययोर्मध्ये दम्पत्योरन्तरेण च

रिपोरन्नं न भुञ्जीत गणिकाऽन्नमपि क्वचित् २६८

प्रतिभूर्न भवेत्क्वापि न च साक्षी वृथा भवेत् २६९

स्थागं न धारयेज्जातु द्यूतं दूरात्परित्यजेत् २७०

विश्वासं नाचरेत्स्त्रीणां ताः स्वतंत्रा न चारयेत्
रक्षणीयाः सदा यत्नाद्यौवने तु विशेषतः २७१

न भिन्ने शयने स्वप्यान्नानेकविवरेऽपि च
नैको देवालये नैव रात्रौ तरुतलेऽपि च २७२

एवं दिनानि गमयेत्सदाचारपरः सदा
ततो रात्रिप्रयुक्तानि कुर्यात्कर्माणि मानवः २७३

इत्याचारं समासेन भाषितं यः समाचरेत्
स विंदत्यायुरारोग्यं प्रीतिं धर्मं धनं यशः २७४

एतानि पञ्च कर्माणि सन्ध्यायां वर्जयेद् बुधः
आहारं मैथुनं निद्रां संपाठं गतिमध्वनि २७५

भोजनाज्जायते व्याधिर्मैथुनाद्गर्भवैकृतिः
निद्रया निःस्वता पाठादायुर्हानिर्गतेर्भयम् २७६

ज्योत्स्ना शीता स्मरानन्दप्रदा तृट्पित्तदाहहृत्
ततो हीनगुणः कुर्यादवश्यायोऽनिलं कफम् २७७

तमो भयावहं मोहदिङ्मोहजनकं भवेत्
पित्तहृत्कफहृत्कामवर्धनं क्लमकृच्च तत् २७८

रात्रौ च भोजनं कुर्यात्प्रथमप्रहरान्तरे
किञ्चिदूनं समश्नीयाद् दुर्जरं तत्र वर्जयेत् २७९

शरीरे जायते नित्यं देहिनः सुरतस्पृहा
अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनोः २८०

बालेति गीयते नारी यावद्वर्षाणि षोडश
ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि २८१

तदूर्ध्वमधिरुढा स्यात्पञ्चाशद्वत्सरावधि
वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्जिता २८२

निदाघशरदोर्बाला हिता विषयिणां मता
तरुणी शीतसमये प्रौढा वर्षावसन्तयोः २८३

नित्यं बाला सेव्यमाना नित्यं वर्धयते बलम्
तरुणी ह्रासयेच्छक्तिं प्रौढोद्भावयते जराम् २८४

सद्यो मांसं नवं चान्नं बाला स्त्री क्षीरभोजनम्
घृतमुष्णोदके स्नानं सद्यः प्राणकराणिषट् २८५

पूतिमांसं स्त्रियो वृद्धा बालाऽकस्तरुणं दधि
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् २८६

वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात्
वयोधिकां स्त्रियं गत्वा तरुणः स्थविरायते २८७

आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः २८८

सेवेत कामतः कामं बलाद्वाजीकृतो हिमे
प्रकामं तु निषेवेत मैथुनं शिशिरागमे २८९

त्र्यहाद्वसन्तशरदोः पक्षाद् वृष्टिनिदाघयोः २९०

त्रिभिस्त्रिभिरहोभिर्हि समेयात्प्रमदां नरः
सर्वेष्वृतुषु घर्मे तु पक्षात्पक्षाद् व्रजेद् बुधः २९१

शीते रात्रौ दिवा ग्रीष्मे वसन्ते तु दिवा निशि
वर्षासु वारिदध्वाने शरत्सु सरसः स्मरः २९२

उपेयात्पुरुषो नारीं संध्ययोर्न च पर्वसु
गोसर्गे चार्द्धरात्रे च तथा मध्यदिनेऽपि च २९३

विहारं भार्यया कुर्याद् देशेऽतिशयसंवृते
रम्ये श्राव्याङ्गनागाने सुगन्धे सुखमारुते २९४

देशे गुरुजनासन्ने विवृतेऽतित्रपाकरे
श्रूयमाणे व्यथाहेतुवचने न रमेत ना २९५

स्नातचन्दनलिप्ताङ्गः सुगन्धः सुमनोऽन्वितः
भुक्तवृष्यः सुवसनः सुवेषः समलंकृतः २९६

ताम्बूलवदनः पत्न्यामनुरक्तोऽधिकस्मरः
पुत्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे २९७

अत्याशितोऽधृतिः क्षुद्वान्सव्यथाङ्गः पिपासितः
बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् २९८

भार्यां रूपगुणोपेतां तुल्यशीलां कुलोद्भवाम्
अतिकामोऽभिकामां तु हृष्टो हृष्टामलंकृताम्
सेवेत प्रमदां युक्त्या वाजीकरणवृंहितः २९९

रजस्वलामकामां च मलिनामप्रियां तथा ३००

वर्णबृद्धां वयोवृद्धां तथा व्याधिप्रपीडिताम्

हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम् ३०१

सगोत्रां गुरुपत्नीं च तथा प्रव्रजितामपि
नाधिगच्छेत् पुमान्नारीं भूरिवैगुण्यशङ्कया ३०२

रजस्वलां गतवतो नरस्यासंयतात्मनः
दृष्ट्यायुस्तेजसां हानिरधर्मश्च ततो भवेत् ३०३

लिगिनीं गुरुपत्नीं च सगोत्रामथ पर्वसु
वृद्धां च सन्ध्ययोश्चापि गच्छतो जीवनक्षयः ३०४

गर्भिण्यां गर्भपीडा स्याद्व्याधितायां बलक्षयः ३०५

हीनाङ्गीं मलिनां द्वेष्यां क्षामां वन्ध्यामसंवृते
देशेऽभिगच्छतो रेतः क्षीणं म्लानं मनो भवेत् ३०६

क्षुधितः क्षुब्धचित्तश्च मध्याह्ने तृषितोऽबलः
स्थितस्य हानिं शुक्रस्य वायोः कोपं च विन्दति ३०७

व्याधितस्य रुजा प्लीहा मूर्च्छा मृत्युश्च जायते
प्रत्यूषे चार्धरात्रे च वातपित्ते प्रकुप्यतः ३०८

तिर्यग्योनावयोनौ वा दुष्टयोनौ तथैव च
उपदंशस्तथा वायोः कोपः शुक्रसुखक्षयः ३०९

उच्चारिते मूत्रिते च रेतसश्च विधारणे
उत्ताने च भवेच्छीघ्रं शुक्राश्मर्यास्तु सम्भवः ३१०

सर्वमेतत्त्यजेत्तस्माद्यतो लोकद्वयाहितम्
शुक्रं तूपस्थितं मोहान्न सन्धार्यं कदा चन ३११

स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम्

वातो मांसरसः स्वप्नः सुरतान्ते हिता श्रमी ३१२

शूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयाः
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः ३१३

रात्रौ जागरणं रूक्षं कफदोषविषार्तिजित्
निद्रा तु सेविताकाले धातुसाम्यमतन्द्रिताम् ३१४

पुष्टिं वर्णं बलोत्साहं वह्निदीप्तिं करोति हि ३१५

यो लेढि शयनसमये मधुमिश्रं बीजपूरदलचूर्णम्
स तु लज्जाकरवातप्रसरनिरोधात्सुखं स्वपिति ३१६

सवितुः समुदयकाले प्रसृतीः सलिलस्य यः पिबेदष्टौ
रोगजरापरिमुक्तो जीवेद्वत्सरशतं साग्रम् ३१७

अर्शःशोथग्रहण्यो ज्वरजठरजराकुष्ठमेदोविकाराः
मूत्राघातास्रपित्तश्रवणगलशिरःश्रोणिशूलाक्षिरोगाः
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो
स्तांस्तानभ्यासयोगादपहरति पयः पीतमन्ते निशायाः ३१८

विगतघननिशीथे प्रातरुत्थाय नित्यं पिबति खलु नरो यो घ्राणरन्ध्रेण वारि
स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो वलिपलितविहीनः सर्वरोगैर्विमुक्तः ३१९

पातव्यं नासया नीरं प्रसृतित्रयमात्रया ३२०

व्यङ्गवलीपलितघ्नंपीनसवैस्वर्यकासशोथहरम्
रजनीक्षयेऽम्बुनस्यं रसायनं दृष्टिसञ्जननम् ३२१

स्नेहे पीते क्षते शुद्धावाध्माने स्तिमितोदरे

हिक्कायां कफवातोत्थे व्याधौ तद्वारि वारयेत् ३२२

क्षयकोपशमा यस्मिन्दोषाणां सम्भवन्ति हि
ऋतुषट्कं तदाख्यातं रवेः राशिषु संक्रमात् ३२३

ग्रीष्मो मेषबृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ
सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयोः शरत् ३२४

धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः ३२५

शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमाः
माघादिमासयुग्मं स्युर्ऋतवः षट् क्रमादमी ३२६

गङ्गाया दक्षिणे देशे वृष्टेर्बहुलभावतः
उभौ मुनिभिराख्यातौ प्रावृड्वर्षाभिधावृतू ३२७

तिस्याएवोत्तरेदेशे हिमप्रचुरभावतः
एतावुभौ समाख्यातौ हेमन्तशिशिरावृतू ३२८

उत्तरायणमाद्यैस्तैः परैः स्याद्दक्षिणायनम्
आद्यमुष्णं बलहरं ततोऽन्यद्बलदं हिमम् ३२९

हेमन्तं शीतलः स्निग्धः स्वादुर्जठरवह्निकृत्
शिशिरः शीतलोऽतीव रूक्षो वाताग्निवर्धनः ३३०

वसन्तो मधुरः स्निग्धः श्लेष्मवृद्धिकरश्च सः
ग्रीष्मो रूक्षोऽतिकटुकः पित्तकृत्कफनाशनः ३३१

वर्षाः शीता विदाहिन्यो वह्निमान्द्यानिलप्रदाः
शरदुष्णा पित्तकर्त्री नृणां मध्यबलावहा ३३२

चयप्रकोपोपशमा वायोर्ग्रीष्मादिषु त्रिषु

वर्षाऽदिषु च पित्तस्य श्लेष्मणः शिशिरादिषु ३३३

चीयते लघुरूक्षाभिरोषधीभिः समीरणः
तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ३३४

अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम्
पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ३३५

चीयते स्निग्धशीताभिरुदकौषधिभिः कफः
तुल्ये च काले देहे च स्कन्नत्वान्न प्रकुप्यति ३३६

हिमे याति शमं पित्तं वायुः श्लेष्मा च चीयते
स वायुः शिशिरे कोपं यात्येवोपचितः कफः ३३७

हेमन्ते सञ्चितः श्लेष्मा शिशिरे त्वतिचीयते
शीतस्निग्धगुरुद्रव्यैः शैत्यस्कन्नो न कुप्यति ३३८

इति कालस्वभावोऽयमाहारादिवशात्पुनः
चयादीन् यान्ति सद्योऽपि दोषाः काले विशेषतः ३३९

चयकोपमशमान्दोषा विहाराहारसेवनैः
समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्ययम् ३४०

स्वस्थानस्थस्य दोषस्य वृद्धिः स्यात्स्तब्धकोषता
पीतावभासता वह्निमन्दता चाङ्गगौरवम् ३४१

आलस्यं चयहेतौ तु द्वेषश्च चयलक्षणम्
सञ्चये ऽपहृता दोषा लभन्ते नोत्तरां गतिम् ३४२

ते तूत्तरासु गतिषु भवन्ति बलवत्तराः ३४३

वर्षासुप्रबलो वायुस्तस्मान्मिष्टादयस्त्रयः

रसाः सेव्या विशेषेण पवनस्योपशान्तये ३४४

भवेद्वर्षासु वपुषः क्लिन्नत्वं यद्विशेषतः
तत्क्लेदशान्तये सेव्या अपि कट्वादयस्त्रयः ३४५

स्वेदनं मर्दनं सेव्यं दध्युष्णंजाङ्गलामिषम्
शालयो यवगोधूमा जलं कौपं जलं च्युतम् ३४६

न भजेत्पूर्वपवनं वृष्टिं घर्मं हिमं श्रमम्
नदीतीरं दिवास्वप्नं रूक्षं नित्यं च मैथुनम् ३४७

सर्पिः स्वादुकषायतिक्तकरसा यच्छीतलं यल्लघु
क्षीरं स्वच्छसितैक्षवः पटुरसः स्वल्पं पलं जाङ्गलम्
गोधूमा यवमुद्गशालिसहिता नादेयमंशूदकं
चन्द्रश्चन्दनमिन्दुरादिरजनी माल्यं पटो निर्मलः ३४८

दिविसेऽककरैर्जुष्टं निशि शीतकरांशुभिः
ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम्
विश्रामः सुहृदां गणेषु मधुरा वाचः सरः क्रीडनं
पित्तानां च विरेचनं बलवतो युक्तं शिरामोक्षणम्
एतान्यत्र घनावसानसमयेपथ्यानि मुञ्चेद्दधिव्यायामाम्लकटूष्णतीक्ष्ण
दिवसस्वप्नं हिमञ्चातपम् ३४९

इक्षवः शालयो मुद्गाः सरोऽम्भ क्वथितं पयः
शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः ३५०

प्रातर्भोजनमम्लमिष्टलवणानभ्यङ्गघर्मश्रमान्
गोधूमैक्षवशालिमाषपिशितं पिष्टं नवान्नं तिलान्
कस्तूरीं वरकुङ्कमागुरुयुतामुष्णाम्बुशौचं तथौ स्निग्धं स्त्रीषु सुखं
गुरूष्णवसनं सेवेत हेमन्तके ३५१

शिशिरे शीतमधिकं रौद्त्यं चादानकालजम्
विशेषतस्ततस्तत्र हेमन्तस्य मतो विधिः ३५२

वान्तिं नस्यमथाभयां च मधुना व्यायाममुद्वर्त्तनं
संसेवेत मधौ कफघ्नकवलं शूल्यं पलं जाङ्गलम्
गोधूमान्बहुशालिभेदसहितान्मुद्गान्यवान्षष्टिकां
ल्लेपश्चन्दनकुङ्कुमागुरुकृतं रूक्षं कटूष्णं लघु ३५३

मिष्टमम्लं दधिस्निग्धं दिवास्वप्नं च दुर्जरम्
अवश्यायमपि प्राज्ञो वसन्ते परिवर्जयेत् ३५४

स्वादुस्निग्धहिमं लघु द्रवमयं द्रव्यं रसालां सितां-
सक्तुंक्षीरमजाङ्गलानि सितया शालि रसं मांसजम्
शीतांशुं शयनं दिवा मलयजं शीतं पयः पानकं
सेवेतोष्णदिने त्यजेत्तु कटुकक्षाराम्लघर्मश्रमान् ३५५

ऋतुष्वेषु य एतैस्तु विधिभिर्वर्त्तते नरः
दोषानृतुकृतान्नैव लभते स कदाचन ३५६

इति श्रीलटकन तनय श्रीमन्मिश्रभाव विरचिते भावप्रकाशे
दिनचर्यादिप्रकरणं पञ्चमम् ५

अथ षष्ठं मिश्रप्रकरणम् ६

रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता
रोगा दुःखस्य दातारो ज्वरप्रभृतयो हि ते १

ते च स्वाभाविकाः केचित्केचिदागन्तवः स्मृताः
मानसाः केचिदाख्याताः कथिताः केऽपि कायिकाः २

कर्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे
कर्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाः स्मृताः ३

कर्मक्षयात्कर्मकृता दोषजाः स्वस्वभेषजैः
कर्मदोषोद्भवा यान्ति कर्मदोषक्षयात् क्षयम् ४

साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः स्मृताः
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ५

यापनीयं तु तं विद्यात्क्रिया धारयते हि यम्
क्रियायां तु निवृत्तायां सद्यो यश्च विनश्यति ६

प्राप्ता क्रिया धारयति सुखिनं याप्यमातुरम्
प्रपतिष्यदिवागारं स्तम्भो यत्नेन योजितः ७

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ८

रोगारम्भकदोषस्य प्रकोपादुपजायते
योऽन्यो विकारः स बुधैरुपद्रव इहोदितः ९

रोगिणो मरणं यस्मादवश्यम्भावि लक्ष्यते
तल्लक्षणमरिष्टं स्याद्रिष्टं चापि तदुच्यते १०

या क्रिया व्याधिहरणी सा चिकित्सा निगद्यते
दोषधातुमलानां या साम्यकृत्सैव रोगहृत् ११

याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः
सा चिकित्सा विकाराणां कर्म तद्भिषजां मतम् १२

या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च
सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् १३

जातमात्रश्चिकित्स्यः स्यान्नोपेक्ष्योऽल्पतया गदः

वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ १४

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्
ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत् १५

यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक्
अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया १६

भेषजं केवलं कर्तुं यो जानाति न चामयम्
वैद्यकर्म स चेत्कुर्याद्वधमर्हति राजतः १७

यस्तु केवलरोगज्ञो भेषजेष्वविचक्षणः
तं वैद्यं प्राप्य रोगी स्याद्यथा नौर्नाविकं विना १८

यस्तु केवलशास्त्रज्ञः क्रियास्वकुशलो भिषक्
स मुह्यत्यातुरं प्राप्य तथा भीरुरिवाहवम् १९

यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः
देश कालविभागज्ञस्तस्य सिद्धिर्न संशयः २०

आदावन्ते रुजां ज्ञाने प्रयतेत चिकित्सकः
भेषजानां विधानेन ततः कुर्याच्चिकित्सतम् २१

विकारनामाकुशलो न जिह्रीयात्कदाचन
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः २२

नास्ति रोगो विना दोषैर्यस्मात्तस्माच्चिकित्सकः
अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् २३

ये न कुर्वन्त्यसाध्यानां चिकित्सां ते भिषग्वराः
अतो वैद्यैः श्रमः कार्यः साध्यासाध्यपरीक्षणे २४

शीते शीतप्रतीकारमुष्णे तूष्णनिवारणम्
कृत्वा कुर्यात्क्रियां प्राप्तां क्रियाकालं न हापयेत् २५

अप्राप्ते वा क्रियाकाले प्राप्ते वा न क्रिया कृता
क्रियाहीनाऽतिरिक्ता च साध्येष्वपि न सिध्यति २६

विकारेऽल्पे महत्कर्म क्रिया लघ्वी गरीयसि
द्वयमेतदकौशल्यं कौशल्यं युक्तकर्मता २७

क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्
पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः २८

क्रियाभिस्तुल्यरूपाभिर्न क्रियासङ्करो हितः
ताभिस्तु भिन्नरूपाभिः साङ्कर्यं नैव दुष्यति २९

न चैकान्तेन निर्दिष्टे शास्त्रे निविशते बुधः
स्वयमप्यत्र भिषजा तर्कणीयं चिकित्सता ३०

उत्पद्यते च साऽवस्था दोषकालबलं प्रति
यस्यां कार्यमकार्यं स्यात्कर्म कार्यं विवर्जितम् ३१

क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्मः क्वचिद्यशः
कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ३२

आयुर्वेदोदितां युक्तिं कुर्वाणाश्च हिताय ये
पुण्यायुर्वृद्धिसंयुक्ता नीरोगाश्च भवन्ति ते ३३

नैव कुर्वीत लोभेन चिकित्सापुण्यविक्रयम्
ईश्वराणां वसुमतां लिप्सेतार्थं तु वृत्तये ३४

चिकित्सितं शरीरं यो न निष्क्रीणाति दुर्मतिः

स यत्करोति सुकृतं सर्वं तद्भिषगश्नुते ३५

न देशो मनुजैर्हीनो न मनुष्या निरामयाः
ततः सर्वत्र वैद्यानां सुसिद्धा एव वृत्तयः ३६

रोगी दूतो भिषग्दीर्घमायुर्द्रव्यं सुसेवकः
सदौषधं चिकित्साया इत्यङ्गानि बुधा जगुः ३७

रोगो यस्यास्तिरोगी स सचिकित्स्यस्तु यादृशः
यादृशश्चाचिकित्स्योऽपि वक्ष्यमाणो निशम्यताम् ३८

निजप्रकृतिवर्णाभ्यां युक्तः सत्त्वेन चक्षुषा
चिकित्स्यो भिषजां रोगी वैद्यभक्तो जितेन्द्रियः ३९

आयुष्मान्सत्त्ववान्साध्यो द्रव्यवान्मित्रवानपि
चिकित्स्यो भिषजां रोगी वैद्यवाक्यकृदास्तिकः ४०

चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च
शोकाकुलो मुमूर्षुश्च विहीनः करणैश्चः यः ४१

वैरी वैद्यविदग्धश्च श्रद्धाहीनश्च शङ्कितः
भिषजामविधेयः स्युर्नोपक्रम्या भिषग्विधाः ४२

एतानुपाचरन् वैद्यो वहून् दोषानवाप्नुयात् ४३

यश्चिकित्सकमानेतुं याति दूतः स कथ्यते
स च यादृक् समुचितस्तादृगत्र निगद्यते ४४

दूताः सुजातयोऽव्यङ्गाः पटवो निर्मलाम्बराः
सुखिनोऽश्ववृषारूढाः शुभ्रपुष्पफलैर्युताः ४५

सजातयः सुचेष्टाश्च सजीवदिशि सङ्गताः

भिषजं समये प्राप्ता रोगिणः सुखहेतवे ४६

वैद्याह्वानाय दूतस्य गच्छतो रोगिणः कृते
न शुभं सौम्यशकुनं प्रदीप्तं तु सुखावहम् ४७

तथाहि रिक्तहस्तो न पश्येत्तुराजानं भिषजं गुरुम्
दैवज्ञं देवतां मित्रं फलेन फलमादिशेत् ४८

चिकित्सां कुरुते यस्तु स चिकित्सक उच्यते
स च यादृक्समीचीनस्तादृशोऽपि निगद्यते ४९

तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयंकृती
लघुहस्तः शुचिः शूरः सज्ञोपस्करभेषजः ५०

प्रत्युत्पन्नमतिर्धीमान् व्यवसाथी प्रियंवदः
सत्यधर्मपरो यश्च वैद्य ईदृक् प्रशस्यते ५१

कुचैलः कर्कशः स्तब्धो ग्रामीणः स्वयमागतः
पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा यदि ५२

व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ५३
भिषगादौ परीक्षेत रुग्णस्यायुः प्रयत्नतः
तत आयुषि विस्तीर्णे चिकित्सा सफला भवेत् ५४

सौम्या दृष्टिर्भवेद्यस्य श्रोत्रं वक्त्रं तथैव च
स्वादु गन्धं विजानाति स साध्यो नात्र संशयः ५५

पाणिपादौ च यस्योष्णौ दाहः स्वल्पतरो भवेत्
जिह्वातु कोमला यस्य स रोगी न विनश्यति ५६

स्वेदहीनो ज्वरो यस्य श्वासो नासिकया चरेत्
कराठश्च कफहीनः स्यात्स रोगी जीवति ध्रुवम् ५७

यस्य निद्रा सुखेन स्याच्छरीरं द्युतिमद्भवेत्
इन्द्रियाणि प्रसन्नानि स रोगी नैव नश्यति ५८

शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत्
तदरिष्टं समासेन व्यासतश्च निबोध मे ५९

शृणोति विविधाञ्छब्दान्विपरीताञ्छृणोति च
यो न शृणोति चाकस्मात्तं वदन्ति गतायुषम् ६०

यस्तूष्णमिव गृह्णाति शीतमुष्णं च शीतवत्
उष्णगात्रोऽतिमात्रं यो भृशं शीतेन कम्पते ६१

प्रहारं नैव जानाति योऽङ्गच्छेदमथापि वा
पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ६२

वर्णान्यता वा राज्यो वा यस्य गात्रे भवन्ति हि
स्नातानुलिप्तं यं चापि भजन्ते नीलमाक्षिकाः ६३

विपरीतेन गृह्णाति रसान्यश्चोपयोजितान्
यो वा रसान्न संवेत्ति तं गतासुं प्रचक्षते ६४

सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धं च सुगन्धवत्
गृह्णाति योऽन्यथा गन्धं शान्ते दीपे निरामयः ६५

रात्रौ सूर्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम्
दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति ६६

विद्युत्वतोऽसितान्मेघान् गगने निर्घने घनान्

विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम् ६७

यश्चानिलं मूर्त्तिमन्तमन्तरिक्षेऽवलोकते
धूमनीहारवासोभिरावृतामिव मेदिनीम् ६८

प्रदीप्तमिव यो लोकं यो वाप्लुतमिवाम्भसा
भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति ६९

यो न पश्यति ऋक्षाणि यश्च देवीमरुन्धतीम्
ध्रुवमाकाशगङ्गां च तं वदन्ति गतायुषम् ७०

आदर्शेऽम्बुनि घर्मे वा छायां यश्च न पश्यति
पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्वजाम् ७१

श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम्
आतुरो लभते मृत्युं स्वस्थो व्याधिमवाप्नुयात् ७२

ह्रीश्रियौ नश्यतो यस्य तेज ओजः स्मृतिः प्रभा
अकस्माच्च भजन्ते यं स गतासुरसंशयम् ७३

यस्याधरौष्ठः पतितः क्षिप्तश्चोर्ध्वं तथोत्तरः
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ७४

आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति वा
खञ्जनप्रतिभा वापि तं गतायुषमादिशेत् ७५

कृष्णा तथाऽनुलिप्ता च जिह्वा शून्या च यस्य वै
कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ७६

कुटिला स्फुटिता वाऽपि शुष्का वा यस्य नासिका
अवस्फूर्जति भग्ना वा स न जीवति मानवः ७७

संक्षिप्ते विषमे स्तब्धे रूक्षे सास्रे च लोचने
स्यातां परिश्रुते यस्य स गतायुर्नरो ध्रुवम् ७८

केशा सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ
लुठन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ७९

नाहरत्यन्नमास्यस्थं न धारयति यः शिरः
एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान्विमुञ्चति ८०

उत्थाप्यमानो बहुशः संमोहं योऽधिगच्छति
बलवान्दुर्बलो वापि तं पक्वं भिषगादिशेत् ८१

निद्रा निरन्तरं यस्य यो जागर्त्ति च सर्वदा
मुह्येद्वा वक्तुकामश्च प्रत्याख्येयः स जानता ८२

उत्तरौष्ठं च यो लिह्यादुत्करांश्च करोतिः यः
प्रेतैर्वा भाषते सायं प्रेतरूपं तमादिशेत् ८३

खेभ्यश्च रोमकूपेभ्यो यस्य रक्तं प्रवर्तते
पुरुषस्याविषार्तस्य स सद्यो जीवितं त्यजेत् ८४

सम्यक् चिकित्स्यमानस्य विकारो योऽभिवर्धते
प्रक्षीणबलमांसस्य लक्षणं तद्गतायुषः ८५

भूताः प्रेताः पिशाचाश्च रक्षांसि विविधानि च
मरणाभिमुखं जन्तुमुपसृत्य च नित्यशः ८६

तानि भेषजवीर्याणि प्रतिघ्नन्ति जिघांसया
तस्मान्मोघाः क्रियाः सर्वा भवन्त्येव गतायुषः ८७

सर्वे द्रव्यमपेक्षन्ते रोगिप्रभृतयो यतः

विना वित्तं न भैषज्यं चिकित्साऽङ्गं ततो धनम् ८८

स्निग्धोऽजुगुप्सुर्बलवान्युक्तो व्याधितरक्षणे
वैद्यवाक्यकृदश्रान्तो युज्यते परिचारकः ८९

वैद्यो व्याधिं हरेद्येन तद्द्रव्यं प्रोक्तमौषधम्
तद्यादृशमवश्यं स्याद्रोगघ्नं तादृशं ब्रुवे ९०

प्रशस्तदेशे सञ्जातं प्रशस्तेऽहनि चोद्धृतम्
अल्पमात्रं बहुगुणं गन्धवर्णरसान्वितम् ९१

दोषघ्नमग्लानिकरमधिकं न विकारि यत्
समीक्ष्य काले दत्तं च भेषजं स्याद् गुणावहम् ९२

आग्नेया विन्ध्यशैलाद्या सौम्यो हिमगिरिः स्मृतः
अतस्तदौषधानि स्युरनुरूपाणि हेतुभिः ९३

अन्येष्वपि प्ररोहन्ति वनेषूपवनेषु च
गृह्णीयात्तानि सुमनाः शुचिः प्रातः सुवासरे ९४

आदित्यसम्मुखो मौनी नमस्कृत्य शिवं हृदि
साधारणधराद्रव्यं गृह्णीयादुत्तराश्रितम् ९५

वल्मीककुत्सितानूपश्मशानोषरमार्गजाः
जन्तुवह्निहिमव्याप्ता नौषध्यः कार्यसाधिकाः ९६

शरद्यखिलकार्यार्थं ग्राह्यंसरसमौषधम्
विरेकवमनार्थं तु वसन्तान्ते समाहरेत् ९७

अतिस्थूलजटा याः स्युस्तासां ग्राह्यास्त्वचो ध्रुवम्
गृह्णीयात्सूक्ष्ममूलानि सकलान्यपि बुद्धिमान् ९८

महान्ति येषां मूलानि काष्ठगर्भाणि सर्वतः
तेषां तु वल्कलं ग्राह्यं ह्रस्वमूलानि सर्वशः ९९

न्यग्रोधादेस्त्वचो ग्राह्या सारःस्याद्बीजकादितः
तालीसादेश्च पत्राणि फलं स्यात् त्रिफलादितः १००

क्वचिन्मूलं क्वचित्कन्दः क्वचित्पत्रं क्वचित्फलम्
क्वचित्पुष्पं क्वचित्सर्वं क्वचित्सारः क्वचित्त्वचः १०१

चित्रकं सूरणं निम्बो वासा च त्रिफला क्रमात्
धातकी कण्टकारी च खदिरः क्षीरपादपः १०२

क्वचिन्निम्बस्य गृह्णीयात्पत्राभावे त्वचामपि
बालं फलं तु बिल्वस्य पक्वमारग्वधस्य च १०३

अङ्गेऽनुक्ते जटा ग्राह्या भागेऽनुक्तेऽखिलं समम्
पात्रेऽनुक्ते मृदः पात्रं कालेऽनुक्ते त्वहर्मुखम् १०४

नवान्येव हि योज्यानि द्रव्याण्यखिलकर्मसु
विना विडङ्गकृष्णाभ्यां गुडधान्याज्यमाक्षिकैः १०५

पुराणन्तु प्रशस्तं स्यात्ताम्बूलं काञ्जिकं तथा
शुष्कं नवीनद्रव्यं तु योज्यं सकलकर्मसु १०६

आर्द्रं तु द्विगुणं युञ्ज्यादेष सर्वत्र निश्चयः
गुडूची कुटजो वासा कूष्माण्डश्च शतावरी १०७

अश्वगन्धा सहचरः शतपुष्पा प्रसारिणी
प्रयोक्तव्याः सदैवार्द्रा द्विगुणं नैव कारयेत् १०८

वासानिम्बपटोलकेतकबलाकूष्माण्डकेन्दीवरी-

वर्षाभूकुटजाश्च कन्दसहिता सा पूतिगन्धाऽमृता
एन्द्री नागबला कुरुगटकपुरच्छत्राऽमृताः सर्वदा
सार्द्रा एव तु न क्वचिद् द्विगुणिताः कार्येषु योज्या बुधैः १०९

घृतं तैलं च पानीयं कषायं व्यञ्जनादिकम्
पक्त्वा शीतीकृतं चोष्णं तत्सर्वं स्याद्विषोपमम् ११०

सूक्ष्मास्थिमांसला पथ्या सर्वकर्मणि पूजिता
क्षिप्ताऽम्भसि निमज्जेद्याः भल्लातक्यस्तथोत्तमाः १११

वराहमूर्द्धवत्कन्दो वाराहीकन्दसंज्ञकः
सौवर्चलं तु काचाभं सैन्धवं स्फटिकप्रभम् ११२

सुवर्णच्छविकं ज्ञेयं स्वर्णमाक्षिकमुत्तमम्
ओड्रपुष्पप्रतीकाशा मनोह्वा चोत्तमा मता ११३

श्रेष्ठं शिलाजतु ज्ञेयं प्रक्षिप्तं न विशीर्यते
तोयपूर्णे कांस्यपात्रे प्रतानेन विवर्धते ११४

कर्पूरस्तुवरः स्निग्धः एला सूक्ष्फला वरा
श्वेतचन्दनमत्यन्तं सुगन्धि गुरुपूजितम् ११५

रक्तचन्दनमत्यन्तं लोहितं प्रवरं मतम्
काकतुगडनिभः स्निग्धो गुरुः श्रेष्ठो गुरुर्मतः ११६

सुगन्धि लघु रूक्षं च सुरदारु वरं मतम्
सरलं स्निग्धमत्यर्थं सुगन्धि च गुणावहम् ११७

अतिपीता प्रशस्ता तु ज्ञेया दारुनिशा बुधैः
जातीफलं गुरु स्निग्धं समं शुभ्रान्तरं वरम् ११८

मृद्वीका सोत्तमा ज्ञेया या स्याद्गोस्तनसन्निभा
करमर्दफलाकारा मध्यमा सा प्रकीर्त्तिता ११६

खराडं तु विमलं श्रेष्ठं चन्द्रकान्तसमप्रभम्
गव्याज्यसदृशं रुच्यं गन्धं मधु वरं मतम् १२०

शालीनां लोहितः शालि षष्टिकेषु च षष्टिकः
शूकधान्येष्वपि यवो गोधूमः प्रवरो मतः १२१

शिम्बीधान्ये वरो मुद्गो मसूरश्चाढकी तथा
रसेषु मधुरः श्रेष्ठो लवरोषु च सैन्धवः १२२

दाडिमामलकं द्राद्मा खर्जूरं च परूषकम्
राजादनं मातुलुंगं फलवर्गेषु शस्यते १२३

पत्रशाकेषु वास्तूकं जीवन्ती पोतिका वरा
पटोलं फलशाकेषु कन्दशाकेषु सूरणम् १२४

एणः कुरङ्गो हरिणो जाङ्गलेषु प्रशस्यते
पद्मिणां तित्तिरिर्लावो वरो मत्स्येषु रोहितः १२५

हरिणस्ताम्रवर्णः स्यादेणः कृष्णतया मतः
कुरङ्गस्ताम्र उद्दिष्टो हरिणाकृतिको महान् १२६

जलेषु दिव्यं दुग्धेषु गव्यमाज्येषु गोभवम्
तैलेषु तिलजं तैलमैद्मवेषु सिता हिता १२७

शिम्वीषु माषान्ग्रीष्मर्तौ लवरोष्वौषरं त्यजेत्
फलेषु लकुचं शाके सार्षपं न हितं मतम् १२८

गोमांसं ग्राम्यमांसेषु न हितं महिषीवसा

मेषीपयः कुसुम्भस्य तैलं त्याज्यं च फाणितम् १२९

मत्स्यमानूपमांसं च दुग्धयुक्तं विवर्जयेत्
कपोतं सर्षपस्नेहभर्जितं परिवर्जयेत् १३०

मत्स्यानिक्षोर्विकारेण तथा क्षौद्रेण वर्जयेत्
सक्तून्मांसपयोयुक्तानुष्णैर्दधि विवर्जयेत् १३१

उष्णैर्नभोऽम्बुना क्षौद्रं पायसं कृसरान्वितम्
रम्भाफलं त्यजेत्तक्रदधिबिल्वफलान्वितम् १३२

दशाहमुषितं सर्पिः कांस्ये मधुघृतं समम्
कृतान्नं च कषायं च पुनरुष्णीकृतं त्यजेत् १३३

एकत्र बहुमांसानि विरुध्यन्ते परस्परम्
मधु सर्पिर्वसा तैलं पानीयं वा पयस्तथा १३४

लवणं सैन्धवं प्रोक्तंचन्दनं रक्तचन्दनम्
चूर्णलेहासवस्नेहाः साध्या धवलचन्दनैः
कषायलेपयोः प्रायो युज्यते रक्तचन्दनम् १३५

अन्तः सम्मार्जने ज्ञेया ह्यजमोदा यवानिका
बहिः सम्मार्जने सैव विज्ञातव्याऽजमोदिका १३६

पयः सर्पिः प्रयोगेषु गव्यमेव हि गृह्यते
शकृद्रसो गोमयको मूत्रं गोमूत्रमुच्यते १३७

चित्रकाभावतोदन्ती क्षारः शिखरिजोऽथवा
अभावे धन्वयासस्य प्रेक्षेप्यातु दुरालभा १३८

तगरस्याप्यभावे तु कुष्ठं दद्याद्भिषग्वरः

मूर्वाऽभावे त्वचो ग्राह्या जिङ्गिनीप्रभवा बुधैः १३९

अहिंस्रया अभावे तु मानकन्दः प्रकीर्त्तितः
लक्ष्मणाया अभावे तु नीलकण्ठशिखा मता १४०

वकुलाभावतो देयं कह्लारोत्पलपङ्कजम्
नीलोत्पलस्याभावे तु कुमुदं देयमिष्यते १४१

जातीपुष्पं न यत्रास्ति लवंगं तत्र दीयते
अर्कपर्णादिपयसो ह्यभावे तद्रसो मतः १४२

पौष्करा भावतः कुष्ठं तथा लाङ्गल्यभावतः
स्थौणेयकस्याभावे तु मिषग्भिर्दीयते गदः १४३

चविकागजपिप्पल्यौ पिप्लीमूलवत्स्मृतौ १४४

अभावे सोमराज्यास्तु प्रपुन्नाडफलं मतम्
यदि न स्याद्दारुनिशा तदा देया निशा बुधैः १४५

रसाञ्जनस्याभावे तु दार्वीक्वाथः प्रयुज्यते
सौराष्ट्रयभावतो देया स्फटिका तद्गुणा जनैः १४६

तालीसपत्रकाभावे स्वर्णताली प्रशस्यते
भाङ्ग्र्यभावे तु तालीसं कण्टकारीजटाऽथवा १४७

रुचकाभावतो दद्याल्लवणं पांशुपूर्वकम्
अभावे मधुयष्ट्यास्तु धातकीं च प्रयोजयेत् १४८

अम्लवेतसकाभावे चुक्रं दातव्यमिष्यते
द्राक्षा यदि न लभ्येत प्रदेयं काश्मरीफलम् १४९

तयोरभावे कुसुमं मधूकस्य मतं बुधैः

लवङ्गकुसुमं देयं नखस्याभावतः पुनः १५०

कस्तूर्यभावे कङ्कोलं क्षेपणीयं विदुर्बुधाः
कङ्कोलस्याप्यभावे तु जातीपुष्पं प्रदीयते १५१

सुगन्धिमुस्तकं देयं कर्पूराभावतो बुधैः
कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः १५२

कुङ्कुमाभावतो दद्यात्कुसुम्भकुसुमं नवम्
श्रीखण्डचन्दनाभावे कर्पूरं देयमिष्यते १५३

अभावे त्वेतयोर्वैद्यः प्रक्षिपेद्रक्तचन्दनम्
रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः १५४

मुस्ता चातिविषाभावे शिवाऽभावे शिवा मता
अभावे नागपुष्पस्य पद्मकेशरमिष्यते १५५

मेदाजीवककाकोलीऋद्धिद्वन्द्वेऽपि वाऽसति
दरीविदार्यश्वगन्धावाराहीश्च क्रमात् क्षिपेत् १५६

वाराह्याश्च तथाऽभावे चर्मकारालुको मतः
वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसंज्ञकः १५७

वारीहीकन्द एवान्यश्चर्मकारालुको मतः
अनूपसम्भवे देशे वराह इव लोमवान् १५८

भल्लातकासहत्वे तु रक्तचन्दनमिष्यते
भल्लाताभावतश्चित्रं नलश्चेक्षोरभावतः १५९

सुवर्णाभावतः स्वर्णमाक्षिकं प्रक्षिपेद् बुधः
श्वेतं तु माक्षिकं ज्ञेयं बुधै रजतवद् ध्रुवम् १६०

माक्षिकस्याप्यभावे तु प्रदद्यात्स्वर्णगैरिकम्
सुवर्णमथ वा रौप्यं मृतं यत्र न लभ्यते १६१

तत्र कान्तेन कर्माणि भिषक्कुर्याद्विचक्षणः
कान्ताभावे तीक्ष्णलोहं योजयेद्वैद्यसत्तमः १६२

अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत्
मधु यत्र न लभ्येत तत्र जीर्णगुडो मतः १६३

मत्स्यराडयभावतो दद्युर्भिषजः सितशर्कराम्
असम्भवे सितायास्तु बुधैः खराडं प्रयुज्यते १६४

क्षीराभावे रसो मौद्गो मासूरो वा प्रदीयते
अत्र प्रोक्तानि वस्तूनि यानि तेषु च तेषु च १६५

योज्यमेकतराभावे परं वैद्येन जानता
रसवीर्यविपाकाद्यैः समं द्रव्यं विचिन्त्य च १६६

युञ्ज्यात्तद्विधमन्यच्च द्रव्याणां तु रसादिवित्
योगे यदप्रधानं स्यात्तस्य प्रतिनिधिर्मतः १६७

यत्तु प्रधानं तस्यापि सदृशं नैव गृह्यते
व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत्त्यजेत्
अनुक्तमपि युक्तं यद्योजयेत्तद्रसादिवित् १६८

द्रव्ये रसो गुणो वीर्यं विपाकः शक्तिरेव च
पदार्थाः पञ्च तिष्ठन्ति स्वं स्वं कुर्वन्ति कर्म च १६९

रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः
षड् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः १७०

तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते १७१

ये रसा वातशमना भवन्ति यदि तेषु वै
रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम् १७२

ये रसा पित्तशमना भवन्ति यदि तेषु वै
तीक्ष्णोष्णलघुताश्चैव नैते तत्कर्मकारिणः १७३

ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै
स्नेहगौरवशैत्यानि न ते हन्युः कफं तदा १७४

मधुरो हि रसः शीतो धातुस्तन्यबलप्रदः
चक्षुष्यो वातपित्तघ्नः कुर्यात्स्थौल्यमलकृमीन् १७५

विषघ्नः पिच्छिलश्चापि स्निग्धः प्रीत्यायुषोर्हितः
बालबृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् १७६

प्रशस्तो बृंहणः कण्ठ्यो गुरुः सन्धानकृन्मतः १७७

सोऽतियुक्तो ज्वरश्वासगलगण्डार्बुदकृमीन्
स्थौल्याग्निमान्द्यमेहांश्च कुर्यान्मेदःकफामयान् १७८

रसोऽम्ल पाचनो रुच्यः पित्तश्लेष्मास्रदो लघुः
लेखितोष्णो बहिः शीतः क्लेदनः पवनापहः १७९

स्निग्धस्तीक्ष्णः सरः शुक्रविबन्धानाहदृष्टिहा
हर्षणो रोमदन्तानामक्षिभ्रूविनिकोचनः १८०

सोऽतियुक्तो भ्रमं कुर्यात्तृड्दाहतिमिरज्वरान्
कण्डूपाण्डुत्ववीसर्पशोथविस्फोटकुष्ठकृत् १८१

लवणः शोधनो रुच्यः पाचनः कफपित्तदः
पुंस्त्ववातहरः कायशैथिल्यमृदुताकरः
बलघ्न आस्यजलदः कपोलगलदाहकृत् १८२

सोऽति युक्तो ऽचिपाकास्रपित्त कोठचतादिकृत्
वलीपलितखालित्यकुष्ठवीसर्पतृट्प्रदः १८३

कटुरुष्णश्च तीच्णश्च विशदो वातपित्तकृत्
श्लेष्महृल्लघुराग्नेयः कृमिकराडूविषापहः १८४

शुक्रस्तन्यहरश्चापि मेदःस्थौल्यापकर्षणः
अश्रुदो नासिकाऽस्याचिजिह्वाऽग्रोद्वेजको मतः १८५

दीपनः पाचनो रुच्यो नासिकाशोषणो भृशम्
क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः १८६

स्रोतः प्रकाशको रूचः मेध्यो वर्चोविबन्धकृत् १८७

सोऽतियुक्तो भ्रान्तिदाहमुखताल्वोष्ठशोषकृत्
कराठादिपीडामूर्च्छाऽन्तर्दाहदो बलकान्तिहृत् १८८

तिक्तः शीतस्तृषामूर्च्छाज्वरपित्तकफाञ्जयेत्
कृमिकुष्ठविषोत्क्लेददाहरक्तगदापहः १८९

रुच्यः स्वयमरोचिष्णुः कराठस्तन्यविशोधनः
वातलोऽग्निकरो नासाशोषणो रूचणो लघुः १९०

सोऽतियुक्तः शिरःशूलमन्यास्तम्भश्रमार्त्तिकृत्
कम्पमूर्च्छातृषाकारी बलशुक्रचयप्रदः १९१

कषायो रोपणो ग्राही स्तम्भनः शोधनस्तथा

लेखनः पीडनः सौम्यः शोषणो वातकोपनः १९२

कफशोणितपित्तघ्नो रूक्षः शीतो लघुर्मतः
त्वक्प्रसाधन आमस्य स्तम्भनो विशदो मतः
जिह्वायां जाडयकृत्कराठस्त्रोतसां च विबन्धकृत् १९३

सोऽतियुक्तो ग्रहाध्मानहृत्पीडाक्षेपणादिकृत् १९४

मधुरं श्लेष्मलंप्रायो जीर्णशालियवादृते
मुद्गाद्गोधूमतः क्षौद्रात्सिताया जाङ्गलामिषात् १९५

अम्लं पित्तकरं प्रायो विना धात्रीं च दाडिमीम्
लवणं प्रायशो द्वेषि नेत्रयोः सैन्धवं विना १९६

प्रायः कटु तथा तिक्तमवृष्यं वातकोपनम्
शुराठी कृष्णारसोनानि पटोलममृतां विना १९७

पिप्पलीनागरं वृष्यं कटु चावृष्यमुच्यते
प्रायशः स्तम्भनं प्रोक्तं कषायमभयां विना १९८

सामान्येनात्र निर्दिष्टा गुणाः षड्रससम्भवाः
रसानां योगतस्तु स्यादन्य एव गुणोदयः १९९

संयोगाद्विषतां याति सममाज्येन माक्षिकम्
अमृतत्वं विषं याति सर्पदष्टस्य वै यथा २००

लघुर्गुरुस्तथा स्निग्धो रूक्षस्तीक्ष्ण इति क्रमात्
नभोभूवारिवातानां वह्नेरेते गुणाःस्मृताः २०१

लघु पथ्यं परं प्रोक्तं कफघ्नं शीघ्रपाकि च २०२

गरु वातहरं पुष्टिश्लेष्मकृच्चिरपाकि च

स्निग्धं वातहरं श्लेष्मकारि वृष्यं बलावहम्
रूक्षं समीरणकरं परं कफहरं मतम् २०३

तीक्ष्णं पित्तकरं प्रायो लेखनं कफवातहृत्
सुश्रुते तु गुणा एते विंशतिस्तान्ब्रुवे शृणु २०४

गुरुर्लघुः स्निग्धरूक्षौ तीक्ष्णः श्लक्ष्णः स्थिरः सरः
पिच्छिलो विशदः शीत उष्णश्च मृदुकर्कशौ
स्थूलः सूक्ष्मो द्रवः शुष्क आशुर्मन्दः स्मृता गुणाः २०५

श्लक्ष्णः स्नेहं विनाऽपि स्यात्कठिनोऽपि हि चिक्कणः २०६

स्थिरो वातमलस्तम्भी सरस्तेषां प्रवर्तकः
पिच्छिलस्तन्तुलो बल्यः सन्धानः श्लेष्मलो गुरुः २०७

क्लेदच्छेदकरः ख्यातो विशदो व्रणरोपणः
शीतस्तु ह्लादनःस्तम्भी मूर्च्छातृटस्वेददाहनुत्
उष्णो भवति शीतस्य विपरीतश्च पाचनः २०८

स्थूलः स्थौल्यकरो देहे स्रोतसामवरोधकृत् २०९

देहस्य सूक्ष्मच्छिद्रेषु विशेद्यत्सूक्ष्ममुच्यते
द्रवः क्लेदकरो व्यापी शुष्कस्तद्विपरीतकः २१०

आशुराशुकरो देहे धावत्यम्भसि तैलवत्
मन्दः सकलकार्येषु शिथिलोऽल्पोऽपि कथ्यते २११

पचेन्नामं वह्निकृद्यद्दीपनं तद्यथा मिसिः २१२

पचत्यामं न वह्निं च कुर्याद्यत्तद्धि पाचनम्
नागकेशरवद्विद्याच्चित्रोदीपनपाचनः २१३

नशोधयति यद्दोषान्समान्नोदीरयत्यपि
समीकरोति विषमाञ्छमनं तद्यथाऽमृता २१४

कृत्वा पाकं मलानां च भित्वा बन्धमधो नयेत्
तच्चानुलोमनं ज्ञेयं यथा प्रोक्ता हरीतकी २१५

पक्तव्यं यदपक्त्वैव श्लिष्टं कोष्ठे मलादिकम्
नयत्यधः स्रंसनं तद्यथा स्यात्कृतमालकम् २१६

मलादिकमबद्धं यद्बद्धं वा पिण्डितं मलैः
भित्वाऽध पातयति यद्भेदनं कटुकी यथा २१७

विपक्वं यदपक्वं वा मलादि द्रवतां नयेत्
रेचयत्यपि तज्ज्ञेयं रेचनं त्रिवृता यथा २१८

अपक्वं पित्तश्लेष्माण्नं बलादूर्ध्वं नयेत्तु यत्
वमनं तद्धि विज्ञेयं मदनस्य फलं यथा २१९

स्थानाद्बहिर्नयेदूर्ध्वमधो वा मलसञ्चयम्
देहसंशोधनं तत्स्याद् देवदालीफलं यथा २२०

दीपनं पाचनं यत्स्यादुष्णत्वाद्द्रवशोषकम्
ग्राहि तच्च यथा शुण्ठी जीरकं गजपिप्पली २२१

रौक्ष्याच्छैत्यात्कषायत्वाल्लघुपाकाच्च यद्भवेत्
वातकृत्स्तम्भनं तत्स्याद्यथा वत्सकटुण्टुकौ २२२

श्लिष्टान्कफादिकान्दोषानुन्मूलयति यद्बलात्
छेदनं तद्यथा क्षारा मरिचानि शिलाजतु २२३

धातून्मलान् वा देहस्य विशोध्योल्लेखयेच्च यत्

लेखनं तद्यथा क्षौद्रं नीरमुष्णं वचा यवाः २२४

यस्माद् द्रव्याद्भवेत्स्त्रीषु हर्षो वाजीकरं हि तत्
यथाऽश्वगन्धामुसली शर्करा च शतावरी २२५

यस्माच्छुक्रस्य वृद्धिः स्याच्छुक्रलं हि तदुच्यते
यथा नागबलाऽद्या स्युर्बीजं च कपिकच्छुजम् २२६

दुग्धं माषाश्च भल्लातफलमज्जामलानि च
एतानि जनकानि स्यू रेचकानि च रेतसः २२७

प्रवर्तिनी स्त्री शुक्रस्य रेचनं बृहतीफलम्
जातीफलं स्तम्भकं स्यात्कालिङ्गं क्षयकारि च २२८

रसायनन्तु तज्ज्ञेयं यज्जराव्याधिनाशनम्
यथा हरीतकी दन्ती गुग्गुलुश्च शिलाजतु २२९

पूर्वं व्याप्याखिलं कायं ततः पाकञ्च गच्छति
व्यवायि तद् यथा भङ्गा फेनञ्चाहि समुद्भवम् २३०

सन्धिबन्धांस्तु शिथिलान्यत्करोति विकाशि तत्
विशोष्यौजश्च धातुभ्यो यथा क्रमुककोद्रवौ २३१

बुद्धिं लुम्पति यद् द्रव्यं मदकारि तदुच्यते
तमोगुणप्रधानञ्च यथा मद्यं सुराऽदिकम् २३२

व्यवायि च विकाशि स्याच्छ्लेष्मच्छेदि मदावहम्
आग्नेयं जीवितहरं योगवाहि स्मृतं विषम् २३३

निजवीर्य्येण यद् द्रव्यं स्त्रोतोभ्यो दोषसञ्चयम्
निरस्यति प्रमाथि स्यात्तद्यथा मरिचं वचा २३४

पैच्छिल्याद्गौरवाद् द्रव्यं रुद्ध्वा रसवहाः शिराः
धत्ते यद्गौरवं तत्स्यादभिष्यन्दि यथा दधि २३५

विदाहि द्रव्यमुद्गारमम्लं कुर्यात्तथा तृषाम्
हृदि दाहं च जनयेत्पाकं गच्छति तच्चिरात् २३६

गृह्णाति योगवाहि द्रव्यं संसर्गिवस्तुगुणान्
पच्यमानं यथैतन्मधुजलतैलाज्यसूतलोहादिः २३७

उष्णशीतगुणोत्कर्षाद् बुधैवीर्यं द्विधा स्मृतम्
यत्सर्वमग्निषोमीयं दृश्यते भुवनत्रयम् २३८

उष्णं वातकफौ हन्यात् पित्तं तु तनुते जराम्
शीतं वातकफातङ्कान्कुरुते पित्तहृत्परम् २३९

तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकताम्
शमञ्च वातकफयो करोति शिशिरं पुनः
ह्लादनं जीवनं स्तम्भं प्रसादं रक्तपित्तयोः २४०

जाठरेणाग्निना योगाद्यदुदेति रसान्तरम्
रसानां परिणामान्ते स विपाक इति स्मृतः २४१

मिष्टः पटुश्च मधुरमम्लोऽम्ल पच्यते रसः
कटुतिक्तकषायाणां पाकः स्यात्प्रायशः कटुः २४२

श्लेष्मकृन्मधुरः पाको वातपित्तहरो मतः
अम्लस्तु कुरुते पित्तं वातश्लेष्मगदापहः २४३

कटुः करोति पवनं कफं पित्तञ्च नाशयेत्
विशेष एवं रसतो विपाकानां निदर्शितः २४४

रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम्

दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचनी २४५

मधूकस्य च मृद्वीका घृतं क्षीरस्य दीपनम्
प्रभावस्तु यथा धात्री लकुचस्य रसादिभिः २४६

समाऽपि कुरुते दोषत्रितयस्य विनाशनम् २४७

क्वचित्तुकेवलं द्रव्यं कर्म कुर्यात्प्रभावतः
ज्वरं हन्ति शिरोबद्धा सहदेवीजटा यथा २४८

विरुद्धगुणसंयोगे भूयसाऽल्प हि जीयते
रसं विपाकस्तौ वीर्यं प्रभावस्तान्व्यपोहति २४९

इति मिश्रप्रकरणे मिश्रवर्गः प्रथमः समाप्तः १

Bhāva Prakāśha, by Bhav Mishra, edited by Brahmashankar Mishra, 1969 edition.
Typed by Pramod Sharma, M.A.
Proofread by Maya Nand Sastri, Ved Vyakaranacharya.
Font conversion by Claude Setzer and Ralph Bunker.
Formatted for Maharishi University of Management Vedic Literature Collection

भावप्रकाशनिघरटुः

दक्षं प्रजापतिं स्वस्थमश्विनौ वाक्यमूचतुः
कुतो हरीतकी जाता तस्यास्तु कति जातयः १

रसाः कति समाख्याताः कति चोपरसाः स्मृताः
नामानि कति चोक्तानि किं वा तासां च लक्षणम् २

के च वर्णा गुणाः के च का च कुत्र प्रयुज्यते
केन द्रव्येण संयुक्ता कांश्च रोगान्व्यपोहति ३

प्रश्नमेतद्यथा पृष्टं भगवन्वक्तुमर्हसि
अश्विनोर्वचनं श्रुत्वा दक्षो वचनमब्रवीत् ४

पपात बिन्दुर्मेदिन्यां शक्रस्य पिबतोऽमृतम्
ततो दिव्यात्समुत्पन्ना सप्तजातिर्हरीतकी ५

हरीतक्यभया पथ्या कायस्था पूतनाऽमृता
हैमवत्यव्यथा चापि चेतकी श्रेयसी शिवा ६

वयस्था विजया चापि जीवन्ती रोहिणीति च ७

विजया रोहिणी चैव पूतना चामृताऽभया
जीवन्ती चेतकी चेति पथ्यायाः सप्तजातयः ८

अलाबुवृत्ता विजया वृत्ता सा रोहिणी स्मृता
पूतनाऽस्थिमती सूक्ष्मा कथिता मांसलाऽमृताः ९

पञ्चरेखाऽभया प्रोक्ता जीवन्ती स्वर्णवर्णिनी
त्रिरेखा चेतकी ज्ञेया सप्तानामियमाकृतिः १०

विजया सर्वरोगेषु रोहिणी व्रणरोहिणी

प्रलेपे पूतना योज्या शोधनार्थेऽमृता हिता ११

अक्षिरोगेऽभयाशस्ता जीवन्ती सर्वरोगहृत्
चूर्णार्थे चेतकी शस्ता यथायुक्तं प्रयोजयेत् १२

चेतकी द्विविधा प्रोक्ता श्वेता कृष्णा च वर्णतः
षडङ्गुलायता शुक्ला कृष्णा त्वेकाङ्गुला स्मृता १३

काचिदास्वादमात्रेण काचिद्गन्धेन भेदयेत्
काचित्स्पर्शेन दृष्ट्याऽन्या चतुर्द्धा भेदयेच्छिवा १४

चेतकीपादपच्छायामुपसर्पन्ति ये नराः
भिद्यन्ते तत्क्षणादेव पशुपक्षिमृगादयः १५

चेतकी तु घृता हस्ते यावत्तिष्ठति देहिनः
तावद्भिद्येत वेगैस्तु प्रभावान्नात्र संशयः १६

नृपाणां सुकुमाराणां कृशानां भेषजद्विषाम्
चेतकी परमा शस्ता हिता सुखविरेचनी १७

सप्तानामपि जातीनां प्रधाना विजया स्मृता
सुखप्रयोगा सुलभा सर्वरोगेषु शस्यते १८

हरीतकी पञ्चरसाऽलवणातुवरा परम्
रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी १९

चक्षुष्या लघुरायुष्या बृंहणी चानुलोमिनी
श्वासकासप्रमेहार्शः कुष्ठशोथोदरकृमीन् २०

वैस्वर्यग्रहणीरोगविबन्धविषमज्वरान्
गुल्माध्मानतृषाछर्दिहिक्काकण्डूहृदामयान् २१

कामलां शूलमानाहं प्लीहानञ्च यकृत्तथा
अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातञ्च नाशयेत् २२

स्वादुतिक्तकषायत्वात्पित्तहृत्कफहृत्तु सा
कटुतिक्तकषायत्वादम्लत्वाद्वातहृच्छिवा २३

पित्तकृत्कटुकाम्लत्वाद्वातकृन्न कथं शिवा २४

प्रभावाद्दोषहन्तृत्वं सिद्धं यत्तत्प्रकाश्यते
हेतुभिः शिष्यबोधार्थं नापूर्वं क्रियतेऽधुना २५

कर्मान्यत्वं गुणैः साम्यं दृष्टमाश्रयभेदतः
यतस्ततो नेति चिन्त्यं धात्रीलकुचयोर्यथा २६

पथ्याया मज्जनि स्वादुः स्नाय्वामम्लो व्यवस्थितः
वृन्ते तिक्तस्त्वचि कटुरस्थिस्थस्तुवरो रसः २७

नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता च याऽम्भसि
निमज्जेत्सा प्रशस्ता च कथिताऽतिगुणप्रदा २८

नवादिगुणयुक्तत्वं तथैवात्र द्विकर्षता
हरीतक्याः फले यत्र द्वयं तच्छ्रेष्ठमुच्यते २९

चर्विता वर्द्धयत्यग्निं पेषिता मलशोधिनी
स्विन्ना संग्राहिणी पथ्या भृष्टा प्रोक्ता त्रिदोषनुत् ३०

उन्मीलिनी बुद्धिबलेन्द्रियाणां निर्मूलिनी पित्तकफानिलानाम्
विस्रंसिनी मूत्रशकृन्मलानां हरीतकी स्यात् सह भोजनेन ३१

अन्नपानकृतान्दोषान्वातपित्तकफोद्भवान्
हरीतकी हरत्याशु भुक्तस्योपरि योजिता ३२

लवरोन कफं हन्ति पित्तं हन्ति सशर्करा
घृतेन वातजान् रोगान्सर्वरोगान्गुडान्विता ३३

सिंधूत्थशर्कराशुराठीकरणामधुगुडैः क्रमात्
वर्षादिष्वभया प्राश्या रसायनगुरौषिरणा ३४

अध्वातिखिन्नो बलवर्जितश्च रूक्षः कृशो लङ्घनकर्शितश्च
पित्ताधिको गर्भवती च नारी विमुक्तरक्तस्त्वभयां न खादेत् ३५

विभीतकस्त्रिलिङ्गं स्यादक्षः कर्षफलस्तु सः
कलिद्रुमो भूतवासस्तथा कलियुगालयः
विभीतकं स्वादुपाकं कषायं कफपित्तनुत्
उष्णवीर्यं हिमस्पर्शं भेदनं कासनाशनम् ३६

रूक्षं नेत्रहितं केश्यं कृमिवैस्वर्यनाशनम्
विभीतमज्जातृट्छर्दिकफवातहरी लघुः
कषायो मदकृच्चाथ धात्रीमज्जाऽपि तद्गुणः ३७

वयस्यामलकी वृष्या जातीफलरसं शिवम्
धात्रीफलं श्रीफलं च तथामृतफलं स्मृतम्
त्रिष्वामलकमाख्यातं धात्री तिष्यफलाऽमृता ३८

हरीतकीसमं धात्रीफलं किन्तु विशेषतः
रक्तपित्तप्रमेहघ्नं परं वृष्यं रसायनम् ३९

हन्ति वातं तदम्लत्वात्पित्तं माधुर्यशैत्यतः
कफं रूक्षकषायत्वात्फलं धात्र्यास्त्रिदोषजित् ४०

यस्य यस्य फलस्येह वीर्यं भवति यादृशम्
तस्य तस्यैव वीर्य्येण मज्जानमपि निर्दिशेत् ४१

पथ्याविभीतधात्रीणां फलैः स्यात्त्रिफला समैः
फलत्रिकञ्च त्रिफला सा वरा च प्रकीर्तिता ४२

त्रिफला कफपित्तघ्नी मेहकुष्ठहरा सरा
चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी ४३

शुण्ठी विश्वा च विश्वञ्च नागरं विश्वभेषजम्
ऊषणं कटुभद्रञ्च शृङ्गवेरं महृषधम् ४४

शुण्ठी रुच्यामवातघ्नी पाचनी कटुका लघुः
स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत् ४५

वृष्या स्वर्य्यावमिश्वासशूलकासहृदामयान्
हन्ति श्लीपदशोथार्श आनाहोदरमारुतान् ४६

आग्नेयगुणभूयिष्ठात् तोयांशपरिशोषि यत्
संगृह्णाति मलं तत्तु ग्राहि शुण्ठ्यादयो यथा ४७

विबन्धभेदिनी या तु सा कथं ग्राहिणी भवेत्
शक्तिर्विबन्धभेदे स्याद्यतो न मलपातनो ४८

आर्द्रकं शृङ्गवेरं स्यात्कटुभद्रंतथाऽद्रिका
आर्द्रिका भेदिनी गुर्वीतीक्ष्णोष्णा दीपनी मता ४९

कटुका मधुरा पाके रूक्षा वातकफापहा
ये गुणाः कथिता शुण्ठ्यास्तेऽपि सन्त्यार्द्रकेऽखिलाः ५०

भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम्
अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनम् ५१

कुष्ठपाण्ड्वामये कृच्छ्रे रक्तपित्ते व्रणे ज्वरे

दाहे निदाघशरदोर्नैव पूजितमार्द्रकम् ५२

पिप्पली मागधी कृष्णा वैदेही चपला कणा
उपकुल्योषणा शौराडी कोला स्यात्तीद्दणतराडुला ५३

पिप्पली दीपना वृष्या स्वादुपाका रसायनी
ग्रनुष्णा कटुका स्निग्धा वातश्लेष्महरी लघुः ५४

पिप्पली रेचनी हन्ति श्वासकासोदरज्वरान्
कुष्ठप्रमेहगुल्मार्शः प्लीहशूलाममारुतान् ५५

ग्रार्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः
पित्तप्रशमनी सा तु शुष्का पित्तप्रकोपिणी ५६

पिप्पली मधुसंयुक्ता मेदः कफविनाशिनी
श्वासकासज्वरहरी वृष्या मेध्याऽग्निवर्द्धिनी ५७

जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली
कासाजीर्णारुचिश्वासहृत्पाराडुकृमिरोगनुत्
द्विगुणः पिप्पलीचूर्णाद् गुडोऽत्र भिषजां मतः ५८

मरिचं वेल्लजं कृष्णमूषणं धर्मपत्तनम् ५९

मरिचं कटुकं तीद्दणं दीपनं कफवातजित्
उष्णं पित्तकरं रूद्दं श्वासशूलकृमीन्हरेत् ६०

तदार्द्रं मधुरं पाके नात्युष्णं कटुकं गुरु
किञ्चित्तीद्दणगुणं श्लेष्मप्रसेकि स्यादपित्तलम् ६१

विश्वोपकुल्या मरिचं त्रयं त्रिकटु कथ्यते
कटुत्रिकं तु त्रिकटु त्र्यूषणं व्योष उच्यते ६२

त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान्
गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान् ६३

ग्रन्थिकं पिप्पलीमूलमूषणं चटकाशिरः
दीपनं पिप्पलीमूलं कटूष्णं पाचनं लघु ६४

रूक्षं पित्तकरं भेदि कफवातोदरापहम्
आनाहप्लीहगुल्मघ्नं कृमिश्वासक्षयापहम् ६५

त्र्यूषणं सकणामूलं कथितं चतुरूषणम्
व्योषस्येव गुणाः प्रोक्ता अधिकाश्चतुरूषणे ६६

भवेच्चव्यं तु चविका कथिता सा तथोषणा
कणामूलगुणं चव्यं विशेषाद्गुदजापहम् ६७

चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली
कपिवल्ली कोलवल्ली श्रेयसीवशिरश्च सा ६८

गजकृष्णा कटुर्वातश्लेष्महृद्वह्निवर्धिनी
उष्णा निहन्त्यतीसारं श्वासकण्ठामयकृमीन् ६९

चित्रकोऽनलनामाच पाठी व्यालस्तथोषणः
चित्रकः कटुकः पाके वह्निकृत्पाचनो लघुः ७०

रूक्षोष्णो ग्रहणीकुष्ठशोथार्शः कृमिकासनुत्
वातश्लेष्महरो ग्राही वातघ्नः श्लेष्मपित्तहृत् ७१

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरैः
पञ्चभिः कोलमात्रं यत्पञ्चकोलं तदुच्यते ७२

पञ्चकोलं रसे पाके कटुकं रुचिकृन्मतम्

तीच्णोष्णं पाचनं श्रेष्ठं दीपनं कफवातनुत्
गुल्मप्लीहोदरानाहशूलघ्नं पित्तकोपनम् ७३

पञ्चकोलं समरिचं षडूषणमुदाहृतम्
पञ्चकोलगुणं तत्तु रूच्चमुष्णं विषापहम् ७४

यवानिकोग्रगन्धा च ब्रह्मदर्भाऽजमोदिका ७५

सैवोक्ता दीप्यका दीप्या तथा स्याद्यवसाह्वया
यवानी पाचनी रुच्या तीच्णोष्णा कटुका लघुः ७६

दीपनी च तथा तिक्ता पित्तला शुक्रशूलहृत्
वातश्लेष्मोदरानाहगुल्मप्लीहकृमिप्रणुत् ७७

अजमोदा खराश्वा च मायूरो दीप्यकस्तथा
तथा ब्रह्मकुशा प्रोक्ता कारवी लोचमस्तका ७८

अजमोदा कटुस्तीच्णा दीपनी कफवातनुत्
उष्णा विदाहिनी हृद्या वृष्या बलकरी लघुः
नेत्रामय कृमिच्छर्दिहिक्कावस्तिरुजो हरेत् ७९

पारसीकयवानी तु यवानीसदृशी गुणैः
विशेषात्पाचनी रुच्या ग्राहिणी मादिनी गुरुः ८०

जीरको जरणोऽजाजी कणा स्याद्दीर्घजीरकः ८१

कृष्णजीरः सुगन्धश्च तथैवोद्गारशोधनः
कालाजाजी तु सुषवी कालिका चोपकालिका ८२

पृथ्वीका कारवी पृथ्वी पृथुकृष्णोपकुञ्चिका
उपकुञ्ची च कुञ्ची च बृहज्जीरक इत्यपि ८३

जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु
संग्राही पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् ८४

ज्वरघ्नं पाचनं वृष्यं बल्यं रुच्यं कफापहम्
चक्षुष्यं पवनाध्मानगुल्मच्छर्द्यतिसार हृत् ८५

धान्यकं धानकं धान्यं धाना धानेयकं तथा
कुनटी धेनुका छत्रा कुस्तुम्बुरु वितुन्नकम् ८६

धान्यकं तुवरं स्निग्धमवृष्यं मूत्रलं लघु
तिक्तं कटूष्णवीर्यञ्च दीपनं पाचनं स्मृतम् ८७

ज्वरघ्नं रोचकं ग्राहि स्वादुपाकि त्रिदोषनुत्
तृष्णादाहवमिश्वासकासकार्श्यकृमिप्रणुत्
आर्द्रन्तु तद्गुणं स्वादु विशेषात्पित्तनाशनम् ८८

शतपुष्पा शताह्वा च मधुरा कारवी मिसिः
अतिलम्बी सितच्छत्रा संहितच्छत्रिकाऽपि च ८९

छत्रा शालेयशालीनो मिश्रेया मधुरा मिसिः
शतपुष्पा लघुस्तीक्ष्णा पित्तकृद्दीपनी कटुः ९०

उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगहृत्
मिश्रेया तद्गुणा प्रोक्ता विशेषाद्योनिशूलनुत् ९१

अग्निमान्द्यहरी हृद्या बद्धविट्कृमिशुक्रहृत्
रूक्षोष्णा पाचनी कासवमिश्लेष्मानिलान्हरेत् ९२

मेथिका मेथिनी मेथी दीपनी बहुपत्रिका
बोधिनी बहुबीजा च ज्योतिर्गन्धफला तथा ९३

वल्लरी चन्द्रिका मन्था मिश्रपुष्पा च कैरवी
कुञ्चिका बहुपर्णी च पीतबीजा मुनिच्छदा ९४

मेथिकावातशमनीश्लेष्मघ्नीज्वरनाशिनी
ततः स्वल्पगुणावन्या वाजिनां सा तु पूजिता ९५

चन्द्रिका चर्महन्त्री च पशुमेहनकारिका
नन्दिनी कारवी भद्रा वासपुष्पा सुवासरा ९६

चन्द्रशूरं हितं हिक्कावातश्लेष्मातिसारिणाम्
असृग्वातगदद्वेषि बलपुष्टिविवर्द्धनम् ९७

मेथिका चन्द्रशूरश्च कालाऽजाजी यवानिका
एतच्चतुष्टयं युक्तं चतुर्बीजमिति स्मृतम् ९८

तच्चूर्णं भक्षितं नित्यं निहन्ति पवनामयम्
अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम् ९९

सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम् १००

हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासनुत्
शूलगुल्मोदरानाहकृमिघ्नं पित्तवर्द्धनम् १०१

वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका
क्षुद्रपत्री च मङ्गल्या जटिलोग्रा च लोमशा १०२

वचोग्रगन्धा कटुका तिक्तोष्णा वान्तिवह्निकृत्
विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी
अपस्मारकफोन्मादभूतजन्त्वनिलान्हरेत् १०३

पारसीक वचा शुक्ला प्रोक्ता हैमवतीति सा

हैमवत्युदिता तद्वद्वातं हन्ति विशेषत १०४

सुगन्धाऽप्युग्रगन्धा च विशेषात्कफकासनुत्
सुस्वरत्वकरी रुच्या हृत्कण्ठमुखशोधिनी १०५

स्थूलग्रन्थिः सुगन्धा स्यात्ततो हीनगुणा स्मृता १०६

द्वीपान्तरवचा किञ्चित्तिक्तोष्णा वह्निदीप्तिकृत्
विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी १०७

वातव्याधीनपस्मारमुन्मादं तनुवेदनाम्
व्यपोहति विशेषेण फिरङ्गामयनाशिनी १०८

हपुषा हबुषा विस्रा पराऽश्वत्थफला मता
मत्स्यगन्धाप्लीहहन्त्री विषघ्नी ध्वांक्षनाशिनी १०९

हपुषा दीपनी तिक्ता मृदूष्णा तुवरा गुरुः
पित्तोदरसमीरार्शोग्रहणीगुल्मशूलहृत्
पराऽप्येतद्गुणा प्रोक्ता रूपभेदो द्वयोरपि ११०

पुंसि क्लीवे विडङ्गः स्यात्कृमिघ्नो जन्तुनाशनः
तण्डुलश्च तथा वेल्लममोघा चित्रतण्डुलः १११

विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु
शूलाध्मानोदरश्लेष्मकृमिवातविबन्धनुत् ११२

नाडी हिङ्गु पलाशाख्या जन्तुका रामठी च सा
वंशपत्री च पिण्डाह्वा सुवीर्य्या हिङ्गुनाडिका
तुम्बुरुः सौरभः सौरो वनजः सानुजोऽन्धकः ११३

तुम्बुरु प्रथितं तिक्तं कटुपाकेऽपि तत्कटु

रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि च ११४

वातश्लेष्माक्षिकर्णोष्ठशिरोरुग्गुरुताकृमीन्
कुष्ठशूलारुचिश्वासप्लीहकृच्छ्राणि नाशयेत् ११५

स्याद्वंशरोचना वांशी तुगाक्षीरी तुगा शुभा
त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी च वैणवी ११६

वंशजा वृंहणी वृष्या बल्या स्वाद्वी च शीतला
तृष्णाकासज्वरश्वासक्षयपित्तास्रकामलाः
हरेत्कुष्ठं व्रणं पाराडु कषाया वातकृच्छ्रजित् ११७

समुद्रफेनः फेनश्च हिराडीरोऽब्धिकफस्तथा ११८

समुद्रफेनश्चक्षुष्यो लेखनः शीतलश्च सः
कषायो विषपित्तघ्नः कर्णरुक्कफहृत्सरः ११९

जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिके १२०

अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः १२१

अष्टवर्गो हिमः स्वादुर्बृंहणः शुक्रलो गुरुः
भग्नसन्धानकृत्कामबलासबलवर्द्धनः
वातपित्तास्रतृड्दाहज्वरमेहक्षयप्रणुत् १२२

जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ
रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ १२३

जीवकः कूर्चकाकार ऋषभो वृष शृङ्गवत्
जीवको मधुरः शृङ्गो ह्रस्वाङ्गः कूर्चशीर्षकः १२४

जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ

मधुरौ पित्तदाहास्रकार्श्यवातक्षयापहौ १२५

महामेदाऽभिधः कन्दो मोरङ्गादौ प्रजायते १२६

महामेदा वनीमेदा स्यादित्युक्तं मुनीश्वरैः १२७

शुक्लार्द्रकनिभः कन्दो लताजातः सुपाण्डुरः
महामेदाभिधो ज्ञेयो मेदालक्षणमुच्यते १२८

शुक्लकन्दो नखच्छेद्यो मेदोधातुमिव स्रवेत्
यः स मेदेति विज्ञेयो जिज्ञासातत्परैर्जनैः १२९

शल्यपर्णी मणिच्छिद्रा मेदा मेदाभवाध्वरा
महामेदा वसुच्छिद्रा त्रिदन्ती देवतामणिः १३०

मेदायुगं गुरु स्वादु वृष्यं स्तन्यकफावहम्
वृंहणं शीतलं पित्तरक्तवातज्वरप्रणुत् १३१

जायते क्षीरकाकोली महामेदोद्भवस्थले १३२

यत्र स्यात्क्षीरकाकोली काकोली तत्र जायते
पीवरीसदृशः कन्दः सक्षीरः प्रियगन्धवान् १३३

सा प्रोक्ताक्षीरकाकोली काकोलीलिङ्गमुच्यते
यथास्यात्क्षीरकाकोली काकोल्यपि तथा भवेत् १३४

एषा किञ्चिद्भवेत्कृष्णा भेदोऽयमुभयोरपि
काकोली वायसोली च वीरा कायस्थिका तथा १३५

सा शुक्ला क्षीरकाकोली वयस्था क्षीरवल्लिका
कथिता क्षीरिणी धीरा क्षीरशुक्ला पयस्विनी १३६

काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु
वृंहणं वातदाहास्रपित्तशोषज्वरापहम् १३७

ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशलेऽचले
श्वेतलोमान्वितः कन्दो लताजातः सरन्ध्रकः १३८

स एव ऋद्धिर्वृद्धिश्च भेदमप्येतयोर्ब्रुवे
तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा १३९

वृद्धिस्तु दक्षिणावर्त्तफला प्रोक्ता महर्षिभिः
ऋद्धिर्योग्यं सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे १४०

ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः
प्राणैश्वर्यकरी मूर्च्छारक्तपित्तविनाशिनी १४१

वृद्धिर्गर्भप्रदा शीता वृंहणी मधुरा स्मृता
वृष्या पित्तास्रशमनी क्षतकासक्षयापहा १४२

राज्ञामप्यष्टवर्गस्तु यतोऽयमतिदुर्लभः
तस्मादस्य प्रतिनिधिं गृह्णीयात्तद्गुणं भिषक् १४३

मेदा जीवक काकोली ऋद्धि द्वन्द्वेऽपि चासति
वरीविदार्यश्वगन्धावाराहींश्च क्रमात् क्षिपेत् १४४

यष्टीमधु तथा यष्टीमधुकं क्लीतकं तथा
अन्यत्क्लीतनकं तत्तु भवेत्तोये मधूलिका १४५

यष्टी हिमा गुरुः स्वाद्वी चक्षुष्या बलवर्णकृत्
सुस्निग्धा शुक्रला केश्या स्वर्या पित्तानिलास्रजित्
व्रण शोथ विष च्छर्दि तृष्णाग्लानिक्षयापहा १४६

काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनोऽपि च
काम्पिल्लः कफपित्तास्रकृमिगुल्मोदरव्रणान्
हन्ति रेची कटूष्णश्च मेहानाहविषाश्मनुत् १४७

आरग्बवधो राजवृक्षः शम्पाकश्चतुरङ्गुलः
आरेवतो व्याधिघातः कृतमालः सुवर्णकः १४८

कर्णिकारो दीर्घफलः स्वर्णाङ्गः स्वर्णभूषणः
आरग्वधोगुरुःस्वादुः शीतलः स्रंसनोत्तमः १४९

ज्वरहृद्रोगापित्तास्रवातोदावर्त्तशूलनुत्
तत्फलं स्रंसनं रुच्यं कुष्ठपित्तकफापहम्
ज्वरे तु सततं पथ्यं कोष्ठशुद्धिकरं परम् १५०

कट्वी तु कटुका तिक्ता कृष्णभेदा कटम्भरा
अशोका मत्स्यशकला चक्राङ्गी शकुलादनी
मत्स्यपित्ता काण्डरुहा रोहिणी कटुरोहिणी १५१

कट्वी तु कटुका पाके तिक्ता रूक्षा हिमा लघुः
भेदिनी दीपनी हृद्या कफपित्तज्वरापहा
प्रमेहश्वासकासास्रदाहकुष्ठकृमिप्रणुत् १५२

किराततिक्तः कैरातः कटुतिक्तः किरातकः १५३

काण्डतिक्तोऽनार्यतिक्तो भूनिम्बो रामसेनकः
किरातकोऽन्यो नैपालः सोऽर्द्धतिक्तो ज्वरान्तकः १५४

किरातः सारको रूक्षः शीतलस्तिक्तको लघुः
सन्निपातज्वरश्वासकफपित्तास्रदाहनुत्
कासशोथतृषाकुष्ठज्वरव्रणकृमिप्रणुत् १५५

उक्तं कुटजबीजं तु यवमिन्द्रयवं तथा
कलिङ्गं चापि कालिङ्गं तथा भद्रयवा अपि १५६

क्वचिदिन्द्रस्य नामैव भवेत्तदभिधायकम्
फलानीन्द्रयवास्तस्य तथा भद्रयवा अपि १५७

इन्द्रयवं त्रिदोषघ्नं संग्राहि कटु शीतलम् १५८

ज्वरातीसाररक्तार्शोवमिवीसर्पकुष्ठनुत्
दीपनं गुदकीलास्रवातास्रश्लेष्मशूलजित् १५९

मदनश्छर्दनः पिण्डो नटः पिण्डीतकस्तथा
करहाटो मरुवकः शल्यको विषपुष्पकः १६०

मदनो मधुरस्तिक्तो वीर्योष्णो लेखनो लघुः
वान्तिकृद्विद्रधिहरः प्रतिश्यायव्रणान्तकः
रूक्ष कुष्ठकफानाहशोथगुल्मव्रणापहः १६१

रास्ना युक्तरसा रस्या सुवहा रसना रसा
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा १६२

रास्नाऽमपाचिनी तिक्ता गुरूष्णा कफवातजित् १६३

शोथश्वाससमीरास्रवातशूलोदरापहा
कासज्वरविषाशीतिवातिकामयसिध्महृत् १६४

नाकुली सुरसा नागसुगन्धा गन्धनाकुली
नकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनी १६५

नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्
भोगिलूतावृश्चिकाखुविषज्वरकृमिव्रणान् १६६

माचिकाप्रस्थिकाऽम्बष्ठा तथा चाम्बालिकांऽबिका
मयूरविदला केशीसहस्रा बालमूलिका १६७

माचिकाऽम्ला रसे पाके कषाया शीतला लघुः
पक्वातीसारपित्तास्रकफकराठामयापहा १६८

तेजस्विनी तेजवती तेजोह्वा तेजनी तथा १६९

तेजस्विनी कफश्वासकासास्यामयवातहृत्
पाचन्युष्णाकटुस्तिक्तारुचिवह्निप्रदीपिनी १७०

ज्योतिष्मती स्यात्कटभी ज्योतिष्का कङ्गुनीति च
पारावतपदी पिराया लता प्रोक्ता ककुन्दनी १७१

ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित्
अत्युष्णा वामनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा १७२

कुष्ठं रोगाह्वयं वाप्यं पारिभव्यं तथोत्पलम्
कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु
हन्ति वातास्रवीसर्पकासकुष्ठमरुत्कफान् १७३

उक्तं पुष्करमूलं तु पौष्करं पुष्करञ्च तत्
पद्मपत्रञ्च काश्मीरं कुष्ठभेदमिमं जगुः १७४

पौष्करं कटुकं तिक्तमुक्तं वातकफज्वरान्
हन्ति शोथारुचिश्वासान्विशेषात्पार्श्वशूलनुत् १७५

कटुपर्णी हैमवती हेमक्षीरी हिमावती
हेमाह्वा पीतदुग्धा च तन्मूलं चोकमुच्यते १७६

हेमाह्वा रेचनी तिक्ता भेदिन्युत्क्लेशकारिणी

कृमिकण्डूविषानाहकफपित्तास्रकुष्ठनुत् १७७

शृङ्गी कर्कटशृङ्गी च स्यात्कुलीरविषाणिका
अजशृङ्गी च चक्रा च कर्कटाख्या च कीर्त्तिता १७८

शृङ्गी कषाया तिक्तोष्णा कफवातक्षयज्वरान्
श्वासोर्ध्ववाततृट्कासहिक्काऽरुचिवमीन्हरेत् १७९

कट्फलः सोमवल्कश्च कैटर्य्यः कुम्भिकाऽपि च
श्रीपर्णिका कुमुदिका भद्रा भद्रवतीति च १८०

कट्फलस्तुवरस्तिक्तः कटुर्वातकफज्वरान्
हन्ति श्वासप्रमेहार्शः कासकण्ठामयारुचीः १८१

भार्गी भृगुभवा पद्मा फञ्जी ब्राह्मणयष्टिका
ब्राह्मणयङ्गारवल्ली च खरशाकश्च हञ्जिका १८२

भार्गी रूक्षा कटुस्तिक्ता रुच्योष्णा पाचनी लघुः
दीपनी तुवरा गुल्मरक्तनुन्नाशयेद् ध्रुवम्
शोथकासकफश्वासपीनसज्वरमारुतान् १८३

पाषाणभेदकोऽश्मघ्नो गिरिभिद्भिन्नयोजिनी
अश्मभेदो हिमस्तिक्तः कषायो वस्तिशोधनः १८४

भेदनो हन्ति दोषार्शोगुल्मकृच्छ्राश्महृद्रुजः
योनि रोगान्प्रमेहांश्च प्लीह शूल व्रणानि च १८५

धातकी धातुपुष्पी च ताम्रपुष्पी च कुञ्जरा
सुभिक्षा बहुपुष्पी च वह्निज्वाला च सा स्मृता १८६

धातकी कटुका शीता मृदुकृत्तुवरा लघुः

तृष्णाऽतीसारपित्तास्त्रविषकृमिविसर्पजित् १८७

मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका १८८

मराडूकपर्णी भराडीरी भराडी योजनवल्ल्यपि
रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका १८९

भराडीतकी च गराडीरी मञ्जूषा वस्त्ररञ्जिनी
मञ्जिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत् १९०

गुरुरुष्णा विषश्लेष्मशोथयोन्यद्मिकर्णरुक्
रक्तातीसार कुष्ठास्त्र वीसर्पव्रणमेहनुत् १९१

स्यात्कुसुम्भं वह्निशिखं वस्त्ररञ्जकमित्यपि
कुसुम्भं वातलं कृच्छ्ररक्तपित्तकफापहम् १९२

लाज्ञा पलंकषालक्तो यावो वृज्ञामयो जतुः
लाज्ञा वरार्या हिमा बल्या स्निग्धा च तुवरा लघुः १९३

ब्राह्मरायङ्गारवल्ली च खरशाखा च हञ्जिका
अनुष्णा कफपित्तास्त्रहिक्काकासज्वरप्रणुत् १९४

व्रणोरःज्ञतवीसर्पकृमिकुष्ठगदापहा
अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्गनाशनः १९५

हरिद्रा काञ्चनी पीता निशाऽख्या वरवर्णिनी
कृमिघ्नी हलदी योषित्प्रिया हट्टविलासिनी १९६

हरिद्रा कटुका तिक्ता रूज्ञोष्णा कफपित्तनुत्
वरार्या त्वग्दोषमेहास्त्रशोथपाराडुव्रणापहा १९७

दार्वी मेदाऽम्रगन्धा च सुरभीदारु दारु च

कर्पूरा पद्मपत्रा स्यात्सुरीमत्सुरतारका १९८

आम्रगंधिर्हरिद्रा या सा शीता वातला मता
पित्तहृन्मधुरा तिक्ता सर्वकराडूविनाशिनी १९९

अरगयहलदीकन्दः कुष्ठवातास्रनाशनः २००

दार्वी दारुहरिद्रा च पर्जन्या पर्जनीति च
कटङ्कटेरी पीता च भवेत्सैव पचम्पचा
सैव कालीयकः प्रोक्तस्तथा कालेयकोऽपि च २०१

पीतद्रुश्च हरिद्रुश्च पीतदारु च पीतकम्
दार्वी निशागुणा किन्तु नेत्र कर्णास्यरोगनुत् २०२

दार्वीक्वाथसमं क्षीरं पादं पक्त्वा यदा घनम्
तदा रसाञ्जनाख्यं तन्नेत्रयोः परमं हितम् २०३

रसाञ्जनं तार्त्क्ष्यशैलं रसगर्भश्च तार्क्ष्यजम्
रसाञ्जनं कटु श्लेष्मविषनेत्रविकारनुत् २०४

उष्णं रसायनं तिक्तं छेदनं व्रणदोषहृत् २०५

अवल्गुजो वाकुची स्यात्सोमराजी सुपर्णिका
शशिलेखा कृष्णफला सोमा पूतिफलीति च २०६

सोमवल्ली कालमेषी कुष्ठघ्नी च प्रकीर्त्तिता
बाकुची मधुरा तिक्ता कटुपाका रसायनी २०७

विष्टम्भहृद्धिमा रुच्या सरा श्लेष्मास्रपित्तनुत्
रूक्षा हृद्या श्वासकुष्ठमेहज्वरकृमिप्रणुत् २०८

तत्फलं पित्तलं कुष्ठकफानिलहरं कटु

केश्यं त्वच्यं कृमिश्वासकासशोथामपाराडुनुत् २०६

चक्रमर्दः प्रपुन्नाटो दद्रुघ्नो मेषलोचनः
पद्माटः स्यादेडगजश्चक्री पुन्नाट इत्यपि ११०

चक्रमर्दो लघुः स्वादू रूक्षः पित्तानिलापहः
हृद्यो हिमः कफश्वासकुष्ठदद्रुकृमीन्हरेत् २११

हन्त्युष्णं तत्फलं कुष्ठकराडूदद्रुविषानिलान्
गुल्मकासकृमिश्वासनाशनं कटुकं स्मृतम् २१२

विषा त्वतिविषा विश्वा शृङ्गी प्रतिविषाऽरुणा
शुक्लकन्दा चोपविषा भङ्गुरा घुणवल्लभा २१३

विषा सोष्णा कटुस्तिक्ता पाचनी दीपनी हरेत्
कफपित्तातिसारामविषकासवमिकृमीन् २१४

लोध्रस्तिल्वस्तिरीटश्च शावरो गालवस्तथा
द्वितीयः पट्टिकालोध्रः क्रमुकः स्थूलवल्कलः
जीर्णपत्रो बृहत्पत्रः पट्टी लाक्षाप्रसादनः २१५

लोध्रो ग्राही लघुः शीतश्चक्षुष्यः कफपित्तनुत्
कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत् २१६

लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम्
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः २१७

यदाऽमृतं वैनतेयो जहार सुरसत्तमात्
तदा ततोऽपतद् विन्दुः स रसोनोऽभवद्भुवि २१८

पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जितः

तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः २१६

कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः
नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः
बीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः २२०

रसोनो वृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः
रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः २२१

भग्नसन्धानकृत्कण्ठ्यो गुरुः पित्तास्त्रवृद्धिदः
बलवर्णकरो मेधाहितो नेत्र्यो रसायनः २२२

हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोफान्
दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्च हन्ति २२३

मद्यं मांसं तथाऽम्लञ्च हितं लशुनसेविनाम्
व्यायाममातपं रोषमतिनीरं पयो गुडम् २२४

रसोनमश्नन् पुरुषस्त्यजेदेतान् निरन्तरम् २२५

पलाण्डुर्यवनेष्टश्च दुर्गन्धो मुखदूषकः
पलाण्डुस्तु बुधैर्ज्ञेयो रसोनसदृशो गुणैः २२६

स्वादुः पाके रसेऽनुष्णः कफकृन्नातिपित्तलः
हरते केवलं वातं बलवीर्यकरो गुरुः २२७

भल्लातकं त्रिषु प्रोक्तमरुष्कोरुष्करोऽग्निकः
तथैवाग्निमुखी भल्ली वीरवृक्षश्च शोफकृत् २२८

भल्लातकफलं पक्वं स्वादुपाकरसं लघु
कषायं पाचनं स्निग्धं तीक्ष्णोष्णं छेदि भेदनम् २२९

मेध्यं वह्निकरं हन्ति कफवातव्रणोदरम्
कुष्ठार्शोग्रहणीगुल्मशोफानाहज्वरकृमीन् २३०

तन्मज्ञा मधुरा वृष्या बृंहणी वातपित्तहा
वृन्तमारुष्करं स्वादु पित्तघ्नं केश्यमग्निकृत् २३१

भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः
वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान्
हन्ति गुल्मज्वरश्वित्रवह्निमान्द्यकृमिव्रणान् २३२

भङ्गा गञ्जा मातुलानी मादिनी विजया जया २३३

भङ्गा कफ हरी तिक्ता ग्राहिणी पाचनी लघुः
तीक्ष्णोष्णा पित्तला मोहमदवाग्वह्निवर्द्धिनी २३४

तिलभेदः खसतिलः खाखसश्चापि स स्मृतः
स्यात् खाखसफलोद्भूतं वल्कलं शीतलं लघु २३५

ग्राहि तिक्तं कषायञ्च वातकृत् कफकासहृत् २३६

धातूनां शोषकं रूक्षंमदकृद्वाग्विवर्धनम्
मुहुर्मोहकरं रुच्यं सेवनात्पुंस्त्वनाशनम् २३७

उक्तं खसफलक्षीरमाफूकमहिफेनकम्
आफूकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तलम्
तथा खसफलोद्भूतवल्कलप्रायमित्यपि २३८

उच्यन्ते खसबीजानि ते खाखसतिला अपि २३९

खसबीजानिबल्यानि वृष्याणि सुगुरूणि च
जनयन्ति कफं तानि शमयन्ति समीरणम् २४०

सैन्धवोऽस्त्री शीतशिवं मणिमन्थञ्च सिन्धुजम्
सैन्धवं लवणं स्वादु दीपनं पाचनं लघु
स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत् २४१

शाकम्भरीयं कथितं गडाख्यं रोमकं तथा २४२

गडाख्यं लघु वातघ्नमत्युष्णं भेदिपित्तलम्
तीक्ष्णोष्णं चापि सूक्ष्मञ्चाभिष्यन्दिकटुपाकि च २४३

सामुद्रं यत्तुलवणमक्षीवं वशिरञ्च तत्
समुद्रजं सागरजं लवणोदधिसम्भवम् २४४

सामुद्रं मधुरं पाके सतिक्तं मधुरं गुरु
नात्युष्णं दीपनं भेदि सक्षारमविदाहि च
श्लेष्मलं वातनुत्तीक्ष्णमरूक्षं नातिशीतलम् २४५

बिडं पाक्यञ्च कृतकं तथा द्राविडमासुरम्
बिडं सक्षारमूर्ध्वाधः कफवातानुलोमनम् २४६

दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च
विबन्धानाहविष्टम्भहृद्रुग्गौरवशूलनुत् २४७

सौवर्चलं स्याद्रुचकं मन्थपाकञ्च तन्मतम्
रुचकं रोचनं भेदि दीपनं पाचनं परम् २४८

सस्नेहं वातनुन्नातिपित्तलं विशदं लघु
उद्गारशुद्धिदं सूक्ष्मं विबन्धानाहशूलजित् २४९

औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयम्
क्षारं गुरु कटु स्निग्धं शीतलं वातनाशनम् २५०

चणकाम्लकमत्युष्णं दीपनं दन्तहर्षणम्
लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत् २५१

पाक्यं क्षारो यवक्षारो यावशूको यवाग्रजः
स्वर्जिकाऽपि स्मृतः क्षारः कापोतः सुखवर्चकः २५२

कथितः स्वर्जिकाभेदो विशेषज्ञैः सुवर्चिका
यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः २५३

निहन्ति शूलवातामश्लेष्मश्वासगलामयान्
पाण्ड्वर्शोग्रहणीगुल्मानाहप्लीहहृदामयान् २५४

स्वर्जिकाऽल्पगुणा तस्माद्विज्ञेया गुल्मशूलहृत्
सुवर्चिका स्वर्जिकावद् बोद्धव्या गुणतो जनैः २५५

सौभाग्यं टङ्कणं क्षारं धातुद्रावकमुच्यते
टङ्कणं वह्निकृद्रूक्षं कफहृद्वातपित्तकृत् २५६

स्वर्जिका यावशूकश्च क्षारद्वयमुदाहृतम्
टङ्कणेन युतं तत्तु क्षारत्रयमुदीरितम् २५७

मिलितं तूक्तगुणकृद्विशेषाद्गुल्महृत्परम्
पलाश वज्रि शिखरि चिञ्चाऽकतिलनालजाः २५८

यवजः स्वर्जिका चेति क्षाराष्टकमुदाहृतम्
क्षारा एतेऽग्निना तुल्या गुल्मशूलहरा भृशम् २५९

चुक्रंसहस्रवेधि स्याद्रसाम्लं शुक्तमित्यपि
चुक्रमत्यम्लमुष्णञ्च दीपनं पाचनं परम् २६०

शूलगुल्मविबन्धामवातश्लेष्महरं सरम्

वमितृष्णाऽस्यवैरस्यहृत्पीडावह्निमान्द्यहृत् २६१

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
द्वितीयो हरीतक्यादिवर्गः समाप्तः

अथ कर्पूरादिवर्गः

पुंसि क्लीबे च कर्पूरः सिताभ्रो हिमवालुकः
घनसारश्चन्द्रसंज्ञो हिमनामाऽपि स स्मृतः १

कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः
सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः २

दाहतृष्णाऽस्यवैरस्यमेदोदौर्गन्ध्यनाशनः
कर्पूरो द्विविधः प्रोक्तः पक्वापक्वप्रभेदतः
पक्वात्कर्पूरतः प्राहुरपक्वं गुणवत्तरम् ३

चीनाकसंज्ञः कर्पूरः कफक्षयकरः स्मृतः
कुष्ठकरण्डूवमिहरस्तथा तिक्तरसश्च सः ४

मृगनाभिर्मृगमदः कथितस्तु सहस्रभित्
कस्तूरिका च कस्तूरी वेधमुख्या च सा स्मृता ५

कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक्
काश्मीरी कपिलच्छाया कस्तूरी त्रिविधा स्मृता ६

कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत्
काश्मीरदेशसम्भूता कस्तूरी ह्यधमा मता ७

कस्तूरिका कटुस्तिक्ता क्षारोष्णा शुक्रला गुरुः
कफवातविषच्छर्दिशीतदौर्गन्ध्यशोषहृत् ८

लता कस्तूरिका तिक्ता स्वाद्वी वृष्या हिमा लघुः

चक्षुष्या छेदिनी श्लेष्मतृष्णाबस्त्यास्यरोगहृत् ९

गन्धमार्जारवीर्यन्तु वीर्यकृत्कफवातहृत्
कण्डूकुष्ठहरं नेत्र्यं सुगन्धं स्वेदगन्धनुत् १०

श्रीखण्डं चन्दनं न स्त्री भद्रश्रीस्तैलपर्णिकः
गन्धसारो मलजयस्तथा चन्द्रद्युतिश्च सः ११

स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम्
ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते १२

चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु
श्रमशोषविषश्लेष्मतृष्णापित्तास्रदाहनुत् १३

कालीयकं तु कालीयं पीताभं हरिचन्दनम् १४

हरिप्रियं कालसारं तथा कालानुसार्यकम्
कालीयकं रक्तगुणं विशेषाद् व्यङ्गनाशनम् १५

रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम्
तिलपर्णं रक्तसारं तत्प्रवालफलं स्मृतम् १६

रक्तं शीतं गुरु स्वादुच्छर्दितृष्णाऽस्रपित्तहृत्
तिक्तं नेत्रहितं वृष्यं ज्वरव्रणविषापहम् १७

पतङ्गं रक्तसारञ्च सुरङ्गं रञ्जनं तथा
पट्टरञ्जकमाख्यातं पत्तूरञ्च कुचन्दनम् १८

पतङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रनुत्
हरिचन्दनवद्वेद्यं विशेषाद्दाहनाशनम् १९

चन्दनानि तु सर्वाणि सदृशानि रसादिभिः

गन्धेन तु विशेषोऽस्ति पूर्वः श्रेष्ठतमो गुणैः २०

अगुरु प्रवरं लोहं राजार्हं योगजं तथा
वंशिकं कृमिजं वाऽपि कृमिजग्धमनार्यकम् २१

अगुरूष्णं कटु त्वच्यं तिक्तं तीक्ष्णञ्च पित्तलम्
लघु कर्णाक्षिरोगघ्नं शीतवातकफप्रणुत् २२

कृष्णं गुणाधिकं तत्तु लोहवद्वारि मज्जति
अगुरुप्रभवः स्नेहः कृष्णागुरुसमः स्मृतः २३

देवदारु स्मृतं दारुभद्रं दार्विन्द्रदारु च
मस्तदारु द्रुकिलिमं किलिमं सुरभूरुहः २४

देवदारु लघु स्निग्धं तिक्तोष्णं कटुपाकि च
विबन्धाध्मानशोथामतन्द्राहिक्काज्वरास्रजित्
प्रमेहपीनसश्लेष्मकासकण्डूसमीरनुत् २५

सरलः पीतवृक्षः स्यात्तथा सुरभिदारुकः
सरलो मधुरस्तिक्तो कटुपाकरसो लघुः २६

स्निग्धोष्णः कर्णकण्ठाक्षिरोगरक्षोहरः स्मृतः
कफानिलस्वेददाहकासमूर्छाव्रणापहः २७

कालानुसार्यं तगरं कुटिलं नहुषं नतम्
अपरं पिण्डतगरं दण्डहस्ती च बर्हिणम् २८

तगरद्वयमुष्णं स्यात्स्वादु स्निग्धं लघु स्मृतम्
विषापस्मारशूलाक्षिरोगदोषत्रयापहम् २९

पद्मकं पद्मगन्धि स्यात्तथा पद्माह्वयं स्मृतम्

पद्मकं तुवरं तिक्तं शीतलं वातलं लघु ३०

वीसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्तनुत्
गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत् ३१

गुग्गुलर्देवधूपश्च जटायुः कौशिकः पुरः
कुम्भोलूखलकं क्लीबे महिषाक्षः पलङ्कषः ३२

महिषाक्षो महानीलः कुमुदः पद्म इत्यपि
हिरण्यः पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः ३३

भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः
महानीलस्तु विज्ञेयः स्वनामसमलक्षणः ३४

कुमुदः कुमुदाभः स्यात्पद्मो माणिक्यसन्निभः
हिरण्याख्यस्तु हेमाभः पञ्चानां लिङ्गमीरितम् ३५

महिषाक्षो महानीलो गजेन्द्राणां हितावुभौ
हयानां कुमुदः पद्मः स्वस्त्यारोग्यकरौ परौ ३६

विशेषेण मनुष्याणां कनकः परिकीर्त्तितः
कदाचिन्महिषाक्षश्च मतः कैश्चिन्नृणामपि ३७

गुग्गुलुर्विशदस्तिक्तो वीर्योष्णः पित्तलः सरः
कषायः कटुकः पाके कटू रूक्षो लघुः परः ३८

भग्नसन्धानकृद् वृष्यः सूक्ष्मः स्वर्यो रसायनः
दीपनः पिच्छिलो बल्यः कफवातव्रणापचीः ३९

मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान्
पिडकाग्रन्थिशोफार्शगण्डमालाकृमीञ्जयेत् ४०

माधुर्याच्छमयेद्वातं कषायत्वाच्च पित्तहा
तिक्तत्वाद् कफजित्तेन गुग्गुलुः सर्वदोषहा ४१

स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः ४२

स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः
नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः ४३

शुष्को दुर्गन्धकश्चैव त्यक्तप्रकृतिवर्णकः
पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्यवर्जितः ४४

अम्लं तीक्ष्णमजीर्णञ्च व्यवायं श्रममातपम्
मद्यं रोषं त्यजेत्सम्यग् गुणार्थी पुरसेवकः ४५

श्रीवासः सरलस्रावः श्रीवेष्टो वृक्षधूपकः
श्रीवासो मधुरस्तिक्तः स्निग्धोष्णस्तुवरः सरः ४६

पित्तलो वातमूर्द्धाक्षिस्वररोगकफापहः
रक्षोघ्नः स्वेददौर्गन्ध्ययूकाकण्डूव्रणप्रणुत् ४७

रालस्तु शालनिर्यासस्तथा सर्ज्जरसः स्मृतः
देवधूपो यक्षधूपस्तथा सर्वरसश्च सः ४८

रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत्
दोषास्त्रस्वेदवीसर्पज्वरव्रणविपादिकाः
ग्रहभग्नाग्निदग्धांश्च शूलातीसारनाशनः ४९

कुन्दुरुस्तु मुकुन्दः स्यात्सुगन्धः कुन्द इत्यपि ५०

कुन्दुरुर्मधुरस्तिक्तस्तीक्ष्णस्त्वच्यः कटुर्हरेत्
ज्वरस्वेदग्रहालक्ष्मीमुखरोगकफानिलान् ५१

सिह्लकस्तु तुरुष्कः स्याद्यतो यवनदेशजः
कपितैलश्च संख्यातस्तथा च कपिनामकः ५२

सिह्लकःकटुकःस्वादुः स्निग्धोष्णःशुक्रकान्तिकृत्
वृष्यः कण्ठ्यः स्वेदकुष्ठज्वरदाहग्रहापहः ५३

जातीफलं जातिकोशं मालतीफलमित्यपि
जातीफलं रसे तिक्तं तीक्ष्णोष्णं रोचनं लघु
कटुकं दीपनं ग्राहि स्वर्यं श्लेष्मानिलापहम् ५४

निहन्ति मुखवैरस्यं मलदौर्गन्ध्यकृष्णताः
कृमिकासवमिश्वासशोषपीनसहृद्रुजः ५५

जातीफलस्य त्वक् प्रोक्ता जातीपत्री भिषग्वरैः ५६

जातीपत्री लघुः स्वादुः कटूष्णा रुचिवर्णकृत्
कफकासवमिश्वासतृष्णाकृमिविषापहा ५७

लवङ्गं देवकुसुमं श्रीसंज्ञं श्रीप्रसूनकम्
लवङ्गं कटुकं तिक्तं लघु नेत्रहितं हिमम् ५८

दीपनं पाचनं रुच्यं कफपित्तास्रनाशकृत्
तृष्णां छर्दिं तथाऽध्मानं शूलमाशु विनाशयेत्
कासं श्वासञ्च हिक्काञ्च क्षयं क्षपयति ध्रुवम् ५९

एला स्थूला च बहुला पृथ्वीका त्रिपुटाऽपि च ६०

भद्रैला बृहदेला च चन्द्रबाला च निष्कुटिः
स्थूलैला कटुका पाके रसे चानलकृल्लघुः ६१

रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषाऽपहा

हृल्लासविषबस्त्यास्यशिरोरुग्वमिकासनुत् ६२

सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी द्राविडी त्रुटिः
एला सूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रहृत्
रसे तु कटुका शीता लघ्वी वातहरी मता ६३

त्वक्पत्रञ्च वराङ्गं स्याद् भृङ्गं चोचं तथोत्कटम्
त्वचं लघूष्णं कटुकं स्वादु तिक्तञ्च रूक्षकम् ६४

पित्तलं कफवातघ्नं कण्ड्वामारुचिनाशनम्
हृद्बस्तिरोगवातार्शः कृमिपीनसशुक्रहृत् ६५

त्वक्स्वाद्वी तु तनुत्वक्स्यात्तथा दारुसिता मता ६६

उक्ता दारुसिता स्वाद्वी तिक्ताचानिलपित्तहृत्
सुरभिः शुक्रलाबल्या मुखशोषतृषापहा ६७

पत्रं तमालपत्रञ्च तथा स्यात्पत्रनामकम्
पत्रकं मधुरं किञ्चित्तीक्ष्णोष्णं पिच्छिलं लघु
निहन्ति कफवातार्शोहृल्लासारुचिपीनसान् ६८

नागपुष्प स्मृतो नागः केशरो नागकेशरः
चाम्पेयो नागकिञ्जल्कः कथितः काञ्चनाह्वयः ६९

नागपुष्पं कषायोष्णं रूक्षं लघ्वामपाचनम् ७०

ज्वरकण्डूतृषास्वेदच्छर्दिहृल्लासनाशनम्
दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ७१

त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम्
नागकेशरसंयुक्तं चातुर्जातकमुच्यते ७२

तद् द्वयं रोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत्
लघुपित्ताग्निकृद्वर्ण्यं कफवातविषापहम् ७३

कुङ्कुमं घुसृणं रक्तं काश्मीरं पीतकं वरम्
संकोचं पिशुनं धीरं बाह्लीकं शोणिताभिधम् ७४

काश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धि तत्
सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम् ७५

बाह्लीकदेशसञ्जातं कुङ्कुमं पाण्डुरं स्मृतम्
केतकीगन्धयुक्तं तन्मध्यमं सूक्ष्मकेशरम् ७६

कुङ्कुमं पारसीकं यन्मधुगन्धि तदीरितम्
ईषत्पाण्डुरवर्णं तदधमं स्थूलकेशरम् ७७

कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित्
तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम् ७८

गोरोचना तु मङ्गल्या वन्द्या गौरी च रोचना
गोरोचना हिमा तिक्ता वश्या मङ्गलकान्तिदा
विषालक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्रहृत् ७९

नखं व्याघ्रनखं व्याघ्रायुधं तच्चक्रकारकम् ८०

नखं स्वल्पं नखी प्रोक्ता हनुर्हट्टविलासिनी
नखद्वयं ग्रहश्लेष्मवातास्रज्वरकुष्ठहृत् ८१

लघूष्णं शुक्रलं वर्ण्यं स्वादु व्रणविषापहम्
अलक्ष्मीमुखदौर्गन्ध्यहृत्पाकरसयोः कटुः ८२

बालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च

बालकं शीतलं रूक्षं लघु दीपनपाचनम्
हृल्लासारुचिवीसर्पहृद्रोगामातिसारजित् ८३

स्याद्वीरणं वीरतरुर्वीरञ्च बहुमूलकम्
वीरणं पाचनं शीतं वान्तिहृल्लघु तिक्तकम् ८४

स्तम्भनं ज्वरनुद् भ्रान्तिमदजित्कफपित्तहृत्
तृष्णाऽस्रविषवीसर्पकृच्छ्रदाहव्रणापहम् ८५

वीरणस्य तु मूलं स्यादुशीरं नलदञ्च तत्
अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि ८६

उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम् ८७

मधुरं ज्वरहृद्वान्तिमदनुत्कफपित्तहृत्
तृष्णाऽस्रविषवीसर्पदाहकृच्छ्रवणापहम् ८८

जटामांसी भूतजटा जटिला च तपस्विनी
मांसी तिक्ता कषाया च मेध्या कान्तिबलप्रदा
स्वाद्वी हिमा त्रिदोषास्रदाहवीसर्पकुष्ठनुत् ८९

शैलेयन्तु शिलापुष्पं वृद्धं कालानुसार्य्यकम् ९०

शैलेयं शीतलं हृद्यं कफपित्तहरं लघु
कगडूकुष्ठाश्मरीदाहविष हृद् गुदरक्तहृत् ९१

मुस्तकं न स्त्रियां मुस्तं त्रिषु वारिदनामकम्
कुरुविन्दश्च संख्यातोऽपरः क्रोडकसेरुकः ९२

भद्रमुस्तञ्च गुन्द्रा च तथा नागरमुस्तकः
मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम् ९३

कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत्
अनूपदेशे यज्जातं मुस्तकं तत्प्रशस्यते
तत्रापि मुनिभिः प्रोक्तं वरं नागरमुस्तकम् ९४

कर्चूरो वेधमुख्यश्च द्राविडः कल्पकः शटी
कर्चुरो दीपनो रुच्यः कटुकस्तिक्त एव च ९५

सुगन्धिः कटुपाकः स्यात्कुष्ठार्शोव्रणकासनुत्
उष्णो लघुर्हरेछ्वासं गुल्मवातकफकृमीन् ९६

मुरा गन्धकुटी दैत्या सुरभिः शालपर्णिका ९७

मुरा तिक्ता हिमा स्वाद्वी लघ्वी पित्तानिलापहा
ज्वरासृग्भूतरक्षोघ्नी कुष्ठकासविनाशिनी ९८

शठी पलाशी षड्ग्रन्था सुव्रता गन्धमूलिका
गन्धारिका गन्धवधूर्वधूः पृथुपलाशिका ९९

भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः
तिक्ता तीक्ष्णा च कटुकाऽनुष्णाऽस्यमलनाशिनी
शोथकासव्रणश्वासशूलसिध्मग्रहापहा १००

प्रियङ्गुः फलिनी कान्ता लता च महिलाऽह्वया १०१

गुन्द्रा गन्धफला श्यामा विष्वक्सेनाङ्गनाप्रिया
प्रियङ्गुः शीतला तिक्ता तुवराऽनिलपित्तहृत् १०२

रक्तातीसारदौर्गन्ध्यस्वेददाहज्वरापहा
वान्तिभ्रान्त्यतिसारघ्नी वक्त्रजाड्यविनाशिनी
गुल्मतृड्विषमोहघ्नी तद्वद् गन्धप्रियङ्गुका १०३

तत्फलं मधुरं रूक्षं कषायं शीतलं गुरु
विबन्धाध्मानबलकृत्संग्राहि कफपित्तजित् १०४

रेणुकाराजपुत्री च नन्दिनी कपिला द्विजा
भस्मगन्धा पाराडुपुत्री स्मृता कौन्ती हरेणुका १०५

रेणुका कटुका पाके तिक्ताऽनुष्णा कटुर्लघुः
पित्तला दीपनी मेध्या पाचनी गर्भपातिनी
बलासवातकृच्चैव तृट्कराडूविषदाहनुत् १०६

ग्रन्थिपर्णं ग्रन्थिकञ्च काकपुच्छञ्च गुच्छकम्
नीलपुष्पं सुगन्धञ्च कथितं तैलपर्णकम् १०७

ग्रन्थिपर्णं तिक्ततीक्ष्णं कटूष्णं दीपनं लघु
कफवातविषश्वासकराडूदौर्गन्ध्यनाशनम् १०८

स्थौणेयकं बर्हिबर्हं शुक्रबर्हञ्च कुक्कुरम्
शीर्णरोमशुकञ्चापि शुकपुष्पं शुकच्छदम् १०९

स्थौणेयकं कटु स्वादु तिक्तं स्निग्धं त्रिदोषनुत् ११०

मेधाशुक्रकरं रुच्यं रक्षोघ्नं ज्वरजन्तुजित्
हन्ति कुष्ठास्रतृड्दाहदौर्गन्ध्यतिलकालकान् १११

निशाचरो धनहरः कितवो गणहासकः
चोरकः शङ्कितश्चराडो दुष्पत्रः क्षेमको रिपुः
चोरको मधुरस्तिक्तः कटुः पाके कटुर्लघुः ११२

तीक्ष्णो हृद्यो हिमो हन्ति कुष्ठकराडूकफानिलान्
रक्षोऽश्रीस्वेदमेदोऽस्रज्वरगन्धविषव्रणान् ११३

तालीसमुक्तं पत्राढ्यं धात्रीपत्रञ्च तत्स्मृतम् ११४

तालीसं लघु तीक्ष्णोष्णं श्वासकासकफानिलान्
निहन्त्यरुचिगुल्मामवह्निमांद्यक्षयामयान् ११५

कङ्कोलं कोलकं प्रोक्तं तथा कोषफलं स्मृतम्
कङ्कोलं लघु तीक्ष्णोष्णं तिक्तं हृद्यं रुचिप्रदम्
आस्यदौर्गन्ध्यहृद्रोगकफवातामयान्ध्यहृत् ११६

स्निग्धोष्णा कफहृत्तिक्ता सुगन्धा गन्धकोकिला
गन्धकोकिलया तुल्या विज्ञेया गन्धमालती ११७

लामज्जकं सुनालं स्यादमृणालं लवं लघु
इष्टकापथकं सेव्यं नलदञ्चावदातकम् ११८

लामज्जकं हिमं तिक्तं लघु दोषत्रयास्त्रजित्
त्वगामयस्वेदकृच्छ्रदाहपित्तास्त्ररोगनुत् ११९

एलवालुकमैलेयं सुगन्धि हरिवालुकम्
एलवालुकमेलालु कपित्थत्वचमीरितम् १२०

एलालु कटुकं पाके कषायं शीतलं लघु
हन्तिकण्डूव्रणच्छर्दितृट्कासारुचिहृद्रुजः
बलासविषपित्तास्त्रकुष्ठमूत्रगदकृमीन् १२१

कुटन्नटं दासपुरं बालेयं परिपेलवम्
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च १२२

मुस्तावत्पेलवपुरं शुकाभं स्याद्वितुन्नकं १२३

वितुन्नकं हिमं तिक्तं कषायं कटु कान्तिदम्

कफपितास्त्रवीसर्पकुष्ठकराडूविषप्रणुत् १२४

स्पृक्काऽसृग् ब्राह्मणी देवी मरुन्माला लता लघुः
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि १२५

स्पृक्का स्वाद्वी हिमा वृष्या तिक्ता निखिलदोषनुत्
कुष्ठकराडूविषस्वेददाहाश्री ज्वररक्तहृत् १२६

पर्पटी रञ्जना कृष्णा जतुका जननी जनी
जतुकृष्णाऽग्निसंस्पर्शा जतुकृच्चक्रवर्त्तिनी १२७

पर्पटी तुवरा तिक्ता शिशिरा वर्णकृल्लघुः
विषव्रणहरी कराडूकफपित्तास्त्रकुष्ठनुत् १२८

नलिका विद्रुमलता कपोतचरणा नटी
धमन्यञ्जनकेशी च निर्मध्या सुषिरा नली १२९

नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत्
कृच्छ्राश्मवाततृष्णाऽस्त्रकुष्ठकराडूज्वरापहा १३०

प्रपौराडरीकं पौराडर्यं चक्षुष्यं पौराडरीयकम्
पौराडर्यं मधुरं तिक्तं कषायं शुक्रलं हिमम्
चक्षुष्यं मधुरं पाके वरार्यं पित्तकफप्रणुत् १३१

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे वर्गप्रकरणे
तृतीयः कर्पूरादिवर्गः समाप्तः ३

अथ गुडूच्यादिवर्गः

अथ लङ्केश्वरो मानी रावणो राक्षसाधिपः
रामपत्नीं बलात्सीतां जहार मदनातुरः १

ततस्तं वलवान् रामो रिपुं जायाऽपहारिणम्
वृतो बानरसैन्येन जघान रणमूर्धनि २

हते तस्मिन्सुरारातौ रावणे बलगर्विते
देवराजः सहस्राक्षः परितुष्टश्चराघवे ३

तत्र ये वानराः कैचिद्राक्षसैर्निहता रणे
तानिन्द्रो जीवयामास संसिच्यामृतवृष्टिभिः ४

ततो येषु प्रदेशेषु कपिगात्रात्परिच्युताः
पीयूषबिन्दवः पेतुस्तेभ्यो जाता गुडूचिका ५

गुडूची मधुपर्णी स्यादमृताऽमृतवल्लरी
छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ६

जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली
चक्रलक्षणिका धीरा विशल्या च रसायनी ७

चन्द्रहासा वयस्था च मण्डली देवनिर्मिता
गुडूची कटुका तिक्ता स्वादुपाका रसायनी ८
संग्राहिणी कषायोष्णा लघ्वी बल्याऽग्निदीपिनी
दोषत्रयामतृड्दाहमेहकासांश्च पाण्डुताम् ९
कामलाकुष्ठवातास्रज्वरकृमिवमीन्हरेत्
प्रिमेहश्वासकासार्शः कृच्छ्रहृद्रोगवातनुत् १०
ताम्बूलवल्ली ताम्बूली नागिनी नागवल्लरी
ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम् ११
वश्यं तिक्तं कटु क्षारं रक्तपित्तकरं लघु
बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् १२
बिल्वः शाण्डिल्यशैलूषौ मालूरश्रीफलावपि
श्रीफलस्तुवरस्तिक्तो ग्राही रूक्षोऽग्निपित्तकृत्
वातश्लेष्महरो बल्यो लघुरुष्णश्च पाचनः १३

गम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्णिका
काश्मीरी काश्मरी हीरा काश्मर्यः पीतरोहिणी १४
कृष्णवृन्ता मधुरसा महाकुसुमिकाऽपि च
काश्मीरी तुवरा तिक्ता वीर्योष्णा मधुरा गुरुः १५
दीपनी पाचनी मेध्या भेदिनी भ्रमशोषजित्
दोषतृष्णाऽमशूलार्शोविषदाहज्वरापहा १६
तत्फलं बृंहणं वृष्यं गुरु केश्यं रसायनम्
वातपित्ततृषारक्तक्षयमूत्रविबन्धनुत् १७
स्वादु पाके हिमं स्निग्धं तुवराम्लं विशुद्धिकृत्
हन्याद्दाहतृषावातरक्तपित्तक्षतक्षयान् १८
पाटलि पाटलाऽमोघा मधुदूतो फलेरुहा
कृष्णवृन्ता कुबेराक्षी कालस्थाल्यलिवल्लभा १९
ताम्रपुष्पी च कथिताऽपरा स्यात्पाटला सिता
मुष्कको मोक्षको घराटापाटलिकाष्टपाटला २०
पाटला तुवरा तिक्ताऽनुष्णा दोषत्रयापहा
अरुचिश्वासशोथास्त्रच्छर्दिहिक्कातृषाहरी २१
पुष्पं कषायं मधुरं हिमं हृद्यं कफास्त्रनुत्
पित्तातिसारहृत्कराठ्यं फलं हिक्काऽस्त्रपित्तहृत् २२
अग्निमन्थो जयः सस्याच्छ्रीपर्णी गणिकारिका
जया जयन्ती तर्कारी नादेयी वैजयन्तिका २३
अग्निमन्थः श्वयथुनुद्वीर्योष्णः कफवातहृत्
पाराडुनुत्कटुकस्तिक्तस्तुवरो मधुरोऽग्निदः २४
श्योनाकः शोषणश्च स्यान्नटकट्वङ्गटुराटुकाः
मराडूकपर्णपत्रोर्णशुकनासकुटन्नटाः २५
दीर्घवृन्तोऽरलुश्चापि पृथुशिम्बः कटम्भरः
श्योनाको दीपनः पाके कटुकस्तुवरो हिमः
ग्राही तिक्तोऽनिलश्लेष्मपित्तकासप्रणाशनः २६
टुराटुकस्य फलं बालं रूक्षं वातकफापहम् २७
हृद्यं कषायं मधुरं रोचनं लघु दीपनम्
गुल्मार्शःकृमिहृत् प्रौढं गुरु वातप्रकोपणम् २८

श्रीफलः सर्वतोभद्रा पाटला गणिकारिका
श्योनाकः पञ्चभिश्चैतैः पञ्चमूलं महन्मतम् २९
पञ्चमूलं महत् तिक्तं कषायँ कफवातनुत्
मधुरं श्वासकासघ्नमुष्णं लघ्वग्निदीपनम् ३०
शालपर्णी स्थिरा सौम्या त्रिपर्णी पीवरी गुहा
विदारिगन्धा दीर्घाङ्गी दीर्घपत्रांऽशुमत्यपि ३१
शालपर्णी गुरुश्छर्दिज्वरश्वासातिसारजित् ३२
शोषदोषत्रयहरी बृंहणयुक्ता रसायनी
तिक्ता विषहरी स्वादुः क्षतकासकृमिप्रणुत् ३३
पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यहिपर्ण्यपि
क्रोष्टुविन्ना सिंहपुच्छी कलशी धावनिर्गुहा ३४
पृश्निपर्णी त्रिदोषघ्नी वृष्योष्णा मधुराऽसरा
हन्ति दाहज्वरश्वासरक्तातीसारतृड्वमीः ३५
वार्त्ताकी क्षुद्रभण्टाकी महती बृहती कुली
हिङ्गुली राष्ट्रिका सिंही महोष्ट्री दुष्प्रधर्षिणी
बृहती ग्राहिणी हृद्या पाचनी कफवातहृत् ३६
कटुतिक्ताऽस्यवैरस्यमलारोचकनाशिनी
उष्णा कुष्ठज्वरश्वासशूलकासाग्निमान्द्यजित् ३७
कण्टकारी तु दुःस्पर्शा क्षुद्राव्याघ्री निदिग्धिका
कण्टालिका कण्टकिनी धावनी बृहती तथा ३८
श्वेता क्षुद्रा चन्द्रहासा लक्ष्मणा क्षेत्रदूतिका
गर्भदा चन्द्रमा चन्द्री चन्द्रपुष्पा प्रियङ्करी ३९
कण्टकारी सरा तिक्ता कटुका दीपनी लघुः ४०
रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान्
निहन्ति पीनसं पार्श्वपीडाकृमिहृदामयान् ४१
तयोः फलं कटु रसे पाके च कटुकं भवेत्
शुक्रस्य रेचनं भेदि तिक्तं पित्ताग्निकृल्लघु
हन्यात्कफमरुत्कण्डूकासमेदः कृमिज्वरान् ४२
तद्वत्प्रोक्ता सिता क्षुद्रा विशेषाद् गर्भकारिणी ४३
गोक्षुरः क्षुरकोऽपि स्यात्त्रिकण्टः स्वादुकण्टकः

गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ४४
पलङ्कषा श्वदंष्ट्रा च तथा स्यादिक्षुगन्धिका
गोक्षुरः शीतलःस्वादुर्बलकृद्बस्तिशोधनः ४५
मधुरो दीपनो वृष्यः पुष्टिदश्चाश्मरीहरः
प्रमेहश्वासकासार्शः कृच्छ्रहृद्रोगवातनुत् ४६
शालपर्णी पृश्निपर्णी वार्त्ताकी कण्टकारिका
गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम् ४७
पञ्चमूलं लघु स्वादु बल्यं पित्तानिलापहम्
नात्युष्णं बृंहणं ग्राहि ज्वरश्वासाश्मरीप्रणुत् ४८
उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम्
दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः
तन्द्राशोथज्वरानाहपार्श्वपीडाऽरुचीर्हरेत् ४९
जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा
माङ्गल्यनामधेया च शाकश्रेष्ठा पयस्विनी ५०
जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा
रसायनी बलकरी चक्षुष्या ग्राहिणी लघुः ५१
मुद्गपर्णी काकपर्णी सूर्यपर्ण्यल्पिका सहा ५२
काकमुद्गा च सा प्रोक्ता तथा मार्जारगन्धिका
मुद्गपर्णी हिमा रूक्षा तिक्ता स्वादुश्च शुक्रला ५३
चक्षुष्या क्षतशोथघ्नी ग्राहिणी ज्वरदाहनुत्
दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारजित् ५४
माषपर्णी सूर्यपर्णी काम्बोजी हयपुच्छिका
पाण्डुलोमशपर्णी च कृष्णवृन्ता महासहा ५५
माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलासकृत्
मधुरा ग्राहिणी शोथवातपित्तज्वरास्रजित् ५६
अष्टवर्गः सयष्टीको जीवन्ती मुद्गपर्णिका
माषपर्णी गणोऽय तु जीवनीय इति स्मृतः ५७
जीवनो मधुरश्चापि नाम्ना स परिकीर्त्तितः
जीवनीयगणः प्रोक्तः शुक्रकृद् बृंहणो हिमः ५८
गुरुर्गर्भप्रदः स्तन्यकफकृत्पित्तरक्तहृत्

तृष्णां शोषं ज्वरं दाहं रक्तपित्तं व्यपोहति ५९
शुक्ल एरण्ड आमण्डश्चित्रो गन्धर्वहस्तकः
पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डो व्यडम्बकः ६०
वातारिस्तरुणश्चापि रुबूकश्च निगद्यते
रक्तोऽपरो रुबूकः स्यादुरुबूको रुबुस्तथा ६१
व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपत्रकः
एरण्डयुग्मं मधुरमुष्णं गुरु विनाशयेत् ६२
शूलशौथकटीबस्तिशिरःपीडोदरज्वरान्
व्रघ्नश्वासकफानाहकासकुष्ठाप्तमारुतान् ६३
एरण्डपत्रं वातघ्नं कफक्रिमिविनाशनम्
मूत्रकृच्छ्रहरं चापि पित्तरक्तप्रकोपणम्
वातार्यग्रदलं गुल्मबस्तिशूलहरं परम् ६४
कफवातकृमीन्हन्ति वृद्धिं सप्तविधामपि
एरण्डफलमत्युष्णं गुल्मशूलानिलापहम् ६५
यकृत्प्लीहोदरार्शोघ्नं कटुकं दीपनं परम्
तद्वन्मज्ञा च विडभेदी वातश्लेष्मोदरापहः ६६
श्वेतार्को गणरूपः स्यान्मन्दारो वसुकोऽपि च
श्वेतपुष्पः सदापुष्पः स चालर्कः प्रतापसः ६७
रक्तोऽपरोऽकनामा स्यादर्कपर्णो विकीरणः
रक्तपुष्पः शुक्लफलस्तथाऽस्फोटः प्रकीर्त्तितः ६८
अर्कद्वयं सरं वातकुष्ठकण्डूविषव्रणान्
निहन्ति प्लीहगुल्मार्शःश्लेष्मोदरशकृत्कृमीन् ६९
अलर्ककुसुमं वृष्यं लघु दीपनपाचनम्
अरोचकप्रसेकार्शः कासश्वासनिवारणम् ७०
रक्तार्कपुष्पं मधुरं सतिक्तं कुष्ठकृमिघ्नं कफनाशनञ्च
अर्शो विषं हन्ति च रक्तपित्तं संग्राहि गुल्मे श्वयथौ हितं तत् ७१
क्षीरमर्कस्य तिक्तोष्णं स्निग्धं सलवणं लघु
कुष्ठगुल्मोदरहरं श्रेष्ठमेतद्विरेचनम् ७२
सेहुण्डः सिंहतुण्डः स्याद्वज्री वज्रद्रुमोऽपि च
सुधासमन्तदुग्धा च स्नुक्स्त्रियां स्यात्स्नुही गुडा ७३

सेहुण्डो रेचनस्तीक्ष्णो दीपनः कटुको गुरुः
शूलामाष्ठीलिकाऽध्मानकफगुल्मोदरानिलान् ७४
उन्मादमोहकुष्ठार्शः शोथमेदोऽश्मपाण्डुताः
व्रणशोथज्वरप्लीहविषदूषीविषं हरेत् ७५
उष्णवीर्यं स्नुहीक्षीरं स्निग्धञ्च कटुकं लघु
गुल्मिनां कुष्ठिनाञ्चापि तथैवोदररोगिणाम् ७६
हितमेतद्विरेकार्थं ये चान्ये दीर्घरोगिणः ७७
शातला सप्तला सारा विमला विदुला च सा
तथा निगदिता भूरिफेना चर्मकषेत्यपि ७८
शातला कटुका पाके वातला शीतला लघुः
तिक्ता शोथकफानाहपित्तोदावर्त्तरक्तजित् ७९
कलिहारी तु हलिनी लाङ्गली शक्रपुष्प्यपि
विशल्याऽग्निशिखाऽनन्तावह्निवक्त्रा च गर्भनुत्
कलिहारी सरा कुष्ठशोफार्शोव्रणशूलजित् ८०
सक्षारा श्लेष्मजित्तिक्ताकटुका तुवराऽपि च
तीक्ष्णोष्णा कृमिहृल्लघ्वी पित्तलागर्भपातिनी ८१
करवीरः श्वेतपुष्पः शतकुम्भोऽश्वमारकः
द्वितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ८२
करवीरद्वयं तिक्तं कषायं कटुकञ्च तत्
व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ८३
वीर्योष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ८४
धत्तूरधूर्त्तधुत्तूरा उन्मत्तः कनकाह्वयः
देवता कितवस्तूरी महामोही शिवप्रियः ८५
मातुलो मदनश्चास्य फले मातुलपुत्रकः
धत्तूरो मदवर्णाग्निवातकृज्ज्वरकुष्ठनुत् ८६
कषायो मधुरस्तिक्तो यूकालिक्षाविनाशकः
उष्णो गुरुर्व्रणश्लेष्मकण्डूकृमिविषापहः ८७
वासको वासिका वासा भिषङ्माता च सिंहिका
सिंहास्यो वाजिदन्ता स्यादाटरूषोऽटरूषकः ८८
अटरूषो वृषस्ताम्रः सिंहपर्णश्च स स्मृतः

वासको वातकृत्स्वर्यः कफपित्तास्रनाशनः ८९
तिक्तस्तुवरको हृद्यो लघुशीतस्तृडर्त्तिहृत्
श्वासकासज्वरच्छर्दिमेहकुष्ठक्षयापहः ९०
पर्पटो वरतिक्तश्च स्मृतः पर्पटकश्च सः
कथितः पांशुपर्यायस्तथा कवचनामकः ९१
पर्पटो हन्ति पित्तास्रभ्रमतृष्णाकफज्वरान्
संग्राही शीतलस्तिक्तो दाहनुद्वातलो लघुः ९२
निम्बः स्यात्पिचुमर्दश्च पिचुमन्दश्च तिक्तकः
अरिष्टः पारिभद्रश्च हिङ्गुनिर्यास इत्यपि ९३
निम्बः शीतो लघुर्ग्राही कटुपाकोऽग्निवातनुत्
अहृद्यः श्रमतृट्कासज्वरारुचिकृमिप्रणुत्
व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत् ९४
निम्बपत्रं स्मृतं नेत्र्यं कृमिपित्तविषप्रणुत्
वातलं कटुपाकञ्च सर्वारोचककुष्ठनुत् ९५
निम्बफलं रसे तिक्तं पाके तु कटुभेदनम्
स्निग्धं लघूष्णं कुष्ठघ्नं गुल्मार्शःकृमिमेहनुत् ९६
महानिम्बः स्मृतो द्रेका रम्यको विषमुष्टिकः
केशमुष्टिर्निम्बकश्च कार्मुको जीव इत्यपि ९७
महानिम्बो हिमो रूक्षस्तिक्तो ग्राही कषायकः ९८
कफपित्तभ्रमच्छर्दिकुष्ठहृल्लासरक्तजित्
प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशनः ९९
पारिभद्रो निम्बतरुर्मन्दारः पारिजातकः
पारिभद्रोऽनिलश्लेष्मशोथमेदः कृमिप्रणुत्
तत्पत्रं पित्तरोगघ्नं कर्णव्याधिविनाशनम् १००
काञ्चनारः काञ्चनको गण्डारिः शोणपुष्पकः १०१
कोविदारश्च मरिकः कुद्दालो युगपत्रकः
कुण्डली ताम्रपुष्पश्चाश्मन्तकः स्वल्पकेशरी १०२
काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत्
कृमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः १०३
कोविदारोऽपि तद्वत्स्यात्तयोः पुष्पं लघु स्मृतम्

रूक्षं संग्राहि पित्तास्रप्रदरक्षयकासनुत् १०४
शोभाञ्जनः शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः
तद्बीजं श्वेतमरिचंमधुशिग्रुः सलोहितः
शिग्रुः कटुः कटुः पाके तीक्ष्णोष्णो मधुरो लघुः १०५
दीपनो रोचनो रूक्षः क्षारस्तिक्तो विदाहकृत्
संग्राही शुक्रलो हृद्यः पित्तरक्तप्रकोपणः १०६
चक्षुष्यः कफवातघ्नो विद्रधिश्वयथुक्रिमीन्
मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान्हरेत् १०७
श्वेतः प्रोक्तगुणो ज्ञेयो विशेषाद्दाहकृद्भवेत्
प्लीहानं विद्रधिं हन्ति व्रणघ्नः पित्तरक्तहृत्
मधुशिग्रुः प्रोक्तगुणो विशेषाद्दीपनः सरः १०८
शिग्रुवल्कलपत्राणां स्वरसः परमार्त्तिहृत् १०९
चक्षुष्यं शिग्रुजं बीजं तीक्ष्णोष्णं विषनाशनम्
अवृष्यं कफवातघ्नं तन्नस्येन शिरोऽत्तिनुत् ११०
आस्फोता गिरिकर्णीस्याद्विष्णुक्रान्ताऽपराजिता
अपराजिते कटू मेध्ये शीते कण्ठ्येसुदृष्टिदे १११
कुष्ठमूत्रत्रिदोषामशोथव्रणविषापहे
कषाये कटुके पाके तिक्ते च स्मृतिबुद्धिदे ११२
सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः
नीलपुष्पी तु निर्गुण्डी शेफाली सुवहा च सा ११३
सिन्दुकः स्मृतिदस्तिक्तः कषायः कटुको लघुः
केश्यो नेत्रहितो हन्ति शूलशोथाममारुतान्
कृमिकुष्ठारुचिश्लेष्मज्वरान्नीलापि तद्विधा ११४
सिन्दुवारदलं जन्तुवातश्लेष्महरं लघु ११५
कुटजः कूटजः कौटो वत्सको गिरिमल्लिका ११६
कालिङ्गः शक्रशाखी च मल्लिकापुष्प इत्यपि
इन्द्रो यवफलः प्रोक्तो वृक्षकः पाण्डुरद्रुमः ११७
कुटजः कटुको रूक्षो दीपनस्तुवरो हिमः
अर्शोऽतिसारपित्तास्रकफतृष्णाऽमकुष्ठनुत् ११८
करञ्जो नक्तमालश्च करजश्चिरबिल्वकः

घृतपूर्णकरञ्जोऽन्य प्रकीर्यः पूतिकोऽपि च ११९
स चोक्तः पूतिकरञ्जः सोमवल्कश्च स स्मृतः
करञ्जः कटुकस्तीक्ष्णो वीर्योष्णो योनिदोषहृत्
कुष्ठोदावर्त्तगुल्मार्शोव्रणक्रिमिकफापहः १२०
तत्पत्रं कफवातार्शः कृमिशोथहरं परम्
भेदनं कटुकं पाके वीर्योष्णं पित्तलं लघुः १२१
तत्फलं कफवातघ्नं मेहार्शःकृमिकुष्ठजित्
घृतपूर्णकरञ्जोऽपि करञ्जसदृशो गुणैः १२२
उदकीर्यस्तृतीयोऽन्य षड्ग्रन्था हस्तिवारुणी
मर्कटी वायसी चापि करञ्जी करभञ्जिका १२३
करञ्जी स्तम्भनी तिक्ता तुवरा कटुपाकिनी
वीर्योष्णा वमिपित्तार्शः कृमिकुष्ठप्रमेहजित् १२४
श्वेता गुञ्जोच्चटा प्रोक्ता कृष्णला चापि सा स्मृता
रक्ता सा काकचिञ्ची स्यात्काकणन्ती च रक्तिका १२५
काकादनी काकपीलुः सा स्मृता काकवल्लरी
गुञ्जाद्वयन्तु केश्यं स्याद्वातपित्तज्वरापहम् १२६
मुखशोषभ्रमश्वासतृष्णामदविनाशनम्
नेत्रामयहरं वृष्यं बल्यं कण्डूं व्रणं हरेत् १२७
कृमीन्द्रलुप्तकुष्ठानि रक्ता च धवलाऽपि च १२८
कपिच्छूरात्मगुप्ता वृष्या प्रोक्ता च मर्कटी
अजडा कण्डुरा व्यङ्गा दुःस्पर्शा प्रावृषायणी १२९
लाङ्गली शूकशिम्बी च सैव प्रोक्ता महर्षिभिः
कपिकच्छूर्भृशं वृष्या मधुरा बृंहणी गुरुः
तिक्ता वातहरी बल्या कफपित्तास्रनाशिनी १३०
तद्बीजं वातशमनं स्मृतं वाजीकरं परम् १३१
मांसरोहिण्यतिरुहा वृत्ता चर्मकषा वसा
प्रहारवल्ली विकशा वीरवत्यपि कथ्यते
स्यान्मांसरोहिणी वृष्या सरा दोषत्रयापहा १३२
चिह्लकोवातनिर्हारः श्लेष्मघ्नो धातुपुष्टिकृत्
आग्नेयो विषवद्यस्य फलं मत्स्यनिषूदनम् १३३

टङ्कारी वातजित्तिक्ता श्लेष्मघ्नी दीपनी लघुः
शोथोदरव्यथाहन्त्री हिता पीठविसर्पिणाम् १३४
वेतसो नम्रकः प्रोक्तो वानीरो वञ्जुलस्तथा
अभ्रपुष्पश्च विदुलो रथः शीतश्च कीर्त्तितः १३५
वेतसः शीतलो दाहशोथार्शोयोनिरुक्प्रणुत्
हन्ति वीसर्पकृच्छ्रास्रपित्ताश्मरिकफानिलान् १३६
निकुञ्जकः परिव्याधो नादेयो जलवेतसः
जलजो वेतसः शीतः कुष्ठहृद्वातकोपनः १३७
इज्जलो हिज्जलश्चापि निचुलश्चाम्बुजस्तथा
जलवेतसवद्वेद्यो हिज्जलोऽय विषापहः १३८
अङ्कोटो दीर्घकीलः स्यादङ्कोलश्च निकोचकः
अङ्कोटकः कटुस्तीक्ष्णः स्निग्धोष्णस्तुवरो लघुः १३९
रेचनः कृमिशूलामशोफग्रहविषापहः
विसर्पकफपित्तास्रमूषकाहिविषापहः १४०
तत्फलं शीतलं स्वादु श्लेष्मघ्नं बृंहणं गुरु
बल्यं विरेचनं वातपित्तदाहक्षयास्रजित् १४१
बलावाट्यालिका वाट्या सैव वाट्यालकाऽपि च
महाबला पीतपुष्पा सहदेवी च सा स्मृता १४२
ततोऽन्याऽतिबला ऋष्यप्रोक्ता कङ्कतिका च सा
गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका १४३
बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत्
स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम् १४४
बलामूलत्वचश्चूर्णं पीतं सक्षीरशर्करम्
मूत्रातिसारं हरति दृष्टमेतन्न संशयः १४५
हरेन्महाबला कृच्छ्रम् भवेद्वातानुलोमिनी
हन्यादतिवला मेहं पयसा सितया समम् १४६
पुत्रकाकाररक्ताल्पबिन्दुभिर्लाञ्छितच्छदा १४७
लक्ष्मणा पुत्रजननी वस्तगन्धाकृतिर्भवेत्
कथिता पुत्रदाऽवश्या लक्ष्मणा मुनिपुङ्गवैः १४८
स्वर्णवल्लीरक्तफला काकायुः काकवल्लरी

स्वर्णवल्ली शिरः पीडां त्रिदोषान्हन्ति दुग्धदा १४९
कार्पासी तुण्डकेशी च समुद्रान्ता चकथ्यते
कर्पासकी लघु कोष्णा मधुरा वातनाशिनी १५०
तत्पलाशं समीरघ्नं रक्तकृन्मूत्रवर्द्धनम्
तत्कर्णपिडकानादपूयास्रावविनाशनम् १५१
तद्बीजं स्तन्यदं वृष्यं स्निग्धं कफकरं गुरु १५२
वंशस्त्वक्सारकर्मारत्वचिसारतृणध्वजाः
शतपर्वा यवफलो वेणुमस्करतेजनाः १५३
वंशः सरो हिमः स्वादुः कषायो वस्तिशोधनः
छेदनः कफपित्तघ्नः कुष्ठास्रव्रणशोथजित् १५४
तत्करीरः कटुः पाके रसे रूक्षो गुरुः सरः
कषायः कफकृत्स्वादुर्विदाही वातपित्तलः १५५
तद्यवास्तु सरा रूक्षाः कषायाः कटुपाकिनः
वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः १५६
नलः पोटगलः शून्यमध्यश्च धमनस्तथा
नलस्तुमधुरस्तिक्तः कषायः कफरक्तजित्
उष्णो हृद्वस्तियोन्यर्त्तिदाहपित्तविसर्पहृत् १५७
भद्रमुञ्जः शरो बाणस्तेजनश्चेक्षुवेष्टनः १५८
मुञ्जो मुञ्जातको बाणः स्थूलदर्भः सुमेखलः
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा १५९
दाहतृष्णाविसर्पास्रमूत्रकृच्छ्राक्षिरोगजित्
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते १६०
कासः कासेक्षुरुद्दिष्टः स स्यादिक्षुरसस्तथा
इक्षवालिकेक्षुगन्धा च तथा पोटगलः स्मृतः १६१
कासः स्यान्मधुरस्तिक्तः स्वादुपाको हिमः खरः
मूत्रकृच्छ्राश्मदाहास्रक्षयपित्तजरोगजित् १६२
गुन्द्रः पटेरको गुल्मः शृङ्गवेराभमूलकः
गुन्द्रः कषायो मधुरः शिशिरः पित्तरक्तजित्
स्तन्यशुक्ररजोमूत्रशोधनो मूत्रकृच्छ्रहृत् १६३
एरका गुन्द्रमूला च शिविर्गुन्द्रा शरीति च

एरका शिशिरा वृष्या चक्षुष्या वातकोपिनी
मूत्रकृच्छ्राश्मरीदाहपित्तशोणितनाशिनी १६४
कुशो दर्भस्तथा बर्हिः सूच्यग्रो यज्ञभूषणः
ततोऽन्यो दीर्घपत्रः स्यात्क्षुरपत्रस्तथैव च १६५
दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम्
मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक्प्रदरास्रजित् १६६
कत्तृणं रौहिषं देवजग्धं सौगन्धिकं तथा
भूतिकं ध्यामपौरञ्च श्यामकं धूपगन्धिकम् १६७
रौहिषं तुवरं तिक्तं कटुपाकं व्यपोहति
हृत्कराठव्याधिपित्तास्रशूलकासकफज्वरान् १६८
गुह्यबीजं तु भूतीकं सुगन्धं जम्बुकप्रियम्
भूतृणं तु भवेच्छत्रा मालातृणकमित्यपि १६९
भूतृणं कटुकं तिक्तं तीक्ष्णोष्णं रेचनं लघु
विदाहि दीपनं रूक्षमनेत्र्यं मुखशोधनम् १७०
अवृष्यं बहुविट्कञ्च पित्तरक्तप्रदूषणम् १७१
नीलदूर्बा रुहाऽनन्ता भार्गवी शतपर्विका
शष्पं सहस्रवीर्या च शतवल्ली च कीर्त्तिता १७२
नीलदूर्वा हिमा तिक्ता मधुरा तुवरा हरेत्
कफपित्तास्रवीसर्पतृष्णादाहत्वगामयान् १७३
दूर्वा शुक्ला तु गोलोमी शतवीर्या च कथ्यते
श्वेता दूर्वा कषाया स्यात्स्वाद्वी व्रराया च जीवनी
तिक्ता हिमा विसर्पास्रतृट्पित्तकफदाहहृत् १७४
गराडदूर्वा तु गराडाली मत्स्याक्षी शकुलादनी
गराडदूर्वा हिमा लोहद्राविणी ग्राहिणी लघुः १७५
तिक्ता कषाया मधुरा वातकृत्कटुपाकिनी
दाहतृष्णाबलासास्रकुष्ठपित्तज्वरापहा १७६
वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसंज्ञकः
वाराहीकन्द एवान्यैश्चर्मकारालुको मतः १७७
अनूपसम्भवे देशे वराह इव लोमवान्
वाराहवदना गृष्टिर्वरदेत्यपि कथ्यते १७८

वाराही तु रसे स्वाद्वी तिक्ता पाके पुनः कटुः
शुक्रायुःस्वरवर्णाग्निबलपित्तविवर्द्धिनी
कफकुष्ठमरुन्मेहकृमिहृच्च रसायनी १७९
विदारी स्वादुकन्दा च सा तु क्रोष्ट्रीसिता स्मृता
इक्षुगन्धा क्षीरवल्ली क्षीरशुक्ला पयस्विनी १८०
विदारी मधुरा स्निग्धा बृंहणी स्तन्यशुक्रदा १८१
शीता स्वर्या मूत्रला च जीवनी बलवर्णदा
गुरुः पित्तास्रपवनदाहान् हन्ति रसायनी १८२
तालमूली तु विद्वद्भिर्मुशली परिकीर्त्तिता
मुशली मधुरा वृष्या वीर्योष्णा बृंहणी गुरुः
तिक्ता रसायनी हन्ति गुदजान्यनिलं तथा १८३
शतावरी बुहसुता भीरुरिन्दीवरी वरी
नारायणी शतपदी शतवीर्या च पीवरी १८४
महाशतावरी चान्या शतमूल्यूर्ध्वकण्टिका
सहस्रवीर्या हेतुश्च ऋष्यप्रोक्ता महोदरी १८५
शतावरी गुरुः शीता तिक्ता स्वाद्वी रसायनी
मेधाऽग्निपुष्टिदा स्निग्धा नेत्र्या गुल्मातिसारजित् १८६
शुक्रस्तन्यकरी बल्या वातपित्तास्रशोथजित्
महाशतावरी मेध्या हृद्या वृष्या रसायनी १८७
शीतवीर्या निहन्त्यर्शोग्रहणीनयनामयान्
तदङ्कुरस्त्रिदोषघ्नो लघुरर्शःक्षयापहा १८८
गन्धान्ता वाजिनामादिरश्वगन्धा हयाह्वया
वराहकर्णी वरदा बलदा कुष्ठगन्धिनी १८९
अश्वगन्धाऽनिलश्लेष्मश्वित्रशोथक्षयापहा
बल्या रसायनी तिक्ता कषायोष्णाऽतिशुक्रला १९०
पाठाऽम्बष्ठाऽम्बष्ठकी च प्राचीना पापचेलिका
एकाष्ठीला रसा प्रोक्ता पाठिका वरतिक्तिका १९१
पाठोष्णा कटुका तीक्ष्णा वातश्लेष्महरी लघुः
हन्ति शूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः
दाहकण्डूविषश्वासकृमिगुल्मगरव्रणान् १९३

श्वेता त्रिर्वृत् त्रिभराडी स्यात् त्रिवृतात्रिपुटाऽपि च
सर्वानुभूतिः सरला निशोत्रा रेचनीति च १९३
श्वेता त्रिवृद्रेचनी स्यात्स्वादुरुष्णा समीरहृत्
रूक्षा पित्तज्वरश्लेष्मपित्तशोथोदरापहा १९४
त्रिवृच्छ्यामाऽर्द्धचन्द्रा च पालिन्दी च सुषेणिका
मसूरविदला काली कैषिका कालमेषिका १९५
श्यामा त्रिवृत्ततो हीनगुणा तीव्रविरेचिनी
मूर्च्छादाहमदभ्रान्तिकराठोत्कर्षणकारिणी १९६
लघुदन्ती विशल्या च स्यादुदुम्बरपरार्यपि
तथैरराडफला शीघ्रा श्वेतघराटा घुणप्रिया १९७
वाराहाङ्गी च कथिता निकुम्भश्च मकूलकः
द्रवन्ती शम्बरी चित्रा प्रत्यक्परार्याखुपरार्यपि १९८
उपचित्रा श्रुतश्रोणी न्यग्रोधी च तथा वृषा
दन्तीद्वयं सरं पाकं रसे च कटु दीपनम् १९९
गुदाङ्कुराश्मशूलास्त्रकराडूकुष्ठविदाहनुत्
तीक्ष्णोष्णं हन्ति पित्तास्त्रकफशोथोदरक्रिमीन् २००
क्षुद्रदन्तीफलं तु स्यान्मधुरं रसपाकयोः
शीतलं सृष्टविरामूत्रं गरशोथकफापहम् २०१
जयपालो दन्तिबीजं विख्यातं तिन्तिडीफलम्
जयपालो गुरुः स्निग्धो रेची पित्तकफापहः २०२
अथेन्द्रवारुणी महेन्द्रवारुणी च
एन्द्रीन्द्रवारुणी चित्रा गवाक्षी च गवादनी
वारुणी च पराऽप्युक्ता सा विशाला महाफला २०३
श्वेतपुष्पा मृगाक्षी च मृगैर्वारुर्मृगादनी
गवादनीद्वयं तिक्तं पाके कटु सरं लघु २०४
वीर्योष्णं कामलापित्तकफप्लीहोदरापहम् २०५
श्वासकासापहं कुष्ठगुल्मग्रन्थिव्रणप्रणुत्
प्रमेहमूढगर्भामगराडामयविषापहम् २०६
नीली तु नीलिनी तूणी काला दोला च नीलिका
रञ्जनी श्रीफली तुच्छा ग्रामीणा मधुपर्णिका २०७

क्लीतका कालकेशी च नीलपुष्पा च सा स्मृता
नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा २०८
उष्णा हन्त्युदरप्लीहवातरक्तकफानिलान्
ग्रामवातमुदावर्त्तं मदं च विषमुद्धतम् २०९
शरपुङ्खः प्लीहशत्रुर्नीलीवृक्षाकृतिश्च सः
शरपुङ्खो यकृत्प्लीहगुल्मव्रणविषापहः
तिक्तः कषायः कासास्त्रश्वासज्वरहरो लघुः २१०
विृद्धदारुक ग्रावेगी छागान्त्री वृष्यगन्धिका
वृद्धद्दारुः कषायोष्णः कटुस्तिक्तो रसायनः १
वृष्यो वातामवातार्शः शोथमेहकफप्रणुत्
शुक्रायुर्बलमेधाऽग्निस्वरकान्तिकरःसरः २
थासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः
दुरालभा दुरालम्भा समुद्रान्ता च रोदिनी २११
गान्धारी कच्छुराऽनन्ता काषाया हरिविग्रहा
यासः स्वादुः सरस्तिक्तस्तुवरः शीतलो लघुः २१२
कफमेदोमदभ्रान्तिपित्तासृक्कुष्ठकासजित्
तृष्णाविसर्पवातास्त्रवमिज्वरहरः स्मृतः २१३
यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा २१४
मुण्डी भिक्षुरपि प्रोक्ता श्रावणी च तपोधना
श्रवणाह्वा मुण्डतिका तथा श्रवणशीर्षका २१५
महाश्रावणिकाऽन्या तु सा स्मृता भूकदम्बिका
कदम्बपुष्पिका च स्यादव्यथाऽतितपस्विनी २१६
मुण्डतिका कटुः पाके वीर्योष्णा मधुरा लघुः
मेध्या गण्डापचीकृच्छ्रकृमियोन्यर्त्तिपाण्डुनुत् २१७
श्लीपदारुच्यपस्मारप्लीहमेदोगुदार्तिहृत्
महामुण्डी च तत्तुल्या गुणैरुक्ता महर्षिभिः २१८
ग्रपामार्गस्तु शिखरी ह्यधः शल्यो मयूरकः
मर्कटी दुर्ग्रहा चापि किणिही खरमञ्जरी २१९
ग्रपामार्गः सरस्तीक्ष्णो दीपनस्तिक्तकः कटुः
पाचनो रोचनश्छर्दिकफमेदोऽनिलापहः

निहन्ति हृद्रुजाध्मार्शः कण्डूशूलोदरापचीः २२०
रक्तोऽन्यो वशिरो वृत्तफलो धामार्गवोऽपि च
प्रत्यक्पर्णी केशपर्णी कथिता कपिपिप्पली २२१
अपामार्गोऽरुणो वातविष्टम्भी कफहृद्धिमः
रूक्षः पूर्वगुणैर्न्यूनः कथितो गुणवेदिभिः २२२
अपामार्गफलं स्वादु रसे पाके च दुर्जरम्
विष्टम्भि वातलं रूक्षं रक्तपित्तप्रसादनम् २२३
कोकिलाक्षस्तु काकेक्षुरिक्षुरः क्षुरकः क्षुरः
भिक्षुः काण्डेक्षुरप्युक्त इक्षुगन्धेक्षुबालिका २२४
क्षुरकः शीतलो वृष्यः स्वाद्वम्लः पिच्छिलस्तथा
तिक्तो वातामशोथाश्मतृष्णादृष्ट्यनिलास्रजित् २२५
ग्रन्थिमानस्थिसंहारीवज्राङ्गीवाऽस्थिशृङ्खला
अस्थिसंहारकः प्रोक्तो वातश्लेष्महरोऽस्थियुक् २२६
उष्णः सरः कृमिघ्नश्चदुर्नामघ्नोऽक्षिरोगजित्
रूक्षः स्वादुर्लघुर्वृष्यः पाचनः पित्तलः स्मृतः २२७
काण्डं त्वग्विरहितमस्थिशृङ्खलायामाषार्द्रद्विदलमकञ्चुकं तदर्द्धम्
संपिष्टं सुतनु ततस्तिलस्य तैलेसंपक्वं वटकमतीव वातहारि २२८
कुमारी गृहकन्या च कन्या घृतकुमारिका
कुमारी भेदनी शीता तिक्ता नेत्र्या रसायनी २२९
मधुरा बृंहणी बल्या वृष्या वातविषप्रणुत्
गुल्मप्लीहयकृद्वृद्धिकफज्वरहरी हरेत्
ग्रन्थ्यग्निदग्धविस्फोटपित्तरक्तत्वगामयान् २३०
पुनर्नवा श्वेतमूला शोथघ्नी दीर्घपत्रिका
कटु कषायानुरसा पाण्डुघ्नी दीपनी परा
शोफानिलगरश्लेष्महरी ब्रघ्नोदरप्रणुत् २३१
पुनर्नवाऽपरा रक्ता रक्तपुष्पा शिलाटिका
शोथघ्नी क्षुद्रवर्षाभूर्वर्षकेतुः कठिल्लकः २३२
पुनर्नवाऽरुणा तिक्ता कटुपाका हिमा लघुः
वातला ग्राहिणी श्लेष्मपित्तरक्तविनाशिनी २३३
प्रसारणी राजबला भद्रपर्णी प्रतानिनी

सरणी सारणी भद्रा बला चापि कटम्भरा २३४
प्रसारणी गुरुर्वृष्या वलसन्धानकृत्सरा
वीर्योष्णा वातहृत्तिक्ता वातरक्तकफापहा २३५
कृष्णा तु शारिवा श्यामा गोपी गोपवधूश्च सा २३६
धवला शारिवा गोपा गोपकन्या कृशोदरी
स्फोटा श्यामा गोपवल्ली लताऽस्फोता च चन्दना २३७
सारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु
अग्निमान्द्यारुचिश्वासकासामविषनाशनम्
दोषत्रयास्त्रप्रदरज्वरातीसारनाशनम् २३८
भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च
अङ्गारकः केशराजो भृङ्गारः केशरञ्जनः २३९
भृङ्गारः कटुकस्तीक्ष्णो रूक्षोष्णः कफवातनुत् २४०
केश्यस्त्वच्यः कृमिश्वासकासशोथामपाण्डुनुत्
दन्त्यो रसायनो बल्यः कुष्ठनेत्रशिरोऽर्त्तिनुत् २४१
शणपुष्पी स्मृता घण्टा शणपुष्पसमाकृतिः
शणपुष्पी कटुस्तिक्ता वामिनी कफपित्तजित् २४२
बलभद्रा त्रायमाणा त्रायन्ती गिरिजाऽनुजा
त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा
ज्वरहृद्रोगगुल्मार्शोभ्रमशूलविषप्रणुत् २४३
मूर्वा मधुरसा देवी मोरटा तेजनी स्रुवा
मधुलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि २४४
मूर्वा सरा गुरुः स्वादुस्तिक्ता पित्तास्त्रमेहनुत्
त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहाः २४५
काकमाची ध्वाङ्क्षमाची काकाह्वा चैव वायसी
काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा २४६
तिक्ता रसायनी शोथकुष्टार्शोज्वरमेहजित्
कटुर्नेत्रहिता हिक्काच्छर्दिहृद्रोगनाशिनी २४७
काकनासा तु काकाङ्गी काकतुण्डफला च सा २४८
काकनासा कषायोष्णा कटुका रसपाकयोः
कफघ्नी वामनी तिक्ता शोथार्शश्वित्रकुष्ठहृत् २४९

काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा
पारावतपदी दासी काका चापि प्रकीर्त्तिता २५०
काकजंघा हिमा तिक्ता कषाया कफपित्तजित्
निहन्ति ज्वरपित्तास्रव्रणकण्डूविषक्रिमीन् २५१
नागपुष्पी श्वेत पुष्पा नागिनी रामदूतिका
नागिनी रोचनी तिक्ता तीक्ष्णोष्णा कफपित्तनुत्
विनिहन्ति विषं शूलं योनिदोषवमिक्रिमीन् २५२
मेषशृङ्गी विषाणी स्यान्मेषवल्ल्यजशृङ्गिका
मेषशृङ्गी रसे तिक्ता वातला श्वासकासहृत् २५३
रूक्षा पाके कटुः पित्तव्रणश्लेष्माक्षिशूलनुत् २५४
मेषशृङ्गीफलं तिक्तं कुष्ठमेहकफप्रणुत्
दीपनं स्रंसनं कासक्रिमिव्रणविषापहम् २५५
हंसपादी हंसपदी कीटमाता त्रिपादिका
हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान्
विसर्पदाहातीसारलूताभूताग्निरोहिणीः २५६
सोमवल्ली सोमलता सोमक्षीरी द्विजप्रिया
सोमवल्ली त्रिदोषघ्नी कटुस्तिक्ता रसायनी २५७
आकाशवल्ली तु बुधैः कथिताऽमरवल्लरी २५८
खवल्ली ग्राहिणी तिक्ता पिच्छिलाऽक्ष्यामयापहा
तुवराऽग्निकरी हृद्या पित्तश्लेष्मामनाशिनी २५९
छिलिहिण्टो महामूलःपातालगरुडाह्वयः
छिलिहिण्टः परं वृष्यः कफघ्नः पवनापहः २६०
वन्दा वृक्षादनी वृक्षभक्ष्या वृक्षरुहाऽपि च
वन्दाकः स्याद्धिमस्तिक्तः कषायो मधुरो रसे
मङ्गल्यः कफवातास्ररक्षोव्रणविषापहः २६१
वटपत्री तु कथिता मोहिन्यैरावती बुधैः
वटपत्री कषायोष्णा योनिमूत्रगदापहा २६२
हिङ्गुपत्री तु कवरी पृथ्वीका पृथुका पृथुः २६३
हिङ्गुपत्री भवेद्रुच्या तीक्ष्णोष्णा पाचनी कटुः
हृद्बस्तिरुग्विबन्धार्शःश्लेष्मगुल्मानिलापहा २६४

वंशपत्री वेणुपत्री पिण्डा हिङ्गुशिवाटिका
हिङ्गुपत्रीगुणा विज्ञैर्वंशपत्री च कीर्त्तिता २६५
मत्स्याक्षी बाह्लिका मत्स्यगन्धा मत्स्यादनीति च
मत्स्याक्षी ग्राहिणी शीतकुष्ठपित्तकफास्रजित्
लघुस्तिक्ता कषाया च स्वाद्वी कटुविपाकिनी २६६
सर्पाक्षी स्यात्तु गण्डाली तथा नाडीकलापकः २६७
सर्पाक्षी कटुका तिक्ता सोष्णा कृमिनिकृन्तनी
वृश्चिकोन्दुरुसर्पाणां विषघ्नी व्रणरोपिणी २६८
शङ्खनपुष्पी तु शङ्खाह्वा मङ्गल्यकुसुमाऽपि च
शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगहृत् २६९
रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा
दोषापस्मारभूताश्रीकुष्ठक्रिमिविषप्रणुत् २७०
अर्कपुष्पी क्रूरकर्मा पयस्या जलकामुका
अर्कपुष्पी कृमिश्लेष्ममेहपित्तविकारजित् २७१
लज्जालुः स्वाच्छमीपत्रा समङ्गा जलकारिका
रक्तपादी नमस्कारी नाम्ना खदिरकेत्यपि २७२
लज्जालुः शीतला तिक्ता कषाया कफपित्तजित्
रक्तपित्तमतीसारं योनिरोगान् विनाशयेत् २७३
अलम्बुषा खरत्वक् च तथा मेदोगला स्मृता
अलम्बुषा लघुः स्वादुः क्रिमिपित्तकफापहा २७४
दुग्धिका स्वादुपर्णी स्यात्क्षीरा विक्षीरिणी तथा
दुग्धिकोष्णा गुरू रूक्षा वातलागर्भकारिणी २७५
स्वादुक्षीरा कटुस्तिक्ता सृष्टमूत्रा मलापहा
स्वादुविष्टम्भिनी वृष्या कफकुष्ठक्रिमिप्रणुत् २७६
भूम्यामलकिका प्रोक्ता शिवा तामलकीति च
बहुपत्रा बहुफला बहुवीर्याऽजटाऽपि च २७७
भूधात्री वातकृत्तिक्ता कषाया मधुरा हिमा
पिपासाकासपितास्रकफकण्डूक्षतापहा २७८
ब्राह्मी कपोतवङ्का च सोमवल्ली सरस्वती
मण्डूकपर्णी माण्डूकी त्वाष्ट्री दिव्या महौषधी २७९

ब्राह्मी हिमा सरा तिक्ता लघुर्मध्या च शीतला
कषाया मधुरा स्वादुपाकाऽयुष्या रसायनी २८०
स्वर्या स्मृतिप्रद्रा कुष्ठपाराडुमेहास्त्रकासजित्
विषशोथज्वरहरी तद्वन्मराडूकपर्णिनी २८१
द्रोणा च द्रोणपुष्पी च फलेपुष्पा च कीर्त्तिता
द्रोणपुष्पी गुरुः स्वादू रूक्षोष्णा वातपित्तकृत् २८२
सतीक्ष्णलवणा स्वादुपाका कट्वी च भेदिनी
कफामकामलाशोथतमकश्वासजन्तुजित् २८३
सुवर्चला सूर्यभक्ता वरदा बदराऽपि च
सूर्यावर्त्ता रविप्रीताऽपरा ब्रह्मसुदुर्लभा २८४
सुवर्चला हिमा रूक्षा स्वादुपाका सरा गुरुः
अपित्तला कटुः क्षारा विष्टम्भकफवातजित् २८५
अन्या तिक्ता कषायोष्णा सरा रुक्षा लघुः कटुः
निहन्ति कफपित्तास्त्रश्वासकासारुचिज्वरान्
विस्फोटकुष्ठमेहास्त्रयोनिरुक्कृमिपाराडुताः २८६
वन्ध्याकर्कोटकी देवी कन्या योगीश्वरीति च
नागरिर्नक्रदमनी विषकराटकिनी तथा २८७
बन्ध्याकर्कोटकी लघ्वी कफनुद् व्रणशोधिनी
सर्पदर्पहरी तीक्ष्णा विसर्पविषहारिणी २८८
मार्कण्डिका भूमिवल्ली मार्कराडी मृदुरेचनी २८९
मार्कण्डिका कुष्ठहरी ऊर्ध्वाधःकायशोधिनी
विषदुर्गन्धिकासघ्नी गुल्मोदरविनाशिनी २९०
देवदाली यु वेणी स्यात्कर्कटी च गरागरी
देवताडो वृत्तकोशस्तथा जीमूत इत्यपि २९१
पीता परा खरस्पर्श विषघ्नी गरनाशिनी
देवदाली रसे तिक्ता कफार्शःशोफपाराडुताः
नाशयेद्वामनी तीक्ष्णा क्षयहिक्काकृमिज्वरान् २९२
देवदालीफलं तिक्तं कृमिश्लेष्मविनाशनम्
स्त्रंसनं गुल्मशूलघ्नमर्शोघ्नं वातजित्परम् २९३
जलपिप्पल्यभिहिता शारदी शकुलादनी

मत्स्यादनी मत्स्यगन्धा लाङ्गलीत्यपि कीर्त्तिता २९४
जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः २९५
संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा
कटुपाकरसा रुच्या कषाया वह्निवर्द्धिनी २९६
गोजिह्वा गोजिका गोभी दार्विका खरपर्णिनी
गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् २९७
हृद्या प्रमेहकासास्रव्रणज्वरहरी लघुः
कोमला तुवरा तिक्ता स्वादुपाकरसा स्मृता २९८
विज्ञेया नागदमनी बलमोदा विषापहा
नागपुष्पी नागपत्रा महायोगेश्वरीति च २९९
बलामोटा कटुस्तिक्ता लघुः पित्तकफापहा
मूत्रकृच्छ्रव्रणान् रक्षो नाशयेज्जालगर्दभम् ३००
सर्वग्रहप्रशमनी निःशेषविषनाशिनी
जयं सर्वत्र कुरुते धनदासुमतिप्रदा ३०१
वेल्लन्तरो जगति वीरतरुः प्रसिद्धः श्वेतासितारुणविलोहितनीलपुष्पः
स्याज्जातितुल्यकुसुमः शमिसूक्ष्मपत्रः स्यात्कराटकी विजलदेशज एव वृक्षः
३०२
वेल्लन्तरो रसे पाके तिक्तस्तृष्णाकफापहः
मूत्राघाताश्मजिद्ग्राही योनिमूत्रानिलार्त्तिजित् ३०३
छिक्क्नी क्षवकृत्तीक्ष्णा छिक्किका घ्राणदुःखदा
छिक्कनी कटुका रुच्या तीक्ष्णोष्णावह्निपित्तकृत्
वातरक्तहरी कुष्ठक्रिमिवातकफापहा ३०४
कुकुन्दर स्ताम्रचूडः सूक्ष्मपत्रो मृदुच्छदः ३०५
कुकुन्दरः कटुस्तिक्तो ज्वररक्तकफापहः
तन्मूलमार्द्रं निक्षिप्तं वदने मुखशोषहृत् ३०६
सुदर्शना सोमवल्ली चक्राह्वा मधुपर्णिका
सुदर्शना स्वादुरुष्णा कफशोथास्रवातजित् ३०७
आखुकर्णी त्वाखुपर्णी पर्णिका भूदरीभवा
आखुकर्णी कटुस्तिक्ता कषाया शीतला लघुः
विपाके कटुका मूत्रकफामयकृमिप्रणुत् ३०८

मयूराह्वशिखा प्रोक्ता सहस्राहिर्मधुच्छदा
नीलकण्ठशिखा लघ्वी पित्तश्लेष्मातिसारजित् ३०६

इति श्रीमिश्रलटकनतनयश्रीमिश्रभावविरचिते भावप्रकाशे पूर्वखण्डे
मिश्रप्रकरणे
चतुर्थो गुडूच्यादिवर्गः समाप्तः४

अथ पुष्पवर्गः

वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् १
पङ्केरुहं तामरसं सारसं सरसीरुहम्
बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च २
कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित्
तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ३
विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम्
रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् ४
धवलं कमलं शीतं मधुरं कफपित्तजित्
तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकम् ५
मूलनालदलोत्फुल्लफलैः समुदिता पुनः
पद्मिनी प्रोच्यते प्राज्ञैर्बिसिन्यादि च सा स्मृता ६
पद्मिनी शीतला गुर्वी मधुरा लवणा च सा
पित्तासृक्कफनुद्रूक्षा वातविष्टम्भकारिणी ७
संवर्त्तिका नवदलं बीजकोशस्तु कर्णिका
किञ्जल्कः केशरः प्रोक्तो मकरन्दो रसः स्मृतः
पद्मनालं मृणालं स्यात्तथा बिसमिति स्मृतम् ८
संवर्त्तिका हिमा तिक्ता कषाया दाहतृट्प्रणुत्
मूत्रकृच्छ्रगुदव्याधिरक्तपित्तविनाशिनी ९
पद्मस्य कर्णिका तिक्ता कषाया मधुरा हिमा
मुखवैशद्यकृल्लघ्वी तृष्णाऽस्रकफपित्तनुत् १०
किञ्जल्कः शीतलो वृष्यः कषायो ग्राहकोऽपिसः
कफपित्ततृषादाहरक्तार्शोविषशोथजित् ११

मृणालं शीतलं वृष्यं पित्तदाहास्रजिद् गुरु १२
दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम्
संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम् १३
पद्मचारिण्यतिचराऽव्यथा पद्मा च शारदा
पद्माऽनुष्णा कटुस्तिक्ता कषाया कफवातजित्
मूत्रकृच्छ्रश्मशूलघ्नो श्वासकासविषापहा १४
श्वेतं कुवलयं प्रोक्तं कुमुदं कैरवं तथा
कुमुदं पिच्छिलं स्निग्धं मधुरं ह्लादि शीतलम् १५
कुमुद्वती कैरविका तथा कुमुदिनीति च १६
सा तु मूलादिसर्वाङ्गैरुक्ता समुदिता बुधैः
पद्मिन्या ये गुणाः प्रोक्ताः कुमुदिन्याश्च ते स्मृताः १७
सौगन्धिकं तु कल्हारं हल्लकं रक्तसन्ध्यकम्
कल्हारं शीतलं ग्राहि विष्टम्भि गुरु रूक्षणम् १८
वारिपर्णी कुम्भिका स्याद्वारिमूली खमूलिका
शैवालं जलनीली स्याच्छैवलं जलजञ्च तत् १९
वारिपर्णी हिमा तिक्ता लघ्वी स्वाद्वी सरा कटुः
दोषत्रयहरी रूक्षा शोणितज्वरशोषकृत् २०
शैवालं तुवरं तिक्तं मधुरं शीतलं लघु
स्निग्धं दाहतृषापित्तरक्तज्वरहरं परम् २१
शतपत्री तरुण्युक्ता कर्णिका चारुकेशरा
महाकुमारी गन्धाढ्या लाक्षापुष्पा ऽतिमञ्जुला २२
शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः
दोषत्रयास्रजिद्वर्ण्या कट्वी तिक्ता च पाचनी २३
नेपाली कथिता तज्ज्ञैः सप्तला नवमालिका
वासन्ती शीतला लघ्वी तिक्ता दोषत्रयास्रजित् २४
श्रीपदी षट्पदानन्दा वार्षिकी मुक्तबन्धना २५
वार्षिकी शीतला लघ्वी तिक्ता दोषत्रयापहा
कर्णाक्षिमुखरोगघ्नी तत्तैलं तद्गुणं स्मृतम् २६
जातिर्जाती च सुमना मालती राजपुत्रिका
चेतिका हृद्यगन्धा च सा पीता स्वर्णजातिका २७

जातीयुगं तिक्तमुष्णं तुवरं लघु दोषजित्
शिरोऽक्षिमुखदन्तार्त्तिविषकुष्ठानिलास्रजित् २८
यूथिका गणिकाऽम्बष्ठा सा पीता हेमपुष्पिका
यूथीयुगं हिमं तिक्तं कटुपाकरसं लघु २९
मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम्
व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम् ३०
चाम्पेयश्चम्पकः प्रोक्तोहेमपुष्पश्च स स्मृतः
एतस्य कलिका गन्धफलेति कथिता बुधैः ३१
चम्पकः कटुकस्तिक्तः कषायो मधुरो हिमः
विषक्रिमिहरः कृच्छ्रकफवातास्रपित्तजित् ३२
बकुलो मधुगन्धश्च सिंहकेसरकस्तथा
बकुलस्तुवरोऽनुष्णः कटुपाकरसो गुरुः
कफपित्तविषश्वित्रकृमिदन्तगदापहः ३३
शिवमल्ली पाशुपत एकाष्ठीलो वको वसुः ३४
वकोऽनुष्णः कटुस्तिक्तः कफपित्तविषापहः
योनिशूलतृषादाहकुष्ठशोथास्रनाशनः ३५
कदम्बः प्रियको नीपो वृत्तपुष्पो हलिप्रियः
कदम्बो मधुरः शीतः कषायो लवणो गुरुः
सरो विष्टम्भकृद्रूक्षः कफस्तन्यानिलप्रदः ३६
कुब्जको भद्रतरुणी वृत्तपुष्पोऽतिकेसरः
महासहा कण्टकाढ्या नीलालिकुलसंकुला ३७
कुब्जकः सुरभिः स्वादुः कषायानुरसः सरः
त्रिदोषशमनो वृष्यः शीतहर्त्ता च स स्मृतः ३८
मल्लिका मदयन्ती च शीतभीरुश्च भूपदी ३९
मल्लिकोष्णा लघुर्वृष्या तिक्ता च कटुका हरेत्
वातपित्तास्यदृग्व्याधिकुष्ठारुचिविषव्रणान् ४०
माधवी स्यात्तु वासन्ती पुण्ड्रको मण्डकोऽपि च
अतिमुक्तो विमुक्तश्च कामुको भ्रमरोत्सवः
माधवी मधुरा शीता लघ्वी दोषत्रयापहा ४१
केतकः सूचिकापुष्पो जम्बुकः क्रकचच्छदः

सुवर्णकेतकी त्वन्या लघुपुष्पा सुगन्धिनी ४२
केतकः कटुकः स्वादुर्लघुस्तिक्तः कफापहः
उष्णा तिक्तरसा ज्ञेया चक्षुष्या हेमकेतकी ४३
किङ्किरातो हेमगौरः पीतकः पीतभद्रकः ४४
किङ्किरातो हिमस्तिक्तः कषायश्च हरेदसौ
कफपित्तपिपासाऽस्रदाहशोषवमिक्रिमीन् ४५
कर्णिकारः परिव्याधः पादपोत्पल इत्यपि
कर्णिकारः कटुस्तिक्तस्तुवरो शोधनो लघुः
रञ्जनः सुखदः शोथश्लेष्मास्रव्रणकुष्ठजित् ४६
अशोको हेमपुष्पश्च वञ्जुलस्ताम्रपल्लवः
कङ्केलि पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा ४७
अशोकः शीतलस्तिक्तो ग्राही वर्ण्यः कषायकः
दोषापचीतृषादाहकृमिशोषविषास्रजित् ४८
अम्लातोऽम्लाटनः प्रोक्तस्तथाऽम्लातक इत्यपि ४९
कुरण्टको वर्णपुष्पः स एवोक्तो महासहः
अम्लाटनः कषायोष्णः स्निग्धः स्वादुश्च तिक्तकः ५०
सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका
सहाचरः सहचरः स च भिन्द्यपि कथ्यते ५१
कुरण्टकोऽत्रपीते स्याद्रक्त कुरबकः स्मृतः
नीले बाणा द्वयोरुक्तो दासी चार्त्तगलश्च सः ५२
सैर्‍यः कुष्ठवातास्रकफकण्डूविषापहः
तिक्तोष्णो मधुरोऽनम्लः सुस्निग्धः केशरञ्जनः ५३
कुन्दं तु कथितं माध्यं सदापुष्पञ्च तत्स्मृतम्
कुन्दं शीतं लघु श्लेष्मशिरोरुग्विषपित्तहृत् ५४
मुचुकुन्दः क्षत्रवृक्षश्चित्रकः प्रतिविष्णुकः
मुचुकुन्दः शिरःपीडापित्तास्रविषनाशनः ५५
तिलकः क्षुरकः श्रीमान्पुरुषश्छिन्नपुष्पकः
तिलकः कटुकः पाके रसे चोष्णो रसायनः
कफकुष्ठक्रिमीन्वस्तिमुखदन्तगदान्हरेत् ५६
बन्धूको बन्धुजीवश्च रक्तो माध्याह्निकोऽपि च

बन्धूकः कफकृद् ग्राही वातपित्तहरो लघुः ५७
ओड्रपुष्पं जपा चाथ त्रिसन्ध्या साऽरुणा सिता
जपा संग्राहिणी केश्या त्रिसन्ध्या कफवातजित् ५८
सिन्दूरी रक्तबीजा च रक्तपुष्पा सुकोमला
सिन्दूरी विषपित्तास्रतृष्णावान्तिहरी हिमा ५९
अथागस्त्यो वङ्गसेनो मुनिपुष्पो मुनिद्रुमः ६०
अगस्तिः पित्तकफजिच्चातुर्थिकहरो हिमः
रूक्षो वातकरस्तिक्तः प्रतिश्यायनिवारणः ६१
तुलसी सुरसा ग्राम्या सुलभा बहुमञ्जरी
अपेतराक्षसी गौरी भूतघ्नी देवदुन्दभिः ६२
तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत्
दीपनी कुष्ठकृच्छ्रास्रपार्श्वरुक्कफवातजित्
शुक्ला कृष्णा च तुलसी गुणैस्तुल्या प्रकीर्त्तिता ६३
मारुतोऽसौ मरुबको मरुन्मरुरपि स्मृतः
फणी फणिज्झकश्चापि प्रस्थपुष्पः समीरणः ६४
मरुदग्निप्रदो हृद्यस्तीक्ष्णोष्णः पित्तलो लघुः६५
वृश्चिकादिविषश्लेष्मवातकुष्ठक्रिमिप्रणुत्
कटुपाकरसो रुच्यस्तिक्तो रूक्षः सुगन्धिकः ६६
उक्तो दमनको दान्तो मुनिपुत्रस्तपोधनः
गन्धोत्कटो ब्रह्मजटो विनीतः कलपत्रकः ६७
दमनस्तुवरस्तिक्तो हृद्यो वृष्यः सुगन्धिकः
ग्रहणाद् विषकुष्ठास्रक्लेदकराडूत्रिदोषजित् ६८
बर्बरी तुवरी तुङ्गी खरपुष्पाऽजगन्धिका
पर्णाशस्तत्र कृष्णे तु कठिल्लककुठेरकौ ६९
तत्र शुक्लेऽजकः प्रोक्तो वटपत्रस्ततोऽपरः
बर्बरीत्रितयं रूक्षं शीतं कटु विदाहि च ७०
तीक्ष्णं रुचिकरं हृद्यं दीपनं लघुपाकि च
पित्तलं कफवातास्रकराडूकृमिविषापहम् ७१

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
पञ्चमः

पुष्पवर्गः समाप्तः५

अथ वटादिवर्गः

वटो रक्तफलः शृङ्गीन्यग्रोधः स्कन्धजो ध्रुवः
क्षीरी वैश्रवणो वासो बहुपादो वनस्पतिः १
वटः शीतो गुरुर्ग्राही कफपित्तव्रणापहः
वर्ण्यो विसर्पदाहघ्नः कषायो योनिदोषहृत् २
बोधिद्रुः पिप्पलोऽश्वत्थश्चलपत्रो गजाशनः
पिप्पलो दुर्जरः शीतःपित्तश्लेष्मव्रणास्त्रजित्
गुरुस्तुवरको रूक्षो वर्ण्यो योनिविशोधनः ३
पारीषोऽन्य पलाशश्च कपिचूतः कमण्डलुः
गर्दभाण्डः कन्दरालः कपीतनसुपार्श्वकौ ४
पारीषो दुर्जरः स्निग्धः कृमिशुक्रकफप्रदः
फलेऽम्लो मधुरो मूले कषायस्वादुमज्जकः ५
नन्दीवृक्षोऽश्वत्थभेदः प्ररोही गजपादपः
स्थालीवृक्षः क्षयतरुः क्षीरी च स्याद्वनस्पतिः ६
नन्दीवृक्षो लघुः स्वादुस्तिक्तस्तुवर उष्णकः
कटुपाकरसो ग्राही विषपित्तकफास्त्रजित् ७
उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ८
उदुम्बरो हिमो रूक्षो गुरुः पित्तकफास्त्रजित्
मधुरस्तुवरो वर्ण्यो व्रणशोधनरोपणः ९
काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला
मलयुः स्तम्भकृत्तिक्ता शीतला तुवरा जयेत्
कफपित्तव्रणश्वित्रकुष्ठपाण्ड्वर्शकामलाः १०
प्लक्षो जटी पर्करी च पर्कटी च स्त्रियामपि ११
प्लक्षः कषायः शिशिरो व्रणयोनिगदापहः
दाहपित्तकफास्त्रघ्नः शोथहा रक्तपित्तहृत् १२
शिरीषो भण्डिलो भण्डी भण्डीरश्च कपीतनः
शुकपुष्पः शुकतरुर्मृदुपुष्पः शुकप्रियः १३
शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः

दोषशोथविसर्पघ्नः कासव्रणविषापहः १४
अथ क्षीरिवृक्षपञ्चकं त्वक्पञ्चकञ्च
न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षपादपाः
पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्पञ्चवल्कलम् १५
क्षीरिवृक्षा हिमा वर्ण्या योनिरोगव्रणापहाः
रूक्षाः कषाया मेदोघ्ना विसर्पामथनाशनाः १६
शोथपित्तकफास्रघ्नाः स्तन्या भग्नास्थियोजकः
त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित् १७
तेषां पत्रं हिमं ग्राहि कफवातास्रनुल्लघु
विष्टम्भाध्मानजित्तिक्तं कषायं लघु लेखनम् १८
शालस्तु सर्जकाश्र्याश्वकर्णकाः शस्यशम्बरः
अश्वकर्णः कषायः स्याद् व्रणस्वेदकफक्रिमीन्
ब्रध्नविद्रधिबाधिर्ययोनिकर्णगदान् हरेत् १९
सर्जकोऽन्योऽजकर्णः स्याच्छालो मरिचपत्रकः २०
अजकर्णः कटुस्तिक्तः कषायोष्णो व्यपोहति
कफपाण्डुश्रुतिगदान् मेहकुष्ठविषव्रणान् २१
शल्लकी गजभक्ष्या च सुवहा सुरभी रसा
महेरुणा कुन्दुरुकी वल्लकी च बहुस्रवा २२
शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित्
रक्तपित्तव्रणहरी पुष्टिकृत्समुदीरिता २३
शिंशपा पिच्छिला श्यामा कृष्णसारा च सा गुरु
कपिला सैव मुनिभिर्भस्मगर्भेतिकीर्त्तिता २४
शिंशपा कटुका तिक्ता कषाया शोषहारिणी
उष्णवीर्या हरेन्मेदः कुष्ठश्वित्रवमिक्रिमीन्
बस्तिरुग्व्रणदाहास्रबलासान् गर्भपातिनी २५
ककुभोऽजुननामाख्यो नदीसर्जश्च कीर्त्तितः
इन्द्रद्रुर्वीरवृक्षश्च वीरश्च धवलः स्मृतः २६
कुकुभः शीतलो हृद्यः क्षतक्षयविषास्रजित्
मेदोमेहव्रणान् हन्ति तुवरः कफपित्तहृत् २७
बीजकः पीतसारश्च पीतशालक इत्यपि

बन्धूकपुष्पः प्रियकः सर्जकश्चासनः स्मृतः २८
बीजकः कुष्ठवीसर्पश्वित्रमेहगुद क्रिमीन्
हन्ति श्लेष्मास्रपित्तञ्च त्वच्यः केश्यो रसायनः २९
खदिरो रक्तसारश्च गायत्री दन्तधावनः
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ३०
खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत् ३१
तिक्तः कषायो मेदोघ्नः कृमिमेहज्वरव्रणान्
श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत् ३२
खदिरः श्वेतसारोऽन्य कदरः सोमवल्कलः
कदरो विशदो वर्ण्यो मुखरोगकफास्रजित् ३३
इरिमेदो विट्खदिरः कालस्कन्धोऽरिमेदकः
इरिमेदः कषायोष्णो मुखदन्तगदास्रजित्
हन्ति कण्डूविषश्लेष्मकृमिकुष्ठविषव्रणान् ३४
रोहीतको रोहितको रोही दाडिमपुष्पकः
रोहीतकः प्लीहघाती रुच्यो रक्तप्रसादनः ३५
बब्बूलः किङ्किरातः स्यात्किङ्किराटः सपीतकः ३६
स एव कथितस्तज्ज्ञैराभाषट्पदमोदिनी
बब्बूलः कफनुद् ग्राही कुष्ठक्रिमिविषापहः ३७
अरिष्टकस्तु मङ्गल्यः कृष्णवर्णोऽथसाधनः
रक्तबीजः पीतफेनः फेनिलो गर्भपातनः
अरिष्टकस्त्रिदोषघ्नो ग्रहजिद् गर्भपातनः ३८
पुत्रजीवो गर्भकरो यष्टीपुष्पोऽथसाधकः ३९
पुत्रजीवी गुरुर्वृष्यो गर्भदः श्लेष्मवातहृत्
सृष्टमूत्रमलो रूक्षो हिमः स्वादुः पटुः कटुः ४०
इङ्गुदोऽङ्गारवृक्षश्च तिक्तकस्तापसद्रुमः
इङ्गुदः कुष्ठभूतादिग्रहव्रणविषक्रिमीन्
हन्त्युष्णः श्वित्रशूलघ्नस्तिक्तकः कटुपाकवान् ४१
जिङ्गिनी झिङ्गिनी झिङ्गी सुनिर्यासा प्रमोदिनी ४२
जिङ्गिनी मधुरा सोष्णा कषाया योनिशोधिनी
कटुका व्रणहृद्रोगवातातीसारहृत् पटुः ४३

तमाल उक्तस्तापिच्छः कालस्कन्धोऽमितद्रुमः
लोकस्कन्धो नीलध्वजो नीलतालश्च स स्मृतः
तमालः शालवद्वेद्यो दाहविस्फोटहृत् पुनः ४४
तूणी तुन्नक आपीनस्तुणिकः कच्छकस्तथा
कुठेरकः कान्तलको नन्दीवृक्षश्च नन्दकः ४५
तूणी रक्तः कटुः पाके कषायो मधुरो लघुः
तिक्तो ग्राही हिमो वृष्यो व्रणकुष्ठास्रपित्तजित् ४६
भूर्जपत्रः स्मृतो भूर्जश्चर्मी बहुलवल्कलः
भूर्जो भूतग्रहश्लेष्मकर्णरुक्पित्तरक्तजित् ४७
कषायो राक्षसघ्नश्च मेदोविषहरः परः ४८
पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः
क्षारश्रेष्ठो वातपोथो ब्रह्मवृक्षः समिद्वरः ४९
पलाशो दीपनो वृष्यः सरोष्णो व्रणगुल्मजित्
भग्नसंधानकृद् दोषग्रहगयर्शः क्रिमीन् हरेत् ५०
तत्पुष्पं स्वादु पाके तु कटु तिक्तं कषायकम् ५१
वातलं कफपित्तास्रकृच्छ्रजिद् ग्राहि शीतलम्
तृड्दाहशमकं वातरक्तकुष्ठहरं परम् ५२
फलं लघूष्णं मेहार्शःकृमिवातकफापहम्
विपाके कटुकं रूक्षं कुष्ठं गुल्मोदरप्रणुत् ५३
शाल्मलिस्तु भवेन्मोचा पिच्छिला पूरणीति च
रक्तपुष्पा स्थिरायुश्च कगटकाढ्या च तूलिनी ५४
शाल्मली शीतला स्वाद्वी रसे पाके रसायनी
श्लेष्मला पित्तवातास्रहारिणी रक्तपित्तजित् ५५
निर्यासः शाल्मलेः पिच्छा शाल्मलीवेष्टकोऽपि च
मोचास्रावोमोचरसो मोचनिर्यास इत्यपि ५६
मोचास्रावो हिमो ग्राही स्निग्धो वृष्यः कषायकः
प्रवाहिकाऽतिसारामकफपित्तास्रदाहनुत् ५७
कुत्सितः शाल्मलि प्रोक्तो रोचनः कूटशाल्मलि
कूटशाल्मलिकस्तिक्तः कटुकः कफवातनुत् ५८
भेद्युष्णः प्लीहजठरयकृद्गुल्मविषापहः

भूतानाहविबन्धास्रमेदः शूलकफापहः ५९
धवो धटो नन्दितरुः स्थिरो गौरो धुरन्धरः
धवः शीतः प्रमेहार्शः पाराडुपित्तकफापहः
मधुरस्तुवरस्तस्य फलञ्च मधुरं मनाक् ६०
धन्वङ्गस्तु धनुर्वृक्षो गोत्रवृक्षः सुतेजनः ६१
धन्वङ्गः कफपित्तास्रकासहृत्तुवरो लघुः
बृंहणो बलकृद्रूक्षः सन्धिकृद् व्रणरोपणः ६२
करीरः क्रकरीपत्रो ग्रन्थिलो मरुभूरुहः
करीरः कटुकस्तिक्त स्वेद्युष्णो भेदनः स्मृतः
दुर्नामकफवातामगरशोथव्रणप्रणुत् ६३
शाखोटः पीतफलको भूतावासः खरच्छदः
शाखोटो रक्तपित्तार्शोवातश्लेष्मातिसारजित् ६४
वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः
वरुणः पित्तलो भेदीश्लेष्मकृच्छ्राश्ममारुतान् ६५
निहन्ति गुल्मवातास्रकृमींश्चोष्णोऽग्निदीपनः
कषायो मधुरस्तिक्तः कटुकोरूक्षको लघुः ६६
कटभी स्वादुपुष्पश्च मधुरेणुः कटम्भरः
कटभी तु प्रमेहार्शोनाडीव्रणविषक्रिमीन् ६७
हन्त्युष्णा कफकुष्ठघ्नी कटू रूक्षा च कीर्तिता
तत्फलं तुवरं ज्ञेयं विशेषात्कफशुक्रहृत् ६८
मोक्षस्तु मोक्षकोऽपि स्याद् गोलीढोगोलिहस्तथा
क्षारश्रेष्ठः क्षारवृक्षो द्विविधः श्वेतकृष्णकः ६९
मोक्षकः कटुकस्तिक्तो ग्राह्युष्णः कफवातहृत्
विषमेदोगुल्मकराडूबस्तिरुक्कृमिशुक्रनुत् ७०
शिरीषिका टिरिटनिका दुर्बलाऽम्बुशिरीषिका
त्रिदोषविषकुष्ठार्शोहरी वारिशिरीषिका ७१
शमी शक्तुफला तुङ्गा केशहन्त्री शिवाफला
मंगल्या च तथा लक्ष्मीः शमीरः साऽल्पिका स्मृता ७२
शमी तिक्ता कटुः शीता कषाया रेचनी लघुः
कफकासभ्रमश्वासकुष्ठार्शः कृमिजित् स्मृता ७३

सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ७४
सप्तपर्णो व्रणश्लेष्मवातकुष्ठास्रजन्तुजित्
दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सरः ७५
तिनिशः स्यन्दनो नेमी रथद्रुर्वञ्जुलस्तथा
तिनिशः श्लेष्मपित्तास्रमेदःकुष्ठप्रमेहजित्
तुवरः श्वित्रदाहघ्नो व्रणपाण्डुकृमिप्रणुत् ७६
भूमीसहो द्वारदारुर्वरदारुः खरच्छदः
भूमीसहस्तु शिशिरो रक्तपित्तप्रसादनः ७७

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
षष्ठो वटादिवर्गः समाप्तः ६

## अथ आम्रादिफलवर्गः

आम्रश्चूतो रसालश्च सहकारोऽतिसौरभः
कामाङ्गो मधुदूतश्च माकन्दः पिकवल्लभः १
आम्रपुष्पमतीसारककफपित्तप्रमेहनुत्
असृग्दुष्टिहरं शीतं रुचिकृद् ग्राहि वातलम् २
आमं बालं कषायाम्लं रुच्यं मारुतपित्तकृत्
तरुणं तु तदत्यम्लं रूक्षं दोषत्रयास्रकृत् ३
आम्रमामं त्वचाहीनमातपेऽतिविशोषितम्
अम्लं स्वादु कषायं स्याद्भेदनं कफवातजित् ४
पक्वं तु मधुरं वृष्यं स्निग्धं बलसुखप्रदम्
गुरु वातहरं हृद्यं वर्ण्यं शीतमपित्तलम्
कषायानुरसं वह्निश्लेश्मशुक्रविवर्द्धनम् ५
तदेव वृक्षसम्पक्वं गुरु वातहरं परम्
मधुराम्लरसं किञ्चिद्भवेत्पित्तप्रकोपणम् ६
आम्रं कृत्रिमपक्वञ्च तद्भवेत्पित्तनाशनम्
रसस्याम्लस्य हीनस्तु माधुर्याच्च विशेषतः ७
चूषितं तत्परं रुच्यं बलवीर्यकरं लघु
शीतलं शीघ्रपाकि स्याद्वातपित्तहरं सरम् ८
तद्रसो गालितो बल्यो गुरुर्वातहरः सरः

अहृद्यस्तर्पणोऽतीव बृंहणः कफवर्द्धनः ९
तस्य खण्डं गुरु परं रोचनं चिरपाकि च
मधुरं बृंहणं बल्यं शीतलं वातनाशनम् १०
वातपित्तहरं रुच्यं बृंहणं बलवर्द्धनम्
वृष्यं वर्णकरं स्वादु दुग्धाम्र गुरु शीतलम् ११
मन्दानलत्वं विषमज्वरं च रक्तामयं बद्धगुदोदरं च
आम्रातियोगो नयनामयं वा करोति तस्मादति तानि नाद्यात् १२
एतदम्लाम्रविषयं मधुराम्लपरं न तु
मधुरस्य परं नेत्रहितत्वाद्या गुणा यतः १३
शुण्ठ्यम्भसोऽनुपानं स्यादाम्राणामतिभक्षणे
जीरकं वा प्रयोक्तव्यं सह सौवर्चलेन च १४
पक्वस्य सहकारस्य पटे विस्तारितो रसः
घर्मशुष्को मुहुर्दत्त आम्रावर्त्त इति स्मृतः १५
आम्रावर्त्तस्तृषाच्छर्दि वातपित्तहरः सरः
रुच्यः सूर्यांशुभिः पाकाल्लघुश्च स हि कीर्त्तितः १६
आम्रबीजं कषायं स्याच्छर्द्यतीसारनाशनम्
ईषदम्लञ्च मधुरं तथा हृदयदाहनुत् १७
आम्रस्य पल्लवो रुच्यः कफपित्तविनाशनः १८
आम्रातकः पीतनश्च मर्कटाम्रः कपीतनः
आम्रातमम्लं वातघ्नं गुरूष्णं रुचिकृत्सरम् १९
पक्वन्तु तुवरं स्वादु रसे पाके हिमं स्मृतम्
तर्पणं श्लेष्मलं स्निग्धं वृष्यं विष्टम्भि बृंहणम्
गुरु बल्यं मरुत्पित्तक्षतदाहक्षयास्रजित् २०
राजाम्रष्टङ्क आम्रातः कामाह्वो राजपुत्रकः २१
राजाम्रं तुवरं स्वादु विशदं शीतलं गुरु
ग्राहि रूक्षं विबन्धाध्मवातकृत्कफपित्तनुत् २२
कोशाम्र उक्तः क्षुद्राम्रः कृमिवृक्षः सुकोशकः
कोशाम्रः कुष्ठशोथास्रपित्तव्रणकफापहः २३
तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम्
पक्वन्तु दीपनं रुच्यं लघूष्णं कफवातनुत् २४

पनशः कराटकिफलः पलसोऽतिबृहत्फलः
पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् २५
तर्पणं बृंहणं स्वादु मांसलं श्लेष्मलंभृशम्
बल्यं शुक्रपदं हन्ति रक्तपित्तक्षतव्रणान् २६
आमं तदेव विष्टम्भि वातलं तुवरं गुरु
दाहकृन्मधुरं बल्यं कफमेदोविवर्द्धनम् २७
पनसोद्भूतबीजानि वृष्याणि मधुराणि च
गुरूणि बद्धविट्कानि सृष्टमूत्राणि संवदेत् २८
मज्ञा पनसजो वृष्यो वातपित्तकफापहः
विशेषात्पनसो वर्ज्यो गुल्मिभिर्मन्दवह्निभिः २९
लकुचः छुद्रपनसो लिकुचो डहुर्रित्यपि
आमं लकुचमुष्णञ्च गुरु विष्टम्भकृत्तथा ३०
मधुरश्च तथाऽम्लञ्च दोषत्रितयरक्तकृत्
शुक्राग्निनाशनं वाऽपि नेत्रयोरहितं स्मृतम् ३१
सुपक्वं तत्तु मधुरमम्लं चानिलपित्तहृत्
कफवह्निकरं रुच्यं वृष्यं विष्टम्भकञ्च तत् ३२
कदली वारणा मोचाऽम्बुसारांऽशुमतीफला
मोचाफलं स्वादु शीतं विष्टम्भि कफकृद् गुरु ३३
स्निग्धं पित्तास्रतृड्दाहक्षतक्षयसमीरजित्
पक्वं स्वादु हिमं पाके स्वादु वृष्यञ्च बृंहणम्
क्षुत्तृष्णानेत्रगदहृन्मेहघ्नं रुचिमांसकृत् ३४
माणिक्यमर्त्यामृतचम्पकाद्या भेदाः कदल्या बहवोऽपि सन्ति
उक्ता गुणास्तेष्वधिका भवन्ति निर्दोषता स्याल्लघुता च तेषाम् ३५
चिर्भिटं धेनुदुग्धं च तथा गोरक्षकर्कटी ३६
चिर्भिटं मधुरं रूक्षं गुरु पित्तकफापहम्
अनुष्णं ग्राहि विष्टम्भि पक्वं तूष्णञ्च पित्तलम् ३७
नारिकेलो दृढफलो लाङ्गली कूर्चश्र्षकः
तुङ्गः स्कन्धफलश्चैव तृणराजः सदाफलः ३८
नारिकेलफलं शीतं दुर्जरं बस्तिशोधनम्
विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहनुत् ३९

विशेषतः कोमलनारिकेलं निहन्ति पित्तज्वरपित्तदोषान्
तदेव जीर्णं गुरु पित्तकारि विदाहि विष्टम्भि मतं भिषग्भिः ४०
तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु
पिपासापित्तजित्स्वादु बस्तिशुद्धिकरं परम् ४१
नारिकेलस्य तालस्य खर्जूरस्य शिरांसि तु
कषायस्निग्धमधुरबृंहणानि गुरूणि च ४२
कालिन्दं कृष्णबीजं स्यात्कालिङ्गञ्च सुवर्त्तुलम्
कालिन्दं ग्राहि दृक्पित्त शुक्र हृच्छीतलं गुरु
पक्वन्तु सोष्णं सक्षारं पित्तलं कफवातजित् ४३
दशाङ्गुलं तु खर्बूजं कथ्यन्ते तद्गुणा अथ ४४
खर्बूजं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु
स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् ४५
तेषु यच्चाम्लमधुरं सक्षारञ्च रसाद्भवेत्
रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरं परम् ४६
त्रपुसं कण्टकिफलं सुधावासः सुशीतलम्
त्रपुसं लघु नीलञ्च नवं तृट्क्लमदाहजित् ४७
स्वादु पित्तापहं शीतं रक्तपित्तहरं परम्
तत्पक्वमम्लमुष्णं स्यात्पित्तलं कफवातनुत्
तद्बीजं मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित् ४८
घोरण्टः पूगी पूगश्च गुवाकः क्रमुकोऽस्य तु
फलं पूगीफलं प्रोक्तमुद्वेगं च तदीरितम् ४९
पूगं गुरु हिमं रूक्षं कषायं कफपित्तजित्
मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् ५०
आर्द्रं तद् गुर्वभिष्यन्दि वह्निदृष्टिहरं स्मृतम्
स्विन्नं दोषत्रयच्छेदि दृढमध्यं तदुत्तमम् ५१
तालस्तु लेख्यपत्रः स्यात्तृणराजो महोन्नतः ५२
पक्वं तालफलं पित्तरक्तश्लेष्मविवर्द्धनम्
दुर्जरं बहुमूत्रञ्च तन्द्राऽभिष्यन्दशुक्रदम् ५३
तालमज्जा तु तरुणः किञ्चिन्मदकरो लघुः
श्लेष्मलो वातपित्तघ्नः सस्नेहो मधुरः सरः ५४

तालजं तरुणं तोयमतीव मदकृन्मतम्
अम्लीभूतं तदा तु स्यात्पित्तकृद्वातदोषहृत् ५५
बिल्वः शाण्डिल्यशैलूषौ मालूरश्रीफलावपि
बालं बिल्बफलं बिल्वकर्कटी बिल्वपेशिका
ग्राहिणी कफवातामशूलघ्नी बिल्वपेषिका ५६
बालं बिल्वफलं ग्राहि दीपनं पाचनं कटु
कषायोष्णं लघु स्निग्धं तिक्तं वातकफापहम् ५७
पक्वं गुरु त्रिदोषं स्याद् दुर्जरं पूतिमारुतम्
विदाहि विष्टम्भकरं मधुरं वह्निमान्द्यकृत् ५८
फलेषु परिपक्वं यद् गुणवत्तदुदाहृतम् ५९
बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणाधिकम्
द्राक्षाबिल्वशिवाऽदीनां फलं शुष्कं गुणाधिकम् ६०
कपित्थस्तु दधित्थः स्यात्तथा पुष्पफलः स्मृतः
कपिप्रियो दधिफलस्तथा दन्तशठोऽपि च ६१
कपित्थमामं संग्राहि कषायं लघु लेखनम्
पक्वं गुरु तृषाहिक्काशमनं वातपित्तजित्
स्यादम्लं तुवरं कण्ठशोधनं ग्राहि दुर्जरम् ६२
नारङ्गो नागरङ्गः स्यात्त्वक्सुगन्धो मुखप्रियः ६३
नारङ्गो मधुराम्लः स्याद्रोचनो वातनाशनः
अपरं त्वम्लमत्युष्णं दुर्जरं वातहृत् सरम् ६४
तिन्दुकः स्फूर्जकः कालस्कन्धश्चासितकारकः
स्यादामं तिन्दुकं ग्राहि वातलं शीतलं लघु
पक्वं पित्तप्रमेहास्रश्लेष्मघ्नं मधुरं गुरु ६५
तिन्दुको यस्तु कथितो जलदो दीर्घपत्रकः ६६
कुपीलुः कुलकः काकतिन्दुकः काकपीलुकः
काकेन्दुर्विषतिन्दुश्च तथा मर्कटतिन्दुकः ६७
कुपीलुः शीतलं तिक्तं वातलं मदकृल्लघु
परं व्यथाहरं ग्राहि कफपित्तास्रनाशनम् ६८
फलेन्द्रा कथिता नन्दी राजजम्बूर्महाफला
तथा सुरभिपत्रा च महाजम्बूरपि स्मृता

राजजम्बूफलं स्वादु विष्टम्भि गुरु रोचनम् ६९
क्षुद्रजम्बुः सूक्ष्मपत्रा नादेयी जलजम्बुका
जम्बूः संग्राहिणी रूक्षा कफपित्तास्रदाहजित् ७०
पुंसि स्त्रियाञ्च कर्कन्धूर्बदरी कोलमित्यपि ७१
फेनिलं कुवलं घोण्टा सौवीरं बदरं महत्
अजप्रिया कुहा कोली विषमोभयकण्टका ७२
पच्यमानं सुमधुरं सौवीरं बदरं महत्
सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम् ७३
बृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम्
सौवीरं लघु सम्पक्वं मधुरं कोलमुच्यते ७४
कोलन्तु बदरं ग्राहि रुच्यमुष्णञ्च वातहृत्
कफपित्तकरं चापि गुरु सारकमीरितम् ७५
कर्कन्धूः क्षुद्रवदरं कथितं पूर्वसूरिभिः
अम्लं स्यात्क्षुद्रवदरं कषायं मधुरं मनाक् ७६
स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम्
शुष्कं भेद्यग्निकृत्सर्वं लघु तृष्णाक्लमास्रजित् ७७
प्राचीनामलकं लोके पानीयामलकं स्मृतम्
प्राचीनामलकं दोषत्रयजिज्ज्वरघाति च ७८
सुगन्धमूला लवली पाण्डुः कोमलवल्कला ७९
लवलीफलमश्मार्शःकफपित्तहरं गुरु
विशदं रोचनं रूक्षं स्वाद्वम्लं तुवरं रसे ८०
करमर्दः सुषेणः स्यात्कृष्णपाकफलस्तथा
तस्माल्लघुफला या तु सा ज्ञेया करमर्दिका ८१
करमर्दद्वयं त्वाममम्लं गुरु तृषाहरम्
उष्णं रुचिकरं प्रोक्तं रक्तपित्तकफप्रदम्
तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् ८२
प्रियालस्तु खरस्कन्धश्चारो बहुलवल्कलः
राजादनस्तापसेष्टः सन्नकद्रुर्धनुष्पटः ८३
चारः पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु
स्निग्धं सरं मरुत्पित्तदाहज्वरतृषाऽपहम् ८४

प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः
हृद्योऽतिदुर्जरः स्निग्धो विष्टम्भी चामवर्द्धनः ८५
राजादनः फलाध्यक्षो राजन्या क्षीरिकाऽपि च ८६
क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमं गुरु
तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित् ८७
विकङ्कतः स्रुवावृक्षो ग्रन्थिलः स्वादुकण्टकः
स एव यज्ञवृक्षश्च कण्टकी व्याघ्रपादपि
विकङ्कतफलं पक्वं मधुरं सर्वदोषजित् ८८
पद्मबीजं तु पद्माक्षं गालोड्यं पद्मकर्कटी
पद्मबीजं हिमं स्वादु कषायं तिक्तकं गुरु ८९
विष्टम्भि वृष्यं रूक्षञ्च गर्भसंस्थापकं परम्
कफवातकरं बल्यं ग्राहि पित्तास्रदाहनुत् ९०
मखान्नं पद्मबीजाभं पानीयफलमित्यपि
मखान्नं पद्मबीजस्य गुणैस्तुल्यं विनिर्दिशेत् ९१
शृङ्गाटकं जलफलं त्रिकोणफलमित्यपि ९२
शृङ्गाटकं हिमं स्वादु गुरु वृष्यं कषायकम्
ग्राही शुक्रानिलश्लेष्मप्रदं पित्तास्रदाहनुत् ९३
उक्तं कुमुदबीजन्तु बुधैः कैरविणीफलम्
भवेत्कुमुद्वतीबीजं स्वादु रूक्षं हिमं गुरु ९४
मधूको गुडपुष्पः स्यान्मधुपुष्पो मधुस्रवः
वानप्रस्थो मधुष्ठीलो जलजेऽत्र मधूलकः ९५
मधूकपुष्पं मधुरं शीतलं गुरु बृंहणम्
बलशुक्रकरं प्रोक्तं वातपित्तविनाशनम् ९६
फलं शीतं गुरु स्वादु शुक्रलं वातपित्तनुत्
अहृद्यं हन्ति तृष्णाऽस्रदाहश्वासक्षतक्षयान् ९७
परूषकं तु परुषमल्पास्थि च परापरम्
परूषकं कषायाम्लमामं पित्तकरं लघु ९८
तत्पक्वं मधुरं पाके शीतं विष्टम्भि बृंहणम्
हृद्यन्तु पित्तदाहास्रज्वरक्षयसमीरहृत् ९९
तूतस्तूलश्च पूगश्च क्रमुको ब्रह्मदारु च

तूतं पक्वं गुरु स्वादु हिमं पित्तानिलापहम्
तदेवामं गुरु सरमम्लोष्णं रक्तपित्तकृत् १००
दाडिमः करको दन्तबीजो लोहितपुष्पकः
तत्फलं त्रिविधं स्वादु स्वाद्वम्लं केवलाम्लकम् १०१
तत्तु स्वादु त्रिदोषघ्नं तृड्दाहज्वरनाशनम्
हृत्कण्ठमुखगन्धघ्नं तर्पणं शुक्रलं लघु १०२
कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम् १०३
स्वाद्वम्लं दीपनं रुच्यं किञ्चित्पित्तकरं लघु
अम्लन्तु पित्तजनकमामं वातकफापहम् १०४
अथ बहुवारः िलिसोडाा तस्य नामानि
बहुवारस्तु शीतः स्यादुद्दालो बहुवारकः
शेलुः श्लेष्मातकश्चापि पिच्छिलो भूतवृक्षकः १०५
बहुवारो विषस्फोटव्रणवीसर्पकुष्ठनुत्
मधुरस्तुवरस्तिक्तः केश्यश्च कफपित्तहृत् १०६
फलमामन्तु विष्टम्भि रूक्षं पित्तकफास्रजित्
तत्पक्वं मधुरं स्निग्धं श्लेष्मलं शीतलं गुरु १०७
पयः प्रसादी कतकः कतकं तत्फलं च तत्
कतकस्य फलं नेत्र्यं जलनिर्मलताकरम्
वातश्लेष्महरं शीतं मधुरं तुवरं गुरु १०८
द्राक्षास्वादुफला प्रोक्ता तथा मधुरसाऽपि च
मृद्वीका हारहूरा च गोस्तनी चापि कीर्त्तिता १०९
द्राक्षा पक्वा सरा शीता चक्षुष्या बृंहणी गुरुः
स्वादुपाकरसा स्वर्या तुवरा सृष्टमूत्रविट् ११०
कोष्ठमारुतकृद् वृष्या कफपुष्टिरुचिप्रदा १११
हन्ति तृष्णाज्वरश्वासवातवातास्रकामलाः
कृच्छ्रास्रपित्तसंमोहदाहशोषमदात्ययान् ११२
आमा स्वल्पगुणा गुर्वी सैवाम्ला रक्तपित्तकृत्
वृष्या स्याद् गोस्तनी द्राक्षा गुर्वी च कफपित्तनुत् ११३
अबीजाऽन्या स्वल्पतरा गोस्तनीसदृशी गुणैः
द्राक्षा पर्वतजा लघ्वी साऽम्ला श्लेष्माम्लपित्तकृत्

द्राक्षा पर्वतजा यादृक् तादृशी करमर्दिका ११४
भूमिखर्जूरीका स्वाद्वी दुरारोहाः मृदुच्छदा
तथा स्कन्धफला काककर्कटी स्वादुमस्तका ११५
पिराडखर्जूरिका त्वन्या सा देशे पश्चिमे भवेत्
खर्जुरी गोस्तनाकारा परद्वीपादिहागता ११६
जायते पश्चिमे देशे सा छोहारेति कीत्तर्यते
खर्जूरीत्रितयं शीतं मधुरं रसपाकयोः ११७
स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु
तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदम् ११८
कोष्ठमारुतहृद् बल्यं वान्तिवातकफापहम्
ज्वरातिसारक्षुत्तृष्णाकासश्वासनिवारकम् ११९
मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत्
महतीभ्यां गुणैरल्पास्वल्पखर्जूरिका स्मृता १२०
खर्जूरीतरुतोयं तु मदपित्तकरं भवेत्
वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत् १२१
सुलेमानी तु मृदुला दलहीनफला च सा
सुलेमानी श्रमभ्रान्तिदाहमूर्च्छाऽस्रपित्तहृत् १२२
वातादौ वातवैरी स्यान्नेत्रोपमफलस्तथा
वातादः उष्णः सुस्निग्धो वातघ्नः शुक्रकृद् गुरुः १२३
वातादमज्जा मधुरो वृष्यः पित्तानिलापहः
स्निग्धोष्णः कफकृन्नेष्टो रक्तपित्तविकारिणाम् १२४
मुष्टिप्रमाणं बदरं सेवं सिवितिकाफलम् १२५
सेवं समीरपित्तघ्नं बृंहणं कफकृद् गुरु
रसे पाके च मधुरं शिशिरं रुचिशुक्रकृत् १२६
अमृतफलं लघु वृष्यं सुस्वादु त्रीन्हरेद्दोषान्
देशेषु मुद्गलानां–बहुलं तल्लभ्यते लोकैः १२७
पीलुर्गुडफलः स्रंसी तथा शीतफलोऽपि च
पीलु श्लेष्मसमीरघ्नं पित्तलं भेदि गुल्मनुत्
स्वादु तिक्तञ्च यत्पीलु तन्नात्युष्णं त्रिदोषहृत् १२८
पीलुः शैलभवोऽक्षोटः कर्परालश्च कीर्तितः

अक्षोटकोपि वातादसदृशः कफपित्तकृत् १२९
बीजपूरो मातुलुङ्गो रुचकः फलपूरकः
बीजपूरफलं स्वादु रसेऽम्ल दीपनं लघु १३०
रक्तपित्तहरं कण्ठजिह्वाहृदयशोधनम्
श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम् १३१
बीजपूरोऽपरः प्रोक्तो मधुरो मधुकर्कटी १३२
मधुकर्कटिका स्वाद्वी रोचनी शीतला गुरुः
रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा १३३
स्याज्जम्बीरो दन्तशठो जम्भजम्भीरजम्भलाः
जम्बीरमुष्णं गुर्वम्लं वातश्लेष्मविबन्धनुत् १३४
शूलकासकफोत्क्लेशच्छर्दितृष्णाऽमदोषजित्
आस्यवैरस्यहृत्पीडावह्निमान्द्यक्रिमीन् हरेत्
स्वल्पजम्बीरिका तद्वत्तृष्णाच्छर्दिनिवारिणी १३५
निम्बूः स्त्री निम्बुकं क्लीबे निम्बूकमपि कीर्त्तितम्
निम्बूकमम्लं वातघ्नं दीपनं पाचनं लघु १३६
निम्बुकं कृमिसमूहनाशनं तीक्ष्णमम्लमुदरग्रहापहम्
वातपित्तकफशूलिने हितं कष्टनष्टरुचिरोचनं परम् १३७
त्रिदोषवह्निक्षयवातरोगनिपीडितानां विषविह्वलानाम्
मन्दानले बद्धगुदे प्रदेयं विषूचिकायां मुनयो वदन्ति १३८
मिष्टनिम्बूफलं स्वादु गुरु मारुतपित्तनुत् १३९
गलरोगविषध्वंसिकफोत्क्लेशि च रक्तहृत्
शोषारुचितृषाच्छर्दिहरं बल्यञ्च बृंहणम् १४०
कर्मरङ्गं शिरालं च बृहदम्लं रुजाकरम्
कर्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफवातहृत् १४१
अम्लिका चुक्रिकाऽम्ली च चुका दन्तशठाऽपि च
अम्ला च चिञ्चिका चिञ्चा तिन्तिडीका च तिन्तिडी १४२
अम्लिकाऽम्ला गुरुर्वातहरी पित्तकफास्रकृत्
पक्वा तु दीपनी रूक्षा सरोष्णा कफवातनुत् १४३
स्यादम्लवेतसश्चुक्रं शतवेधि सहस्रनुत्
अम्लवेतसमत्यम्लं भेदनं लघु दीपनम् १४४

हृद्रोगशूलगुल्मघ्नं पित्तलं लोमहर्षणम्
रूक्षं विरामूत्रदोषघ्नं प्लीहोदावर्त्तनाशनम् १४५
हिक्काऽनाहारुचिश्वासकासाजीर्णवमिप्रणुत्
कफवातामयध्वंसिच्छागमांसद्रवत्वकृत्
चणकाम्लगुणं ज्ञेयं लोहसूचीद्रवत्वकृत् १४६
वृक्षाम्लं तिन्तिडीकञ्चचुक्रं स्यादम्लवृक्षकम्
वृक्षाम्लमाममम्लोष्णं वातघ्नं कफपित्तलम् १४७
पक्वन्तु गुरु संग्राहि कटुकं तुवरं लघु १४८
अम्लोष्णं रोचनं रूक्षं दीपनं कफवातकृत्
तृष्णाऽशोग्रहणीगुल्मशूलहृद्रोगजन्तुजित् १४९
अम्लवेतसवृक्षाम्लबृहज्जम्बीरनिम्बुकैः
चतुरम्लं हि पञ्चाम्लं बीजपूरयुतैर्भवेत् १५०
फलेषु परिपक्वं यद् गुणवत्तदुदाहृतम्
बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणाधिकम्
फलेषु सरसं यत्स्याद् गुणवत्तदुदाहृतम् १५१
द्राक्षाबिल्वशिवाऽदीनां फलं शुष्कं गुणाधिकम्
फलतुल्यगुणं सर्वं मज्ञानमपि निर्दिशेत् १५२
फलं हिमाग्निदुर्वातव्यालकीटादिदूषितम्
अकालजं कुभूमीजं पाकातीतं न भक्षयेत् १५३

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
सप्तम आम्रादिफलवर्गः समाप्तः ७

अथाष्टमो धात्वादिवर्गोपरनामको
धातूपधातुरसोपरसरत्नोपरत्नविषोपविषवर्गः

स्वर्णं रूप्यञ्च ताम्रं च रङ्गं यशदमेव च
सीसं लौहञ्च सप्तैते धातवो गिरिसम्भवः १
वली पलित खालित्य कार्श्याबल्य जरामयान्
निवार्य देहं दधति नृणां तद्धातवो मताः २
पुरा निजाश्रमस्थानां सप्तर्षीणां जितात्मनाम्
पत्नीर्विलोक्य लावरायलक्ष्मीसम्पन्नयौवनाः ३

कन्दर्पदर्पविध्वस्तचेतसो जातवेदसः
पतितं यद्धरापृष्ठे रेतस्तद्धेमतामगात्
कृत्रिमञ्चापि भवति तद्रसेन्द्रस्य वेधतः ४
स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ५
तपनीयं च गाङ्गेयं कलधौतञ्च काञ्चनम्
चामीकरं शातकुम्भं तथा कार्त्तस्वरं च तत् ६
जाम्बूनदं जातरूपं महारजतमित्यपि ७
दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम्
तारशुल्वोज्झितं स्निग्धं कोमलं गुरु हेम सत् ८
तच्छ्वेतं कठिनं रूक्षं विवर्णं समलं दलम्
दाहे छेदेऽसितं श्वेतं कषे त्याज्यं लघु स्फुटम् ९
सुवर्णं शीतलं वृष्यं बल्यं गुरु रसायनम्
स्वादु तिक्तं च तुवरं पाके च स्वादु पिच्छिलम् १०
पवित्रं बृंहणं नेत्र्यं मेधास्मृतिमतिप्रदम्
हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत्
विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित् ११
बलं सवीर्यं हरते नराणां रोगव्रजान् पोषयतीह काये
असौख्यकृच्चापि सदा सुवर्णमशुद्धमेतन्मरणञ्च कुर्यात् १२
असम्यङ्मारितं स्वर्णं बलं वीर्य्यञ्च नाशयेत्
करोति रोगान् मृत्युं च तद्धन्याद्यत्नतस्ततः १३
त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनैः
निरीक्षयामास शिवः क्रोधेन परिपूरितः १४
अग्निस्तत्कालमपतत्तस्यकस्माद्विलोचनात्
ततो रुद्रः समभवद् वैश्वानर इव ज्वलन् १५
द्वितीयादपतन्नेत्रादश्रुबिन्दुस्तु वामकात्
तस्माद्रजतमुत्पन्नमुक्तकर्मसु योजयेत् १६
कृत्रिमं च भवेत्तद्धि वङ्गादिरसयोगतः १७
रूप्यं तु रजतं तारं चन्द्रकान्ति सितप्रभम् १८
गुरु स्निग्धं मृदु श्वेतं दाहे छेदे घनक्षमम्
वर्णाढ्यं चन्द्रवत्स्वच्छं रूप्यं नवगुणं शुभम्

कठिनं कृत्रिमं रूक्षं रक्तं पीतदलं लघु
दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम् १९
रूप्यं शीतं कषायाम्लं स्वादुपाकरसं सरम्
वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित्
प्रमेहादिकरोगांश्च नाशयत्यचिराद् ध्रुवम् २०
तारं शरीरस्य करोति तापं विध्वंसनं यच्छति शुक्रनाशम्
वीर्यं बलं हन्ति तनोश्च पुष्टिं महागदान्पोषयति ह्यशुद्धम् २१
शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतले
तस्मात्ताम्रं समुत्पन्नमिदमाहुः पुराविदः २२
ताम्रमौदुम्बरं शुल्वमुदुम्बरमपि स्मृतम्
रविप्रियं म्लेच्छमुखं सूर्यपर्यायनामकम् २३
जपाकुसुमसङ्काशं स्निग्धं मृदु घनक्षमम्
लौहनागोज्झितं ताम्रं मारणाय प्रशस्यते २४
कृष्णं रूक्षमतिस्तब्धं श्वेतञ्चापि घनासहम्
लौहनागयुतञ्चेति शुल्बं दुष्टं प्रकीर्त्तितम् २५
ताम्रं कषायं मधुरं च तिक्तमम्लं च पाके कटु सारकं च
पित्तापहं श्लेष्महरं च शीतं तद्रोपणं स्याल्लघु लेखनञ्च २६
पाराडूदरार्शोज्वरकुष्ठकासश्वासक्षयान् पीनसमम्लपित्तम्
शोथं कृमिं शूलमपाकरोति प्राहुः परे बृंहणमल्पमेतत् २७
एको दोषो विषे ताम्रेत्वसम्यङ्मारितेऽष्टते
दाहः स्वेदोऽरुचिर्मूर्च्छाक्लेदो रेको वमिर्भ्रमः २८
रङ्गं वङ्गं त्रपु प्रोक्तं तथा पिच्चटमित्यपि
क्षुरकं मिश्रकं चापि द्विविधं वङ्ग मुच्यते २९
उत्तमं क्षुरकं तत्र मिश्रकं त्ववरं मतम् ३०
रङ्गं लघु सरं रूक्षमुष्णं मेहकफक्रिमीन्
निहन्ति पाराडुं सश्वासं चक्षुष्यं पित्तलं मनाक् ३१
सिंहो यथा हस्तिगणं निहन्ति तथैव वङ्गोऽखिलमेहवर्गम्
देहस्य सौख्यं प्रबलेन्द्रियत्वं नरस्य पुष्टिं विदधाति नूनम् ३२
यशदं रङ्गसदृशं रीतिहेतुश्च तन्मतम्
यशदं तुवरं तिक्तं शीतलं कफपित्तहृत्

चक्षुष्यं परमं मेहान् पाण्डुं श्वासं च नाशयेत् ३३
दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तुमुमोच यत्
वीर्यं जातस्ततो नागः सर्वरोगापहा नृणाम् ३४
सीसं ब्रध्नं च वप्रं च योगेष्टं नागनामकम् ३५
सीसं रङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम् ३६
नागस्तु नागशततुल्यबलं ददाति व्याधिं विनाशयति जीवनमातनोति
बह्निं प्रदीपयति कामबलं करोति मृत्युं च नाशयति सन्ततसेवितः सः३७
पाकेन हीनौ किल वङ्गनागौ कुष्ठानि गुल्मांश्च तथाऽतिकष्टान्
कण्डूप्रमेहानिलसादशोथभगन्दरादीन् कुरुतः प्रयुक्तौ ३८
पुरा लोमिनदैत्यानां निहतानां सुरैर्युधि
उत्पन्नानि शरीरेभ्यो लोहानि विविधानि च
लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी ३९
गुरुता दृढतोत्क्लेदः कश्मलं दाहकारिता
अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्य तु ४०
लोहं तिक्तं सरं शीतं मधुरं तुवरं गुरु
रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत् ४१
कफं पित्तं गरं शूलं शोथार्शः प्लीहपाण्डुताः
मेदोमेहकृमीन् कुष्ठं तत्किट्टं तद्वदेव हि ४२
षण्ढत्वकुष्ठामयमृत्युदं भवेद् हृद्रोगशूलौ कुरुतेऽश्मरीञ्च
नानारुजानाञ्च तथा प्रकोपं करोति हृल्लासमशुद्धलोहम् ४३
जीवहारि मदकारि चायसं चेदशुद्धिमदसंस्कृतं ध्रुवम्
पाटवं न तनुते शरीरके दारुणां हृदि रुजाञ्च यच्छति ४४
कूष्माण्डं तिलतैलञ्च माषान्नं राजिकां तथा
मद्यम्लरसं चापि त्यजेल्लोहस्य सेवकः ४५
क्षमाभृच्छिखराकाराण्यङ्गान्यम्लेन लेपिते
लौहे स्युर्यत्र सूक्ष्माणि तत्सारमभिधीयते
लौहं साराह्वयं हन्याद् ग्रहणीमतिसारकम् ४६
अर्द्धं सर्वाङ्गजं वातं शूलं च परिणामजम्
छर्दिं च पीनसं पित्तं श्वासं कासं व्यपोहति ४७
यत्पात्रे न प्रसरति जले तैलविन्दुः प्रतप्ते

हिङ्गुर्गन्धं त्यजति च निजं तिक्ततां निम्बवल्कः
तप्तं दुग्धं भवति शिखराकारकंनैति भूमिं
कृष्णाङ्गः स्यात् सजलचणकः कान्तलोहंतदुक्तम् ४८
गुल्मोदरार्शःशूलाममामवातं भगन्दरम्
कामलाशोथकुष्ठानि क्षयं कान्तमयो हरेत् ४९
प्लीहानमम्लपित्तञ्च यकृच्चापि शिरोरुजम् ५०
सर्वान् रोगान् विजयते कान्तलोहं न संशयः
बलं वीर्यं वपुःपुष्टिं कुरुतेऽग्निं विवर्द्धयेत् ५१
ध्मायमानस्य लोहस्य मलं मण्डूर मुच्यते
लोहसिंहानिका किट्टी सिंहानञ्च निगद्यते
यल्लोहं यद्गुणंप्रोक्तं तत्किट्टमपि तद्गुणम् ५२
सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकं
तुत्थं कांस्यं च रीतिश्च सिन्दूरञ्च शिलाजतु ५३
उपधातुषु सर्वेषु तत्तद्धातुगुणा अपि
सन्ति किन्त्वेषु ते गौणास्तत्तदंशाल्पभावतः ५४
स्वर्णमाक्षिकमाख्यातं तापीजं मधुमाक्षिकम् ५५
ताप्यं माक्षिकधातुश्च मधुधातुश्च स स्मृतः
किञ्चित्सुवर्णं साहित्यात्स्वर्णमाक्षिकमीरितम् ५६
उपधातुः सुवर्णस्य किञ्चित्स्वर्णगुणान्वितम्
तथा च काञ्चनाभावे दीयते स्वर्णमाक्षिकम् ५७
किन्तु तस्यानुकल्पत्वात्किञ्चिदूनगुणास्ततः
न केवलं स्वर्णगुणा वर्त्तन्ते स्वर्णमाक्षिके ५८
द्रव्यान्तरस्य संसर्गात्सन्त्यन्येऽपि गुणा यतः
सुवर्णमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् ५९
चक्षुष्यं बस्तिरुक्कुष्ठपाण्डुमेहविषोदरान्
अर्शः शोथं विषं कण्डूं त्रिदोषमपि नाशयेत् ६०
मन्दानलत्वं बलहानिमुग्रां विष्टम्भितां नेत्रगदान्सकुष्ठान्
तथैव मालां व्रणपूर्विकां च करोति तापीजमशुद्धमेतत् ६१
तारमाक्षिकमन्यत्तु तद्भवेद्रजतोपमम्
किञ्चिद्रजतसाहित्यात्तारमाक्षिकमीरितम् ६२

अनुकल्पतया तस्य ततो हीनगुणाः स्मृताः
न केवलं रूप्यगुणा यतः स्यात्तारमाक्षिकम् ६३
स्वादु पाके रसे किञ्चित्तिक्तं वृष्यं रसायनम्
चक्षुष्यं वस्तिरुक्कुष्ठपाण्डुमेहविषोदरान्
अर्शः शोथं क्षयङ्कण्डूं त्रिदोषमपि नाशयेत् ६४
मन्दानलत्वं बलहानिमुग्रां विष्टम्भितां नेत्रगदान्सकुष्ठान्
तथैव मालां व्रणपूर्विकाञ्च करोति तापीजमिदञ्च तद्वत् ६५
तुत्थं वितुन्नकं चापि शिखिग्रीवं मयूरकम्
तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् ६६
किञ्चित्ताम्रगुणं तस्माद्वक्ष्यमाणगुणं च तत्
तुत्थकं कटुकं क्षारं कषायं वामकं लघु ६७
लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत्
विषाश्मकुष्ठकण्डूघ्नं खर्परं चापि तद्गुणम् ६८
ताम्रत्रपुजमाख्यातं कांस्यं घोषं च कंसकम्
उपधातुर्भवेत्कांस्यं द्वयोस्तरणिरङ्गयोः ६९
कांस्यस्य तु गुणा ज्ञेयाः स्वयोनिसदृशाजनैः
संयोगजप्रभावेण तस्यान्येऽपि गुणाः स्मृताः ७०
कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरम्
गुरु नेत्रहितं रूक्षं कफपित्तहरं परम् ७१
पित्तलं त्वारकूटं स्यादारो रीतिश्च कथ्यते
राजरीतिर्ब्रह्मरीतिः कपिला पिङ्गलापि च ७२
रीतिरप्युपधातुः स्यात्ताम्रस्य यशदस्य च
पित्तलस्य गुणा ज्ञेयाः स्वयोनिसदृशा जनैः ७३
संयोगजप्रभावेण तस्याप्यन्ये गुणाः स्मृताः ७४
रीतिकायुगलं रूक्षं तिक्तञ्च लवणं रसे
शोधनं पाण्डुरोगघ्नं कृमिघ्नं नातिलेखनम् ७५
सिन्दूरं रक्तरेणुश्च नागगर्भश्च सीसजम्
सीसोपधातुः सिन्दूरं गुणैस्तत्सीसवन्मतम् ७६
संयोगजप्रभावेण तस्यान्येऽपि गुणाः स्मृताः
सिन्दूरमुष्णं वीसर्पकुष्ठकण्डूविषापहम्

भग्नसन्धानजननं व्रणशोधनरोपणम् ७७
निदाघे घर्मसन्तप्ता धातुसारं धराधराः
निर्यासवत्प्रमुञ्चन्ति तच्छिलाजतु कीर्त्तितम् ७८
सौवर्णं राजतं ताम्रमायसं तच्चतुर्विधम्
शिलाजत्वद्रिजतु च शैलनिर्यास इत्यपि ७९
गैरेयमश्मजं चापि गिरिजं शैलधातुजम्
शिलाजं कटु तिक्तोष्णं कटुपाकं रसायनम् ८०
छेदि योगवहं हन्ति कफमेहाश्मशर्कराः
मूत्रकृच्छ्रं क्षयं श्वासं वातार्शांसि च पाण्डुताम् ८१
अपस्मारं तथोन्मादं शोथकुष्ठोदरकृमीन् ८२
सौवर्णं तु जपापुष्पवर्णं भवति तद्रसात्
मधुरं कटु तिक्तं च शीतलं कटुपाकि च ८३
राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च
ताम्रं मयूरकण्ठाभं तीक्ष्णमुष्णं च जायते ८४
लौहं जटायुपक्षाभं सत्तिक्तं लवणं भवेत्
विपाके कटुकं शीतं सर्वं श्रेष्ठमुदाहृतम् ८५
रसायनार्थिभिर्लोकैः पारदो रस्यते यतः
ततो रस इति प्रोक्तः स च धातुरपि स्मृतः ८६
शिवाङ्गात्प्रच्युतं रेतः पतितं धरणीतले
तद्देहसारजातत्वाच्छुक्लमच्छमभूच्च तत् ८७
क्षेत्रभेदेन विज्ञेयं शिववीर्यं चतुर्विधम्
श्वेतं रक्तं तथा पीतं कृष्णं तत्तु भवेत्क्रमात्
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च खलु जातितः ८८
श्वेतं शस्तं रुजां नाशे रक्तं किल रसायने
धातुवादे तु तत्पीतं खे गतौ कृष्णमेव च ८९
पारदो रसधातुश्च रसेन्द्रश्च महारसः ९०
चपलः शिववीर्यश्च रसः सूतः शिवाह्वयः
पारदः षड्रसः स्निग्धस्त्रिदोषघ्नो रसायनः ९१
योगवाही महावृष्यः सदा दृष्टिबलप्रदः
सर्वामयहरः प्रोक्तो विशेषात्सर्वकुष्ठनुत् ९२

स्वस्थो रसो भवेद् ब्रह्मा बद्धो ज्ञेयो जनार्दनः
रञ्जितः कामितश्चापि साक्षाद्देवो महेश्वरः ९३
मूर्च्छितो हरति रुजं बन्धनमनुभूय खे गतिं कुरुते
अजरीकरोति हि मृतः कोऽन्य करुणाऽकरः सूतात् ९४
असाध्यो यो भवेद्रोगो यस्य नास्ति चिकित्सितम्
रसेन्द्रो हन्ति तं रोगं नरकुञ्जरवाजिनाम् ९५
मलं विषं वह्निगिरित्वचापलं नैसर्गिकं दोषमुशन्ति पारदे
उपाधिजौ द्वौ त्रपुनागयोगजौ दोषौ रसेन्द्रे कथितौ मुनीश्वरैः ९६
मलेन मूर्च्छा मरणं विषेण दाहोऽग्निना कष्टतरः शरीरे
देहस्य जाड्यं गिरिणा सदा स्युश्चाञ्चल्यतो वीर्यहतिश्च पुंसाम्
वङ्गेन कुष्ठं भुजगेन षण्ढो भवेदतोऽसौ परिशोधनीयः ९७
वह्निर्विषं मलं चेति मुख्या दोषास्त्रयो रसे
एते कुर्वन्ति सन्तापं मृतिं मूर्च्छां नृणां क्रमात् ९८
अन्येऽपि कथिता दोषा भिषग्भिः पारदे यदि
तथाऽप्येते त्रयो दोषाहरणीया विशेषतः ९९
संस्कारहीनं खलु सूतराजं यः सेवते तस्य करोति बाधाम्
देहस्य नाशं विदधाति नूनं कष्टांश्च रोगाञ्जनयेन्नराणाम् १००
गन्धो हिङ्गुलमभ्रतालकशिलाः स्रोतोऽञ्जनं टङ्कणं
राजावर्तकचुम्बकौ स्फटिकया शङ्खः खटी गैरिकम्
कासीसं रसकं कपर्दसिकताबोलाश्च कुङ्कुष्ठकं
सौराष्ट्री च मता अमी उपरसाः सूतस्य किञ्चिद्गुणैः १०१
हिङ्गुलं दरदं म्लेच्छमिङ्गुलं चूर्णपारदम्
दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः १०२
हंसपादस्तृतीयः स्याद् गुणवानुत्तरोत्तरम् १०३
चर्मारः शुक्लवर्णः स्यात्स पीतः शुकतुण्डकः
जपाकुसुमसङ्काशो हंसपादो महोत्तमः १०४
तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि
हल्लासकुष्ठज्वरकामलाश्च प्लीहामवातौ च गरं निहन्ति १०५
उर्ध्वपातनयुक्त्या तु डमरुयंत्रपाचितम्
हिङ्गुलं तस्य सूतं तु शुद्धमेव न शोधयेत् १०६

श्वेतद्वीपे पुरा देव्याः क्रीडन्त्या रजसाऽप्लुतम्
दुकूलं तेन वस्त्रेण स्नातायाः क्षीरनीरधौ १०७
प्रसृतं यद्रजस्तस्माद्गन्धकः समभूत्ततः
गन्धको गान्धिकश्चापि गन्धपाषाण इत्यपि १०८
सौगन्धिकश्च कथितो बलिर्बलरसोऽपि च
चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः १०९
रक्तो हेमक्रियासूक्तः पीतश्चैव रसायने
व्रणादिलेपने श्वेतः कृष्णः श्रेष्ठः सुदुर्लभः ११०
गन्धकः कटुकस्तिक्तो वीर्योष्णस्तुवरः सरः
पित्तलः कटुकः पाके जन्तुकण्डूविसर्पजित्
हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनः १११
अशोधितो गन्धक एव कुष्ठं करोति तापं विषमं शरीरे
सौख्यं च रूपं च वलं तथौजः शुक्रं निहन्त्येव करोति चास्त्रम् ११२
पुरा वधाय वृत्रस्य वज्रिणा वज्रमुद्धृतम्
विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः ११३
ते निपेतुर्घनध्वानाच्छिखरेषु महीभृताम्
तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम् ११४
तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात्
गगनात्स्खलितं यस्माद्गगनं च ततो मतम् ११५
विप्रक्षत्रियविट्शूद्रभेदात्तत्स्याच्चतुर्विधम्
क्रमेणैव सितं रक्तं पीतं कृष्णं च वर्णतः ११६
प्रशस्यते सितं तारे रक्तं तत्तु रसायने
पीतं हेमनि कृष्णं तु गदेषु द्रुतयेऽपि च ११७
पिनाकं दर्दुरं नागं वज्रं चेति चतुर्विधम्
मुञ्चत्यग्नौ विनिक्षिप्तं पिनाकं दलसञ्चयम् ११८
अज्ञानाद्भक्षणं तस्य महाकुष्ठप्रदायकम्
दुर्दरं त्वग्निनिक्षिप्तं कुरुते दुर्दरध्वनिम् ११९
गोलकान्बहुशः कृत्वा स स्यान्मृत्युप्रदायकः
नागं तु नागवद्वह्नौ फूत्कारं परिमुञ्चति १२०
तद्भक्षितमवश्यं तु विदधाति भगन्दरम्

वज्रं तु वज्रवत्तिष्ठेत्तन्नाग्नौ विकृतिं व्रजेत् १२१
सर्वाभ्रेषु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत् १२२
अभ्रमुत्तरशैलोत्थं बहुसत्त्वं गुणाधिकम्
दक्षिणाद्रिभवं स्वल्पसत्वमल्पगुणप्रदम् १२३
अभ्रं कषायं मधुरं सुशीतमायुष्करं धातुविवर्द्धनं च
हन्यात्त्रिदोषं व्रणमेहकुष्टप्लीहोदरग्रन्थिविषकृमींश्च १२४
रोगान्हन्ति द्रढयति वपुर्वीर्यवृद्धिं विधत्ते
तारुण्याढ्यं रमयति शतं योषितां नित्यमेव
दीर्घायुष्काञ्जनयति सुतान्विक्रमैः सिंहतुल्यान्
मृत्योर्भीतिं हरति सततं सेव्यमानं मृताभ्रम् १२५
पीडां विधत्ते विविधां नराणां कुष्ठं क्षयं पाण्डुगदं च शोथम्
हृत्पार्श्वपीडां च करोत्यशुद्धमभ्रं त्वसिद्धं गुरु तापदं स्यात् १२६
हरितालं तु तालं स्यादालं तालकमित्यपि
हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम् १२७
तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम्
स्वर्णवर्णं गुरु स्निग्धं सपत्रं चाभ्रपत्रवत् १२८
पत्राख्यं तालकं विद्याद् गुणाढ्यं तद्रसायनम्
निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु १२९
स्त्रीपुष्पहारकं स्वल्पगुणं तत्पिण्डतालकम्
हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम्
कण्डूकुष्ठास्यरोगास्त्रकफपित्तकचव्रणान् १३०
हरति च हरितालं चारुतां देहजातां
सृजति च बहुतापञ्चाङ्गसङ्कोचपीडाम्
वितरति कफवातौ कुष्ठरोगं विदध्यात्
इदमशितमशुद्धं मारितं चाप्यसम्यक् १३१
मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका
नैपाली कुनटी गोला शिला दिव्यौषधिः स्मृता १३२
मनःशिला गुरुर्वर्ण्या सरोष्णा लेखनी कटुः
तिक्ता स्निग्धा विषश्वासकासभूतकफास्त्रनुत् १३३
मनः शिला मन्दबलं करोति जन्तुं ध्रुवं शोधनमन्तरेण  मलानुबन्धं किल

मूत्ररोधं सशर्करं कृच्छ्रगदं च कुर्यात् १३४
अञ्जनं यामुनं चापि कापोताञ्जनमित्यपि
तत्तु स्रोतोऽञ्जनं कृष्णं सौवीरं श्वेतमीरितम् १३५
वल्मीकशिखराकारे भिन्नमञ्जनसन्निभम्
घृष्टं तु गैरिकाकारमेतत्स्रोतोऽञ्जनं स्मृतम् १३६
स्रोतोऽञ्जनसमं ज्ञेयं सौवीरं तत्तु पाण्डुरम्
स्रोतोऽञ्जनं स्मृतं स्वादु चक्षुष्यं कफपित्तनुत् १३७
कषायं लेखनं स्निग्धं ग्राहि च्छर्दिविषापहम्
सिध्मक्षयास्रहृच्छीतं सेवनीयं सदा बुधैः १३८
स्रोतोऽञ्जनगुणाः सर्वे सौवीरेऽपि मता बुधैः
किन्तु द्वयोरञ्जनयोः श्रेष्ठं स्रोतोऽञ्जनं स्मृतम् १३९
टङ्कणोऽग्निकरो रूक्षः कफघ्नो वातपित्तकृत् १४०
स्फटी च स्फटिका प्रोक्ता श्वेता शुभ्रा च रङ्गदा
दृढरङ्गा रङ्गदृढा रङ्गाङ्गापि च कथ्यते १४१
स्फटिका तु कषायोष्णा वातपित्तकफव्रणान्
निहन्ति श्वित्रवीसर्पान् योनिसङ्कोचकारिणी १४२
राजावर्त्तो नृपावर्त्तो राजन्यावर्त्तकस्तथा
आवर्त्तमणिसंज्ञश्च ह्यावर्त्तोऽपि तथैव च १४३
राजावर्त्तं कटुस्तिक्तः शिशिरः पित्तनाशनः
राजावर्त्तः प्रमेहघ्नश्छर्दिहिक्कानिवारणः १४४
चुम्बकः कान्तपाषाणोऽयस्कान्तो लौहकर्षकः
चुम्बको लेखनः शीतो मेदोविषगरापहः १४५
गैरिकं रक्तधातुश्च गैरेयं गिरिजं तथा
सुवर्णगैरिकं त्वन्यत्ततो रक्ततरं हि तत् १४६
गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम्
चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् १४७
खटिका कठिनी चापि लेखनी च निगद्यते
खटी दाहास्रजिच्छीता मधुरा विषशोथजित् १४८
लेपादेतद्गुणा प्रोक्ता भक्षिता मृत्तिकासमा
खटी गौरखटी द्वे च गुणैस्तुल्ये प्रकीर्त्तिते १४९

बालुका सिकता प्रोक्ता शर्करा रेतजाऽपि च
वालुका लेखनी शीता व्रणोरःक्षतनाशिनी १५०
खर्परी तुत्थकं तुत्थादन्यत्तद्रसकं स्मृतम्
ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृता १५१
काशीशं धातुकाशीशं पांशुकाशीशमित्यपि
तदेव किञ्चित्पीतं तु पुष्पकाशीशमुच्यते १५२
काशीशमम्लमुष्णं च तिक्तञ्च तुवरं तथा
वातश्लेष्महरं केश्यं नेत्रकण्डूविषप्रणुत्
मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्त्तितम् १५३
सौराष्ट्री तुवरी काली मृत्तालकसुराष्ट्रजे १५४
आढकी चापि सा ख्याता मृत्स्ना च सुरमृत्तिका
स्फटिकायागुणाः सर्वे सौराष्ट्र्या अपि कीर्त्तिताः १५५
मृन्मृदा मृत्तिका मृत्स्ना क्षेत्रजा कृष्णमृत्तिका
कृष्णमृत् क्षतदाहास्रप्रदरश्लेष्मपित्तनुत् १५६
पङ्कस्तु जलकल्कश्च चुलुकः कर्दमो मलः
चिकिलः पलितो द्रापः पललश्च निषद्वरः
कर्दमो दाहपित्तास्रशोथघ्नः शीतलः सरः १५७
कपर्दको वराटश्च कपर्दी च वराटिका
कर्णस्रावाग्निमान्द्यघ्नी पित्तास्रकफनाशिनी १५८
शङ्खः समुद्रजः कम्बुः सुनादः पावनध्वनिः
शङ्खो नेत्र्यो हिमः शीतो लघुः पित्तकफास्रजित् १५९
बोलगन्धरसप्राणपिण्डगोपरसाः समाः
बोलं रक्तहरं शीतं मेध्यं दीपनपाचनम्
मधुरं कटु तिक्तं च दाहस्वेदत्रिदोषजित्
ज्वरापस्मारकुष्ठघ्नं गर्भाशयविशुद्धिकृत् १६०
हिमवत्पादशिखरे कङ्कुष्ठमुपजायते
तत्रैकं रक्तकालं स्यात्तदन्यद्दण्डकं स्मृतम् १६१
पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिमम्
श्यामं पीतं लघु त्यक्तसत्त्वं नेष्टं तथाऽण्डकम् १६२
कङ्कुष्टं काककुष्टं च विरङ्गं कोलकाकुलम् १६३

कङ्कुष्ठं रेचनं तिक्तं कटूष्णं वर्णकारकम्
कृमिशोथोदराध्मानगुल्मानाहकफापहम् १६४
धनार्थिनो जनाःसर्वे रमन्तेऽस्मिन्नतीव यत्
ततो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः १६५
रत्नं क्लीबे मणिः पुंसि स्त्रियामपि निगद्यते
तत्तु पाषाणभेदोऽस्ति मुक्तादि च तदुच्यते १६६
रत्नं गारुत्मतं पुष्परागो माणिक्यमेव च
इन्द्रनीलश्च गोमेदस्तथा वैदूर्यमित्यपि
मौक्तिकं विद्रुमश्चेति रत्नान्युक्तानि वै नव १६७
मुक्ताफलं हीरकं च वैदूर्यं पद्मरागकम् १६८
पुष्परागं च गोमेदं नीलं गारुत्मतं तथा
प्रवालयुक्तान्येतानि महारत्नानि वै नव १६९
हीरकः पुंसि वज्रोऽस्त्री चन्द्रो मणिवरश्च सः
स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्रियः स्मृतः
पीतो वैश्योऽसितः शूद्रश्चतुर्वर्णात्मकश्च सः १७०
रसायने मतो विप्रः सर्वसिद्धिप्रदायकः
क्षत्रियो व्याधिविध्वंसी जरामृत्युहरः स्मृतः १७१
वैश्यो धनप्रदः प्रोक्तस्तथा देहस्यदाढर्यकृत्
शूद्रो नाशयति व्याधीन् वयःस्तम्भं करोति च १७२
अथ पुंस्त्रीनपुंसकभेदात् त्रिविधस्य तस्य
पुंस्त्रीनपुंसकानीह लक्षणीयानि लक्षणैः
सुवृत्ताः फलसम्पूर्णास्तेजोयुक्ता बृहत्तराः १७३
पुरुषास्ते समाख्याता रेखाविन्दु विवर्जिताः
रेखाविन्दुसमायुक्ताः षडस्रास्ते स्त्रियः स्मृताः १७४
त्रिकोणाश्च सुदीर्घास्ते विज्ञेयाश्च नपुंसकाः
तेषु स्युः पुरुषाः श्रेष्ठा रसबन्धनकारिणः १७५
स्त्रियः कुर्वन्ति कायस्य कान्तिं स्त्रीणां सुखप्रदाः
नपुंसकास्त्ववीर्याः स्युरकामा सत्ववर्जिताः१७६
स्त्रियः स्त्रीभ्यः प्रदातव्याः क्लीबं क्लीबे प्रयोजयेत्
सर्वेभ्यः सर्वदादेयाः पुरुषा वीर्यवर्धनाः १७७

अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा
पाण्डुतां पङ्गुलत्वं च तस्मात्संशोध्य मारयेत् १७८
आयुः पुष्टिं बलं वीर्यं वर्णं सौख्यं करोति च
सेवितं सर्वरोगघ्नं मृतं वज्रं न संशयः १७९
गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः १८०
माणिक्यं पद्मरागः स्याच्छोणरत्नञ्च लोहितम् १८१
पुष्परागो मञ्जुमणिः स्याद्वाचस्पतिवल्लभः १८२
नीलं तथेन्द्रनीलञ्च गोमेदः पीतरत्नकम् १८३
वैदूर्यं दूरजं रत्नं स्यात्केतुग्रहवल्लभम् १८४
मौक्तिकं शौतिक्तं मुक्ता तथा मुक्ताफलञ्च तत्
शुक्तिः शङ्खो गजः क्रोडः फणी मत्स्यश्च दर्दुरः
वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः
मौक्तितं शीतलं वृष्यं चक्षुष्यं बलपुष्टिदम् १८५
पुंसि क्लीबे प्रवालः स्यात्पुमानेव तु विद्रुमः १८६
रत्नानि भक्षितानि स्युर्मधुराणि सराणि च
चक्षुष्याणि च शीतानि विषघ्नानि धृतानि च
मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च १८७
किं रत्नं कस्य ग्रहस्य प्रीतिकारित्वेन दोषहरं भवतीति प्रश्ने
तदुत्तरमाहै रत्नमालायाम्
माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगो
र्माहेयस्य तु विद्रुमो निगदितः सौम्यस्य गारुत्मतम्
देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं शने
र्नीलं निर्मलमन्ययोर्निगदिते गोमेदवैदूर्यके १८८
उपरत्नानि काचश्च कर्पूराश्मा तथैव च
मुक्ताशुक्तिस्तथा शङ्ख इत्यादीनि बहून्यपि १८९
गुणा यथैव रत्नानामुपरत्नेषु ते तथा
किन्तु किञ्चित्ततो हीना विशेषोऽयमुदाहृतः १९०
विषं तु गरलः क्ष्वेडस्तस्य भेदानुदाहरे
वत्सनाभः सहारिद्रः सक्तुकश्च प्रदीपनः
सौराष्ट्रिकः शृङ्गिकश्च कालकूटस्तथैव च

हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव १९१
सिन्दुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा
यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः १९२
हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः १९३
यद्ग्रन्थिः सक्तुकेनैव पूर्णमध्यः स सक्तुकः १९४
वर्णतो लोहितो यः स्याद्दीप्तिमान् दहनप्रभः
महादाहकरः पूर्वैः कथितं स प्रदीपनः १९५
सुराष्ट्रविषये यः स्यात्स सौराष्ट्रिक उच्यते १९६
यस्मिन् गोशृङ्गके बद्धे दुग्धं भवति लोहितम्
स शृङ्गिक इति प्रोक्तो द्रव्यतत्त्वविशारदैः १९७
देवासुररणे देवैर्हतस्य पृथुमालिनः
दैत्यस्य रुधिराज्ञातस्तरुरश्वत्थसन्निभः
निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्त्तितः
सोऽहिच्चेत्रे शृङ्गवेरे कोङ्कणे मलये भवेत् १९८
गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा
तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः
असौ हालाहलो ज्ञेयः किष्किन्धायां हिमालये
दच्चिणाब्धितटे देशे कोङ्कणेऽपि च जायते १९९
वर्णतः कपिलो यः स्यात्तथा भवति सारतः
ब्रह्मपुत्रः सविज्ञेयो जायते मलयाचले २००
ब्राह्मणः पाराडुरस्तेषु च्चत्रियो लोहितप्रभः
वैश्यः पीतोऽसितः शूद्रो विष उक्तश्चतुर्विधः २०१
रसायने विषं विप्रं च्चत्रियं देहपुष्टये
वैश्यं कुष्ठविनाशाय शूद्रं दद्याद्वधाय हि २०२
विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि च
आग्नेयं वातकफहृद्योगवाहि मदावहम् २०३
तदेव युक्तियुक्तं तु प्राणदायि रसायनम्
योगवाहि त्रिदोषघ्नं बृंहणं वीर्यवर्द्धनम् २०४
ये दुर्गुणा विषेऽशुद्धे ते स्युर्हीना विशोधनात्
तस्माद्विषं प्रयोगेषु शोधयित्वा प्रयोजयेत् २०५

अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः
गुञ्जाऽहिफेनो धत्तूरः सप्तोपविषजातयः २०६
इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
अष्टमः धात्वादिवर्गः समाप्तः ८

अथ नवमो धान्यवर्गः

शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम्
शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम् १
शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः
यवादिकं शूकधान्यं मुद्गाद्यंशिम्बिधान्यकम्
कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यञ्च तत्स्मृतम् २
कण्डनेन विना शुक्ला हैमन्ताः शालयः स्मृताः३
रक्तशालि सकलमः पाण्डुकः शकुनाहृतः
सुगन्धकः कर्दमको महाशालिश्च दूषकः ४
पुष्पाण्डकः पुण्डरीकस्तथा महिषमस्तकः
दीर्घशूकः काञ्चनको हायनो लोध्रपुष्पकः ५
इत्याद्याः शालयः सन्ति बहवो बहुदेशजाः
ग्रन्थविस्तरभीतेस्ते समस्ता नात्र भाषिताः ६
शालयो मधुरा स्निग्धा बल्या बद्धाल्पवर्चसः
कषाया लघवो रुच्याः स्वर्या वृष्याश्च बृंहणाः
अल्पानिलकफाः शीताः पित्तघ्ना मूत्रलास्तथा ७
शालयो दग्धमृज्जाताः कषाया लघुपाकिनः
सृष्टमूत्रपुरीषाश्च रूक्षाः श्लेष्मापकर्षणाः ८
कैदारा वातपित्तघ्ना गुरवः कफशुक्रलाः
कषायाश्चाल्पवर्चस्का मेध्याश्चैव बलावहाः ९
स्थलजाः स्वादवः पित्तकफघ्ना वातपित्तदाः
किञ्चित्तिक्ताः कषायाश्च विपाके कटुका अपि १०
वापिता मधुरा वृष्या बल्याः पित्तप्रणाशनाः
श्लेष्मलाश्चाल्पवर्चस्काः कषाया गुरवो हिमाः ११
वापितेभ्यो गुणैः किञ्चिद्धीनाः प्रोक्ता अवापिताः १२

रोपितास्तु नवा वृष्या पुराणा लघवः स्मृताः
तेभ्यस्तुरोपिता भूयः शीघ्रपाका गुणाधिकाः १३
छिन्नरूढा हिमा रूक्षा बल्याः पित्तकफापहाः
बद्धविट्काः कषायाश्च लघवश्चाल्पतिक्तकाः १४
रक्तशालिर्वरस्तेषु बल्यो वर्ग्यस्त्रिदोषजित्
चक्षुष्यो मूत्रलः स्वर्यः शुक्रलस्तृड्ज्वरापहः १५
विषव्रणश्वासकासदाहनुद् वह्निपुष्टिदः
तस्मादल्पान्तरगुणाः शालयो महदादयः १६
वार्षिकाः कगिडताः शुक्ला व्रीहयश्चिरपाकिनः
कृष्णव्रीहिः पाटलश्च कुक्कुटागडक इत्यपि १७
शालामुखो जतुमुख इत्याद्या व्रीहयः स्मृताः
कृष्णब्रीहिः स विज्ञेयो यत्कृष्णतुषतगडुलः १८
पाटलः पाटलापुष्पवर्णको ब्रीहिरुच्यते
कुक्कुटागडाकृतिव्रीहिः कुक्कुटागडक उच्यते १९
शालामुखः कृष्णशूकः कृष्णतगडुल उच्यते
लाक्षावर्णं मुखं यस्य ज्ञेयो जतुमुखस्तु सः २०
व्रीहयः कथिताः पाके मधुरा वीर्यतो हिमाः
अल्पाभिष्यदिनो बद्धवर्चस्काः षष्टिकैः समाः
कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे २१
गर्भस्था एव ये पाकं यान्ति ते षष्टिका मताः २२
षष्टिकः शतपुष्पश्च प्रमोदकमुकुन्दकौ
महाषष्टिक इत्याद्याः षष्टिकाः समुदाहृताः
एतेऽपि व्रीहयः प्रोक्ता व्रीहिलक्षणदर्शनात् २३
षष्टिका मधुरा शीता लघवो बद्धवर्चसः
वातपित्तप्रशमनाः शालिभिः सदृशा गुणैः २४
षष्टिका प्रवरा तेषां लघ्वी स्निग्धा त्रिदोषजित् २५
स्वाद्वी मृद्वी ग्राहिणी च बलदा ज्वरहारिणी
रक्तशालिगुणैस्तुल्या ततः स्वल्पगुणाः परे २६
यवस्तु सितशूकः स्यान्निःशूकोऽतियवः स्मृतः
तोक्यस्तद्वत्स हरितस्ततः स्वल्पश्च कीर्त्तितः २७

यवः कषायो मधुरः शीतलो लेखनो मृदुः
व्रणेषु तिलवत्पथ्यो रूक्षो मेधाऽग्निवर्धनः २८
कटुपाकोऽनभिष्यन्दी स्वर्यो बलकरो गुरुः
बहुवातमलो वर्णस्थैर्यकारी च पिच्छिलः २९
कण्ठत्वगामयश्लेष्मपित्तमेदःप्रणाशनः
पीनसश्वासकासोरुस्तम्भलोहिततृट्प्रणुत्
अस्मादतियवो न्यूनस्तोक्यो न्यूनतरस्ततः ३०
गोधूमः सुमनोऽपि स्यात्त्रिविधः स च कीर्त्तितः
महागोधूम इत्याख्यः पश्चाद्देशात्समागतः ३१
मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा
निः शूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिघः ३२
गोधूमः मधुरः शीतो वातपित्तहरो गुरुः
कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत्सरः ३३
जीवनो बृंहणो वर्ण्यो व्रण्यो रुच्यः स्थिरत्वकृत् ३४
मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः
शुक्रला वृंहणी पथ्या तद्वन्नन्दीमुखः स्मृतः ३५
शमीजाः शिम्बिजाः शिम्बीभवाः सूप्याश्च वैदलाः ३६
वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः
वातलाः कफपित्तघ्ना बद्धमूत्रमला हिमाः
ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारिणः ३७
मुद्गो रूक्षो लघुर्ग्राही कफपित्तहरो हिमः
स्वादुरल्पानिलो नेत्र्यो ज्वरघ्नो वनजस्तथा ३८
मुद्गो बहुविधः श्यामो हरितः पीतकस्तथा
श्वेतो रक्तश्च तेषान्तु पूर्वः पूर्वो लघुः स्मृतः ३९
सुश्रुतेन पुनः प्रोक्तो हरितः प्रवरो गुणैः
चरकादिभिरप्युक्त एष एव गुणाधिकः ४०
माषो गुरुः स्वादुपाकः स्निग्धो रुच्योऽनिलापहः
स्रंसनस्तर्पणो बल्यः शुक्रलो वृंहणः परः ४१
भिन्नमूत्रमलः स्तन्यो मेदःपित्तकफप्रदः
गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ४२

कफपित्तकरा माषाः कफपित्तकरं दधि
कफपित्तकरा मत्स्या वृन्ताकं कफपित्तकृत् ४३
राजमाषो महामाषश्चपलश्च बलः स्मृतः
राजमाषो गुरुः स्वादुस्तुवरस्तर्पणः सरः ४४
रूक्षो वातकरो रुच्यः स्तन्यो भूरिबलप्रदः
श्वेतो रक्तस्तथा कृष्णस्त्रिविधः स प्रकीर्त्तितः
यो महांस्तेषु भवति स एवोक्तो गुणाधिकः ४५
निष्पावो राजशिम्बिः स्याद्वल्लकः श्वेतशिम्बिकः
निष्पावो मधुरो रूक्षो विपाकेऽम्लो गुरुः सरः ४६
कषायः स्तन्यपित्तास्रमूत्रवातविबन्धकृत्
विदाह्युष्णो विषश्लेष्मशोथहृच्छुक्रनाशनः ४७
मकुष्ठो वनमुद्गः स्यान्मकुष्ठकमुकुष्ठकौ ४८
मकुष्ठो वातलो ग्राही कफपित्तहरो लघुः
वह्निजिन्मधुरः पाके कृमिकृज्ज्वरनाशनः ४९
मङ्गल्यको मसूरः स्यान्मङ्गल्या च मसूरिका
मसूरो मधुरः पाके संग्राही शीतलो लघुः
कफपित्तास्रजिद्रूक्षो वातलो ज्वरनाशनः ५०
आढकी तुवरी चापि सा प्रोक्ता शणपुष्पिका ५१
आढकी तुवरा रूक्षा मधुरा शीतला लघुः
ग्राहिणी वातजननी वर्ण्या पित्तकफास्रजित् ५२
चणको हरिमन्थः स्यात्सकलप्रिय इत्यपि
चणकः शीतलो रूक्षः पित्तरक्तकफापहः
लघुः कषायो विष्टम्भी वातलो ज्वरनाशनः ५३
स चाङ्गारेण सम्भृष्टस्तैलभृष्टश्च तद्गुणः
आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्त्तितः ५४
शुष्कभृष्टोऽतिरूक्षश्च वातकुष्ठप्रकोपणः
स्विन्नः पित्तकफौ हन्यात् सूपः क्षोभकरो मतः ५५
आर्द्रोऽतिकोमलो रुच्यः पित्तशुक्रहरो हिमः
कषायो वातलो ग्राही कफपित्तहरो लघुः ५६
कलायो वर्त्तुलः प्रोक्तः सतीनश्च हरेणुकः

कलायो मधुरः स्वादुः पाके रूक्षश्च शीतलः ५७
त्रिपुटः खण्डिकोऽपि स्यात्कथ्यन्ते तद्गुणा अथ
त्रिपुटो मधुरस्तिक्तस्तुवरो रूक्षणो भृशम् ५८
कफपित्तहरो रुच्यो ग्राहकः शीतलस्तथा
किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपनः ५९
कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथ ६०
कुलत्थः कटुकः पाके कषायः पित्तरक्तकृत्
लघुर्विदाही वीर्योष्णः श्वासकासकफानिलान् ६१
हन्ति हिक्काऽश्मरीशुक्रदाहानाहान् सपीनसान्
स्वेदसंग्राहको मेदोज्वरकृमिहरः सरः ६२
तिलः कृष्णः सितो रक्तः स वन्योऽल्पतिलःस्मृतः
तिलो रसे कटुस्तिक्तो मधुरस्तुवरो गुरुः ६३
विपाके कटुकः स्वादुः स्निग्धोष्णः कफपित्तनुत्
बल्यः केश्यो हिमस्पर्शस्त्वच्यः स्तन्यो व्रणे हितः ६४
दन्त्योऽल्पमूत्रकृद् ग्राही वातघ्नोऽग्निमतिप्रदः
कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः सितः
अन्ये हीनतराः प्रोक्तास्तज्ज्ञै रक्तादयस्तिलाः ६५
अतसी नीलपुष्पी च पार्वती स्यादुमा क्षुमा ६६
अतसी मधुरा तिक्ता स्निग्धा पाके कटुर्गुरुः
उष्णा दृक्छुक्रवातघ्नी कफपित्तविनाशिनी ६७
तुवरी ग्राहिणी प्रोक्ता लघ्वी कफविषास्रजित्
तीक्ष्णोष्णा वह्निदा कण्डूकुष्ठकोष्ठकृमिप्रणुत् ६८
सर्षपः कटुकः स्नेहस्तुन्तुभश्च कदम्बकः
गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते ६९
सर्षपस्तु रसे पाके कटुः स्निग्धः सतिक्तकः
तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्धनः ७०
रक्षोहरो जयेत्कण्डूं कुष्ठकोष्ठकृमिग्रहान्
यथा रक्तस्तथा गौरः किन्तु गौरो वरो मतः ७१
राजीतु राजिका तीक्ष्णगन्धा क्षुज्ञनिकाऽसुरी
क्षवः क्षुताभिजनकः कृष्णीका कृष्णसर्षपः ७२

राजिका कफपित्तघ्नी तीक्ष्णोष्णा रक्तपित्तकृत्
किञ्चित् रूक्षाऽग्निदा कण्डूकुष्ठकोष्ठकृमीन्हरेत्
अतितीक्ष्णा विशेषेण तद्वत्कृष्णाऽपि राजिका ७३
क्षुद्रधान्यं कुधान्यं च तृणधान्यमिति स्मृतम्
क्षुद्रधान्यमनुष्णं स्यात्कषायं लघु लेखनम् ७४
मधुरं कटुकं पाके रूक्षं च क्लेदशोषकम्
वातकृद् बद्धविट्कं च पित्तरक्तकफापहम् ७५
स्त्रियां कङ्गुप्रियङ्गु द्वे कृष्णारक्ता सिता तथा
पीता चतुर्विधा कङ्गुस्तासां पीता वरा स्मृता ७६
कङ्गुस्तु भग्नसन्धानवातकृद् बृंहणी गुरुः
रूक्षा श्लेष्महराऽतीव वाजिनां गुणकृद् भृशम् ७७
चीनाकः काककङ्गुश्च सुश्लक्ष्णः श्लक्ष्णकः स्मृतः
चीनाकः कङ्गुभेदोऽस्ति स ज्ञेयः कङ्गुवद् गुणैः ७८
श्यामाकः श्यामकः श्यामास्त्रिबीजः स्यादविप्रियः
सुकुमारो राजधान्यं तृणबीजोत्तमश्च सः
श्यामाकः शोषणो रूक्षो वातलः कफपित्तहृत् ७९
कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः
कोद्रवो वातलो ग्राही हिमः पित्तकफापहः
उद्दालस्तु भवेदुष्णो ग्राही वातकरो भृशम् ८०
चारुकः शरबीजः स्यात्कथ्यन्ते तद्गुणा अथ
चारुको मधुरो रूक्षो रक्तपित्तकफापहः
शीतलो लघुवृष्यश्च कषायो वातकोपनः ८१
यवा वंशभवा रूक्षाः कषायाः कटुपाकिनः
बद्धमूत्राः कफघ्नाश्च वातपित्तकराः सराः ८२
कुसुम्भबीजं वरटा सैव प्रोक्ता वरट्टिका ८३
वरटा मधुरा स्निग्धा रक्तपित्तकफापहा
कषाया शीतला गुर्वी स्यादवृष्याऽनिलापहा ८४
गवेधुका तु विद्वद्भिर्गवेधुः कथिता स्त्रियाम्
गवेधुः कटुका स्वाद्वी कार्श्यकृत्कफनाशिनी ८५
प्रसाधिका तु नीवारस्तृणान्नमिति च स्मृतम्

नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत् ८६
यावनालो हिमः स्वादुर्लोहितः श्लेष्मपित्तजित्
अवृष्यस्तुवरो रूक्षः क्लेदकृत्कथितो लघुः ८७
धान्यं सर्वं नवं स्वादु गुरु श्लेष्मकरं स्मृतम्
तत्तु वर्षोषितं पथ्यं यतो लघुतरं हि तत् ८८
वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति
न तु त्यजति वीर्यं स्वं क्रमान्मुञ्चत्यतः परम् ८९
एतेषु यवगोधूमतिलमाषा नवा हिताः
पुराणा विरसा रूक्षा न तथा गुणकारिणः ९०
इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे नवमो धान्यवर्गः समाप्तः ९

अथ शाकवर्गः

पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा
शाकं षड्विधमुद्दृष्टं गुरुं विद्याद्यथोत्तरम् १
प्रायः शाकानि सर्वाणि विष्टम्भीनि गुरूणि च
रूक्षाणि बहुवर्चांसि सृष्टविरामारुतानि च २
शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं वर्णं विनाशयति रक्तमथापि शुक्रम्
प्रज्ञाक्षयं च कुरुते पलितं च नूनं हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः३
शाकेषु सर्वेषु वसन्ति रोगास्ते हेतवो देहविनाशनाय
तस्माद् बुधः शाकविवर्जनं तु कुर्यात्तथाऽम्लेषु स एव दोषः ४
वास्तूकं वास्तुकं च स्यात्क्षारपत्रं च शाकराट्
तदेव तु बृहत्पत्रं रक्तं स्याद्गौडवास्तुकम् ५
प्रायशो यवमध्ये स्याद्यवशाकमतः स्मृतम्
वास्तूकद्वितयं स्वादु क्षारं पाके कटूदितम् ६
दीपनं पाचनं रुच्यं लघु शुक्रबलप्रदम्
सरं प्लीहास्रपित्तार्शः कृमिदोषत्रयापहम् ७
पोतक्युपोदिका सा तु मालवाऽमृतवल्लरी
पोतकी शीतला स्निग्धा श्लेष्मला वातपित्तनुत् ८
अकण्ठ्या पिच्छिला निद्राशुक्रदा रक्त पित्तजित्

बलदा रुचिकृत्पथ्या बृंहणी तृप्तिकारिणी ९
मारिषो वाष्पको मार्ष श्वेतो रक्तश्च संस्मृतः
मारिषो मधुरः शीतो विष्टम्भी पित्तनुद् गुरुः १०
वातश्लेष्मकरो रक्तपित्तनुद् विषमाग्निजित्
रक्तमार्षो गुरुर्नाति सक्षारो मधुरः सरः
श्लेष्मलः कटुकः पाके स्वल्पदोष उदीरितः ११
तण्डुलीयो मेघनादः काण्डेरस्तण्डुलेरकः
भण्डीरस्तण्डुलीबीजो विषघ्नश्चाल्पमारिषः १२
तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित्
सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः १३
पानीयतण्डुलीयं तु कञ्चटं समुदाहृतम्
कञ्चटं तिक्तकं रक्तपित्तानिलहरं लघु १४
पलक्या वास्तुकाकारा छुरिका चीरितच्छदा १५
पलक्या वातला शीता श्मेष्मला भेदिनी गुरुः
विष्टम्भिनी मदश्वासपित्तरक्तकफापहा १६
नाडिकं कालशाकं च श्राद्धशाकं च कालकम्
कालशाकं सरं रुच्यं वातकृत्कफशोथहृत्
बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम् १७
पट्टशाकस्तु नाडीको नाडीशाकश्च स स्मृतः
नाडीको रक्तपित्तघ्नो विष्टम्भो वातकोपनः १८
कलम्बी शतपर्वी च कथ्यन्ते तद्गुणा अथ
कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी १९
लोणालोणी च कथिता वृहल्लोणी तु घोटिका
लोणी रूक्षा स्मृता गुर्वी वातश्लेष्महरी पटुः २०
अर्शोघ्नी दीपनी चाम्ला मन्दाग्निविषनाशिनी
घोटिकाऽम्ला सराचोष्णा वातकृत्कफपित्तहृत् २१
वाग्दोषव्रणगुल्मघ्नी श्वासकासप्रमेहनुत्
शोथे लोचनरोगे च हिता तज्ज्ञैरुदाहृता २२
चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाऽम्ललोणिका
अश्मन्तकस्तु शफरी कुशली चाम्लपत्रकः २३

चाङ्गेरी दीपनी रुच्या रुक्षोष्णा कफवातनुत्
पित्तलाऽम्ला ग्रहरायर्शः कुष्ठातीसारनाशिनी २४
चुक्रिका स्यात्तु पत्राम्ला रोचनी शतवेधिनी २५
चुक्रा त्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत्
रुच्या लघुतरा पाके वृन्ताकेनातिरोचनी २६
चिञ्चा चञ्चुश्चञ्चुकी च दीर्घपत्रा सतिक्तका
चञ्चुः शीता सरा रुच्या स्वाद्वी दोषत्रयापहा
धातुपुष्टिकरी बल्या मेध्या पिच्छिलका स्मृता २७
ब्राह्मी शङ्खधराऽचारी मत्स्याक्षी हिलमोचिका
शोथं कुष्ठं कफं पित्तं हरते हिलमोचिका २८
शितिवारः शितिवरः स्वस्तिकः सुनिषरराकः
श्रीवारकः सूचिपत्रः पर्णकः कुक्कुटः शिखी २९
चाङ्गेरीसदृशः पत्रैश्चतुर्दल इतीरितः
शाको जलान्विते देशे चतुष्पत्रीति चोच्यते ३०
सुनिषरराो हिमो ग्राही मेदोदोषत्रयापहः ३१
अविदाही लघुः स्वादुः कषायो रूक्षदीपनः
वृष्यो रुच्योज्वरश्वासमेहकुष्ठभ्रम प्रणुत् ३२
पाचनं लघु रुच्योष्णं पत्रं मूलकजं नवम्
स्नेहसिद्धं त्रिदोषघ्नमसिद्धं कफपित्तकृत् ३३
द्रोणपुष्पीदलं स्वादु रूक्षं गुरु च पित्तकृत्
भेदनं कामलाशोथमेहज्वरहरं कटु ३४
यवानीशाकमाग्नेयं रुच्यं वातकफप्रणुत्
उष्णं कटु च तिक्तं च पित्तलं लघु शूलहृत् ३५
दद्रुघ्नपत्रं दोषघ्नमम्लं वातकफापहम्
कराडूकासक्रिमिश्वासदद्रुकुष्ठप्रणुल्लघु ३६
सेहराडस्य दलं तीक्ष्णं दीपनं रेचनं हरेत्
आध्मानाष्ठीलिकागुल्मशूलशोथोदराणि च ३७
पर्पटो हन्ति पित्तास्रज्वरतृष्णाकफभ्रमान्
संग्राही शीतलस्तिक्तो दाहनुद्वातलो लघुः ३८
गोजिह्वा कुष्ठमेहास्रकृच्छ्रज्वरहरी लघुः ३९

पटोलपत्रं पित्तघ्नं दीपनं पाचनं लघु
स्निग्धं वृष्यं तथोष्णं च ज्वरकासक्रिमिप्रणुत् ४०
गुडूचीपत्रमाग्नेयं सर्वज्वरहरं लघु
कषायं कटुतित्तं च स्वादुपाकं रसायनम् ४१
बल्यमुष्णं च संग्राहि हन्याद्दोषत्रयं तृषाम्
दाहप्रमेहवातासृक्कामलाकुष्ठपाण्डुताः ४२
कासमर्दोऽरिमर्दश्च कासारिः कर्कशस्तथा
कासमर्ददलं रुच्यं वृष्यं कासविषास्रनुत् ४३
मधुरं कफवातघ्नं पाचनं कण्ठशोधनम्
विशेषतः कासहरं पित्तघ्नं ग्राहकं लघु ४४
रुच्यं चणकशाकं स्याद् दुर्जरं कफवातकृत्
अम्लं विष्टम्भजनकं पित्तनुद्दन्तशोथहृत् ४५
कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित् ४६
कटुकं सार्षपं शाकं बहुमूत्रमलं गुरु
अम्लपाकं विदाहि स्यादुष्णं रूक्षं त्रिदोषकृत्
सक्षारलवणं तीक्ष्णं स्वादु शाकेषु निन्दितम् ४७
अगस्तिकुसुमं शीतं चातुर्थिकनिवारणम्
नक्तान्ध्यनाशनं तिक्तं कषायं कटुपाकि च
पीनसश्लेष्मपित्तघ्नं वातघ्नं मुनिभिर्मतम् ४८
कदल्याः कुसुमं स्निग्धं मधुरं तुवरं गुरु
वातपित्तहरं शीतं रक्तपित्तक्षयप्रणुत् ४९
शिग्रोः पुष्पं तु कटुकं तीक्ष्णोष्णं स्नायुशोथनुत्
कृमिहृत्कफवातघ्नं विद्रधिप्लीहगुल्मजित्
मधु शिग्रोस्त्वक्षिहितं रक्तपित्तप्रसादनम् ५०
शाल्मलीपुष्पशाकं तु घृतसैन्धवसाधितम्
प्रदरं नाशयत्येव दुःसाध्यं च न संशयः ५१
रसे पाके च मधुरं कषायं शीतलं गुरु
कफपित्तास्रजिद् ग्राहि वातलं च प्रकीर्त्तितम् ५२
इति पुष्पशाकानि
अथ फलशाकानि

कूष्माडं स्यात्पुष्पफलं पीतपुष्पं बृहत्फलम् ५३
कूष्माण्डं बृंहणं वृष्यं गुरु पित्तास्रवातनुत्
बालं पित्तापहं शीतं मध्यमं कफकारकम् ५४
बृद्धंनातिहिमं स्वादु सक्षारं दीपनं लघु
बस्तिशुद्धिकरं चेतोरोगहृत्सर्वदोषजित् ५५
कूष्माण्डी तु भृशं लघ्वी कर्कारुरपि कीर्त्तिता
कर्कारुग्राहिणी शीता रक्तपित्तहरा गुरुः
पक्वा तिक्ताऽग्निजननी सक्षारा कफवातनुत् ५६
अलाबूः कथिता तुम्बी द्विधा दीर्घा च वर्तुला ५७
मिष्टतुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु
वृष्यं रुचिकरं प्रोक्तं धातु पुष्टिविवर्धनम् ५८
इक्ष्वाकुः कटुतुम्बी स्यात्सा तूम्बी च महाफला
कटुतुम्बी हिमा हृद्या पित्तकासविषापहा
तिक्ता कटुर्विपाके च वातपित्तज्वरान्तकृत् ५९
एर्वारुः कर्कटी प्रोक्ता कथ्यन्ते तद्गुणा अथ ६०
कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः
रुच्या पित्तहरा सामा पक्वा तृष्णाऽग्निपित्तकृत् ६१
चिचिण्डः श्वेतराजिः स्यात्सुदीर्घो गृहकूलकः
चिचिण्डो वातपित्तघ्नो बल्यः पथ्यो रुचिप्रदः
शोषणोऽतिहितः किञ्चिद् गुणैर्न्यूनः पटोलतः ६२
कारवेल्लं कटिल्लं स्यात्कारवेल्ली ततोलघुः
कारवेल्लं हिमं भेदि लघुतिक्तमवातलम् ६३
ज्वरपित्तकफास्रघ्नं पाण्डुमेहकृमीन् हरेत्
तद्गुणा कारवेल्ली स्याद्विशेषाद्दीपनी लघुः ६४
महाकोशातकी प्रोक्ता हस्तिघोषा महाफला ६५
धामार्गवो घोषकश्च हस्तिपर्णश्च स स्मृतः
महाकोशातकीस्निग्धा रक्तपित्तानिलापहा ६६
धामार्गवः पीतपुष्पो जालिनी कृतवेधना
राजकोशातकी चेति तथोक्ता राजिमत्फला ६७
राजकोशातकी शीता मधुरा कफवातकृत्

पितघ्नी दीपनी श्वासज्वरकासकृमिप्रणुत् ६८
पटोलः कुलकस्तिक्तः पाराडुकः कर्कशच्छदः
राजीफलः पाराडुफलो राजेयश्चामृतफलः ६९
बीजगर्भः प्रतीकश्च कुष्ठहा कासभञ्जनः
पटोलं पाचनं हृद्यं वृष्यं लघ्वग्निदीपनम्
स्निग्धोष्णं हन्ति कासास्रज्वरदोषत्रयक्रिमीन् ७०
पटोलस्य भवेन्मूलं विरेचनकरं सुखात् ७१
नालं श्लेष्महरं पत्रं पित्तहारी फलं पुनः
दोषत्रयहरं प्रोक्तं तद्वतिक्ता पटोलिका ७२
बिम्बी रक्तफला तुराडी तुराडीकेरी च बिम्बिका
ओष्ठोपमफला प्रोक्ता पीलुपर्णी च कथ्यते ७३
बिम्बीफलं स्वादु शीतं गुरु पित्तास्रवातजित्
स्तभनं लेखनं रुच्यं विबन्धाध्मानकारकम् ७४
शिम्बिः शिम्बी पुस्तशिम्बी तथा पुस्तकशिम्बिका
शिम्बीद्वयं च मधुरं रसे पाके हिमं गुरु
बल्यं दाहकरं प्रोक्तं श्लेष्मलं वातपित्तजित् ७५
कोलशिम्बिः कृष्णफला तथा पर्यङ्कपट्टिका ७६
कोलशिम्बिः समीरघ्नी गुर्व्युष्णा कफपित्तकृत्
शुक्राग्निसादकृत् वृष्या रुचिकृद् बद्धविड् गुरुः ७७
शोभाञ्जनफलं स्वादु कषायं कफपित्तनुत्
शूलकुष्ठक्षयश्वासगुल्महृद् दीपनं परम् ७८
वृन्ताकं स्त्री तु वार्त्ताकुर्भराटाकी भारिटकाऽपि च
वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकमपित्तलम्
ज्वरवातबलासघ्नं दीपनं शुक्रलं लघु ७९
तद्बालं कफपित्तघ्नं वृद्धं पित्तकरं गुरु ८०
वृन्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितम्
कफमेदोऽनिलामघ्नमत्यर्थं लघु दीपनम् ८१
तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम्
अपरं श्वेतवृन्ताकं कुक्कुटाराडसमं भवेत्
तदर्शःसु विशेषेण हितं हीनं च पूर्वतः ८२

डिरिडशो रोमशफलो मुनिनिर्मित इत्यपि ८३
डिरिडशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः
सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः ८४
पिराडारं शीतलं बल्यं पित्तघ्नंरुचिकारकम्
पाके लघु विशेषेण विषशान्तिकरं स्मृतम् ८५
कर्कोटकी पीतपुष्पा महाजालीति चोच्यते
कर्कोटी मलहृत्कुष्ठहृल्लासारुचिनाशिनी
श्वासकासज्वरान्हन्ति कटुपाका च दीपनी ८६
डोडिका विषमुष्टिश्च डोडित्यपि सुमुष्टिका ८७
डोडिका पुष्टिदा वृष्या रुच्या वह्निप्रदा लघुः
हन्ति पित्तकफार्शांसि कृमिगुल्मविषामयान् ८८
कराटकारीफलं तिक्तं कटुकं दीपनं लघु
रूक्षोष्णं श्वासकासघ्नं ज्वरानिलकफापहम् ८९
इति फल शाकानि
तीक्ष्णोष्णं सार्षपं नालं वातश्लेष्मव्रणापहम्
कराडूकृमिहरं दद्रुकुष्ठघ्नं रुचिकारकम् ९०
इति नालशाकानि
अथ कन्दशाकानि
सूरणः कन्द ओलश्च कन्दलोऽशोघ्न इत्यपि
सूरणो दीपनो रूक्षः कषायः कराडुकृत् कटुः ९१
विष्टम्भी विशदो रुच्यः कफार्शः कृन्तनो लघुः
विशेषादर्शसे पथ्यः प्लीहगुल्मविनाशनः ९२
सर्वेषां कन्दशाकानां सूरणः श्रेष्ठ उच्यते
दद्रूणां कुष्ठिनां रक्तपित्तिनां न हितो हि सः
सन्धानयोगं सम्प्राप्तः सूरणो गुणवत्तरः ९३
आरूकं वीरसेनञ्च वीरं वीरारुकं तथा
आरुकमप्यालुकं तत्कथितं वीरसेनकम् ९४
काष्ठालुकशङ्खालुकहस्त्यालुकानि कथ्यन्ते
पिराडालुकमध्वालुक रक्तालुकानि चोक्तानि ९५
आलुकं शीतलं सर्वं विष्टम्भि मधुरं गुरु ९६

सृष्टमूत्रमलं रूक्षं दुर्जरं रक्तपित्तनुत्
कफानिलकरं बल्यं वृष्यं स्वल्पाग्निवर्द्धनम् ९७
रक्तालुभेदो या दीर्घा तन्वी च प्रथिताऽलुकी
आलुकी बलकृत्स्निग्धा गुर्वी हृत्कफनाशिनी
विष्टम्भकारिणी तैले तलिताऽतिरुचिप्रदा ९८
मूलकं द्विविधं प्रोक्तं तत्रैकं लघुमूलकम्
शालामर्कटकं विस्रं शालेयं मरुसम्भवम् ९९
चाणक्यमूलकं तीक्ष्णं तथा मूलकपोतिका
नेपालमूलकं चान्यत्तद्भवेद्गजदन्तवत् १००
लघुमूलं कटूष्णं स्याद्रुच्यं लघु च पाचनम्
दोषत्रयहरं स्वर्यं ज्वरश्वासविनाशनम् १०१
नासिकाकण्ठरोगघ्नं नयनामयनाशनम् १०२
महत्तदेव रूक्षोष्णं गुरु दोषत्रयप्रदस्
स्नेहसिद्धं तदेव स्याद् दोषत्रयविनाशनम् १०३
गृञ्जनं गाजरं प्रोक्तं तथा नारङ्गवर्णकम्
गाजरं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु
संग्राहि रक्तपित्तार्शोग्रहणीकफवातजित् १०४
शीतलः कदलीकन्दो बल्यः केश्योऽम्लपित्तजित्
वह्निकृद्दाहहारी च मधुरो रुचिकारकः १०५
मानकः स्यान्महापत्रः कथ्यन्ते तद्गुणा अथ
मानकः शोथहृच्छीतो रक्तपित्तहरो लघुः १०६
वाराही पित्तला बल्या कट्वी तिक्ता रसायनी
आयुःशुक्राग्निकृन्मेहकफकुष्ठानिलापहा १०७
गजकर्णा तु तिक्तोष्णा तथा वातकफाञ्जयेत्
शीतज्वरहरी स्वादुः पाके तस्यास्तु कन्दकः १०८
पाण्डुशोथकृमिप्लीहगुल्मानाहोदरापहः
ग्रहण्यर्शोविकारघ्नी वनसूरणकन्दवत् १०९
केमुकं कटुकं पाके तिक्तं ग्राहि हिमं लघु ११०
दीपनं पाचनं हृद्यं कफपित्तज्वरापहम्
कुष्ठकासप्रमेहास्रनाशनं वातलं कटु १११

कसेरु द्विविधं तत्तु महद्राजकसेरुकम्
मुस्ताकृति लघु स्याद्यत्तच्चिचोढमिति स्मृतम् ११२
कसेरुकद्वयं शीतं मधुरं तुवरं गुरु
पित्तशोणितदाहघ्नं नयनामयनाशनम्
ग्राहि शुक्रानिलश्लेष्मारुचिस्तन्यकरं स्मृतम् ११३
पद्मादिकन्दः शालूकं करहाटश्च कथ्यते ११४
मृणालमूलं भिस्साण्डं जलालूकञ्च कथ्यते
शालूकं शीतलं वृष्यं पित्तदाहास्रनुद् गुरु ११५
दुर्जरं स्वादुपाकश्च स्तन्यानिलकफप्रदम्
संग्राहि मधुरं रूक्षं भिस्साण्डमपि तद्गुणम् ११६
बालं ह्यनार्त्तवं जीर्णं व्याधितं कृमिभक्षितम्
कन्दं विवर्जयेत्सर्वं यद्वाऽग्न्यादिविदूषितम्
अतिजीर्णमकालोत्थं रूक्षसिद्धमदेशजम् ११७
कर्कशं कोमलं चातिशीतव्यालादिदूषितम्
संशुष्कं सकलं शाकं नाश्नीयान्मूलकं विना ११८
इति कन्द शाकानि
उक्तं संस्वेदजं शाकं भूमिच्छत्रं शिलीन्ध्रकम्
क्षितिगोमयकाष्ठेषु वृक्षादिषु तदुद्भवेत् ११९
सर्वे संस्वेदजाः शीता दोषलाः पिच्छिलाश्च ते
गुरवश्छर्द्यतीसारज्वरश्लेष्मामयप्रदाः १२०
श्वेताशुचिस्थलीकाष्ठवंशगोमयसम्भवाः
नातिदोषकरास्ते स्युः शेषास्तेभ्यो विगर्हिताः १२१

इति श्रीलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिस्त्रप्रकरणे
दशमः शाकवर्गं समाप्तः १०

## अथैकादशो मांसवर्गः

मासं तु पिशितं क्रव्यमामिषं पललं पलम्
मांसं वातहरं सर्वं बृंहणं बलपुष्टिकृत्
प्रीणनं गुरु हृद्यञ्च मधुरं रसपाकयोः १
मांसवर्गो द्विधा ज्ञेयो जाङ्गलानूपभेदतः २

मांसवर्गेऽत्र जङ्घाला बिलस्थाश्च गुहाशयाः
तथा पर्णमृगा ज्ञेया विष्किराः प्रतुदस्तथा ३
प्रसहा अथ च ग्राम्या अष्टौ जाङ्गलजातयः
जाङ्गला मधुरा रूक्षास्तुवरा लघवस्तथा ४
बल्यास्ते बृंहणं वृष्या दीपना दोषहारिणः
मूकतां मिन्मिनत्वं च गद्गदत्वार्दिते तथा ५
बाधिर्य्यमरुचिच्छर्दिप्रमेहमुखजान् गदान्
श्लीपदं गलगण्डञ्च नाशयत्यनिलामयान् ६
कूलेचराः प्लवाश्चापि कोशस्थाः पादिनस्तथा
मत्स्या एते समाख्याताः पञ्चधाऽनूपजातयः ७
अनूपा मधुराः स्निग्धा गुरवो वह्निसादनाः
श्लेष्मलाः पिच्छिलाश्चापि मांसपुष्टिप्रदा भृशम्
तथाऽभिष्यन्दिनस्ते हि प्रायः पथ्यतमाः स्मृताः ८
हरिणैणकुरङ्गर्ष्यपृषतन्यङ्कुशम्बराः ९
राजीवोऽपि च मुण्डी चेत्याद्या जङ्घालसंज्ञकाः
हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्त्तितः १०
कुरङ्गईषत्ताम्रः स्यादेणतुल्याकृतिर्महान्
ऋष्यो नीलाङ्गको लोके स रोझ इति कीर्त्तितः ११
पृषतश्चन्द्रबिन्दुः स्याद्धरिणात्किञ्चिदल्पकः
न्यङ्कुर्बहुविषाणोऽथ शम्बरो गवयो महान् १२
राजीवस्तु मृगो ज्ञेयो राजिभिः परितोवृतः
यो मृगः शृङ्गहीनः स्यात्स मुण्डीति निगद्यते १३
जङ्घालाः प्रायशः सर्वे पित्तश्लेष्महराः स्मृतः
किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः १४
गोधाशशभुजङ्गाखुशल्लक्याद्या बिलेशयाः
बिलेशया वातहरा मधुरा रसपाकयोः
बृंहणा बद्धविरामूत्रा वीर्योष्णाश्च प्रकीर्त्तिताः १५
सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिनस्तथा
बभ्रुजम्बूकमार्जारा इत्याद्याः स्युर्गुहाशयाः १६
गुहाशया वातहरा गुरूष्णा मधुराश्च ते

स्निग्धा बल्या हिता नित्यं नेत्र गुद विकारिणाम् १७
अथ पर्णमृगाः वृक्षों पर चढने वाले प्राणी तेषां गणनां
वनौका वृक्षमार्जारो वृक्षमर्कटिकाऽदयः
एते पर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः १८
स्मृताः पर्ण मृगा वृष्याश्चक्षुष्या शोषिणे हिताः
श्वासार्शः कास शमनाः सृष्ट मूत्र पुरीषकाः १९
वर्त्तका लाववर्त्तीरकपिञ्जलकतित्तिराः
कुलिङ्गकुक्कुटाद्याश्च विष्किरा समुदाहृताः २०
विकीर्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः
कपिञ्जल इति प्राज्ञैः कथितो गौरतित्तिरिः २१
विष्किरा मधुराः शीताः कषायाः कटुपाकिनः
बल्या वृष्यास्त्रिदोषघ्नाः पथ्यास्ते लघवः स्मृताः २२
कालकण्ठकहारीतकपोतशतपत्रकाः
पारावतः खञ्जरीटः पिकाद्याः प्रतुदाः स्मृताः
प्रतुद्य भक्षयन्त्येते तुण्डेन प्रतुदास्ततः २३
प्रतुदा मधुराः पित्तकफघ्नास्तुवरा हिमाः
लघवो बद्धवर्चस्काः किञ्चिद्वातकराःस्मृताः २४
काको गृध्र उलूकश्च चिल्लश्च शशघातकः
चाषो भासश्च कुरर इत्याद्याः प्रसहाः स्मृताः २५
प्रसहाः कीर्त्तिता एते प्रसह्याच्छिद्य भक्षणात् २६
प्रसहाः खलु वीर्योष्णास्तन्मांसं भक्षयन्ति ये
ते शोषभस्मकोन्मादशुक्रक्षीणा भवन्ति हि २७
छागमेषवृषाश्वाद्या ग्राम्याः प्रोक्ता महर्षिभिः
ग्राम्या वातहराः सर्वे दीपनाः कफपित्तलाः
मधुरा रसपाकाभ्यां बृंहणा बलवर्द्धनाः २८
लुलायगण्डवाराहचमरीवारणादयः
एते कूलेचराः प्रोक्ता यतः कूले चरन्त्यपाम् २९
कूलेचरा मरुत्पित्तहरा वृष्या बलावहाः
मधुराः शीतलाः स्निग्धामूत्रलाः श्लेष्म वर्धना ३०
हंससारसकारण्डबकक्रौञ्चशरारिकाः ३१

नन्दीमुखी सकादम्बा बलाकाद्याः प्लवाः स्मृताः
प्लवन्ति सलिले यस्मादेते तस्मात्प्लवाः स्मृताः ३२
प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः
वात श्लेष्म प्रदाश्चापि बल शुक्र कराः सराः ३३
शङ्खः शङ्खनखश्चापिशुक्तिशम्बूककर्कटाः
जीवा एवंविधाश्चान्येकोशस्थाः परिकीर्त्तिताः ३४
कोशस्था मधुराःस्निग्धा वातपित्तहरा हिमाः
बृंहणा बहुवर्चस्का वृष्याश्च बलवर्द्धनाः ३५
कुम्भीरकूर्मनक्राश्च गोधामकरशङ्कव
घण्टिकः शिशुमारश्चेत्यादयः पादिनः स्मृताः ३६
पादनोऽपि च ये तेतु कोशस्थानां गुणैः समाः ३७
मत्स्यो मीनो विसारश्च झषो वैसारिणोऽण्डजः
शकुली पृथुरोमा च स सुदर्शन इत्यपि ३८
रोहिताद्यास्तु ये जीवास्ते मत्स्याः परिकीर्त्तिताः
मत्स्याः स्निग्धोष्णमधुरा गुरवः कफपित्तलाः ३९
वातघ्ना बृंहणा वृष्या रोचका बलवर्द्धनाः
मद्यव्यवायसक्तानां दीप्ताग्नीनाञ्च पूजिताः ४०
हरिणः शीतलो बद्धविण्मूत्रो दीपनो लघुः
रसे पाके च मधुरः सुगन्धिः सन्निपातहा ४१
एणः कषायो मधुरः पित्तासृक्कफवातहृत्
संग्राही रोचनो बल्यो ज्वरप्रशमनः स्मृतः ४२
कुरङ्गो बृंहणो बल्यः शीतलः पित्तहृद् गुरुः
मधुरो वातहृद् ग्राही किञ्चित्कफकरः स्मृतः ४३
ऋष्यो नीलाण्डकश्चापि गवयो रोझ इत्यपि
गवयो मधुरो बल्यः स्निग्धोष्णः कफपित्तलः ४४
पृषतस्तु भवेत्स्वादुर्ग्राहकः शीतलो लघुः
दीपनो रोचनः श्वासज्वरदोषत्रयास्रजित् ४५
न्यङ्कुः स्वादुर्लघुर्बल्यो वृष्यो दोषत्रयापहः ४६
साबरं पललं स्निग्धं शीतलं गुरु च स्मृतम्
रसे पाके च मधुरं कफदं रक्तपित्तहृत् ४७

राजीवस्तु गुणैर्ज्ञेयः पृषतेन समो जनैः ४८
मुण्डी तु ज्वरकासास्रक्षयश्वासापहो हिमः ४९
लम्बकर्णः शशः शूली लोमकर्णो बिलेशयः
शशः शीतो लघुर्ग्राही रूक्षः स्वादुः सदा हितः
वह्निकृत्कफपित्तघ्नो वातसाधारणः स्मृतः
ज्वरातीसारशोषास्रश्वासामयहरश्च सः ५०
सेधा तु शल्यकः श्वावित्कथ्यन्ते तद्गुणा अथ
शल्यकः श्वासकासास्रशोषदोषत्रयापहः ५१
पक्षी खगो विहङ्गश्च विहगश्च विहङ्गमः
शकुनिर्विः पतत्री च विष्किरो विकिरोऽण्डजः
धान्याङ्कुरचरा येऽत्र तेषां मांसं लघूत्तमम्
आनूपं बलकृन्मांसं स्निग्धं गुरुतरं स्मृतम् ५२
वर्तीको वर्त्तकश्चित्रस्ततोऽन्या वर्त्तका स्मृता
वर्त्तकोऽग्निकरः शीतो ज्वरदोषत्रयापहः
सुरुच्यः शुक्रदो बल्यो वर्त्तकाऽल्पगुणा ततः ५३
लावा विष्करवर्गेषु ते चतुर्धा मता बुधैः ५४
पांशुलोगौरकोऽन्यस्तु पौण्ड्रको दर्भरस्तथा
लावा वह्निकराः स्निग्धा  गरघ्ना ग्राहका हिताः ५५
पांशुलः श्लेष्मलस्तेषु वीर्योऽष्णोनिलनाशनः
गौरोलघुतरो रूक्षो वह्निकारी त्रिदोषजित् ५६
पौण्ड्रकः पित्तकृत्किञ्चिल्लघुर्वातकफापहः
दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः ५७
वर्त्तीको वर्त्तिचटको वार्त्तीकश्चैव स स्मृतः
वर्त्तीको मधुरः शीतो रूक्षश्च कफपित्तनुत् ५८
तित्तिरिः कृष्णवर्णः स्यात्स तु गौरः कपिञ्जलः
तित्तिरिर्बलदो ग्राही हिक्कादोषत्रयापहः
श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणैः ५९
चटकः कलविङ्कः स्यात्कुलिङ्गः कालकण्ठकः ६०
कुलिङ्गः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः
सन्निपातहरो वेश्मचटकश्चातिशुक्रलः ६१

कुक्कुटः कृकवाकुः स्यात्कालज्ञश्चरणायुधः
ताम्रचूडस्तथा दक्षो यामनादी शिखरिडकः ६२
कुक्कुटो बृंहणः स्निग्धो वीर्योष्णोऽनिलहृद् गुरुः
चक्षुष्यः शुक्रकफकृद् बल्यो वृष्यः कषायकः ६३
आररायकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः
वातपित्तक्षयवमिविषमज्वरनाशनः ६४
हारीतो रक्तपीतः स्याद्धरितोऽपि स कथ्यते
हारीतो रूक्ष उष्णश्च रक्तपित्तकफापहः
स्वेदस्वरकरः प्रोक्तः ईषद्वातकरश्च सः ६५
पारडुस्तु द्विविधो ज्ञेयश्चित्रपक्षः कलध्वनिः ६६
द्वितीयो धवलः प्रोक्तः स कपोतः स्फुटध्वनिः
चित्रपक्षः कफहरो वातघ्नो ग्रहणीप्रणुत् ६७
धवलः पारडुरुद्दिष्टो रक्तपित्तहरो हिमः
रसे पाके च मधुरः संग्राही वातशान्तिकृत् ६८
मयूरश्चन्द्रकी केकी मेघरावो भुजङ्गभुक्
शिखी शिखावलो बर्ही शिखराडी नीलकराठकः ६९
शुक्लापाङ्गः कलापी च मेघनादानुलास्यपि
रसे पाके च मधुरः संग्राही वातशान्तिकृत् ७०
पारावतः कलरवः कपोतो रक्तलोचनः
पारावतो गुरुः स्निग्धो रक्तपित्तानिलापहः
संग्राही शीतलस्तज्ज्ञैः कथितो वीर्यवर्द्धनः ७१
नातिस्निग्धानि वृष्याणि स्वादुपाकरसानि च
वातघ्नान्यतिशुक्राणि गुरूरायराडानि पक्षिणाम् ७२
छागलो बर्करश्छागो बस्तोऽजश्छेलकः स्तुभः ७३
अजा छागी स्तुभा चापि छेलिका च गलस्तनी
छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषनुत् ७४
नातिशीतमदाहि स्यात्स्वादु पीनसनाशनम्
परं बलकरं रुच्यं बृहणं वीर्यवर्द्धनम् ७५
अजायास्त्वप्रसूताया मांसं पीनसनाशनम्
शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् ७६

अजासुतस्य बालस्य मांसं लघुतरं स्मृतम्
हृद्यं ज्वरहरं श्रेष्ठं सुखदं बलदं भृशम् ७७
मासंनिष्कासिताण्डस्य छागस्य कफकृद् गुरु
स्रोतःशुद्धिकरं बल्यं मांसदं वातपित्तनुत् ७८
वृद्धस्य वातलं रूक्षं तथा व्याधिमृतस्य च
ऊर्ध्वजत्रुविकारघ्नं छागमुण्डं रुचिप्रदम् ७९
अथ मेषः मिढा तस्य नामान्यण्डविहीनस्य तस्य च
मेढ्रो मेढो हुडो मेष उरणोऽप्येडकोऽपि च
अविर्वृष्णिस्तथोर्णायुः कथ्यन्ते तद्गुणा अथ ८०
मेषस्य मांसं पुष्टौ स्यात्पित्तश्लेष्मकरं गुरु
तस्यैवाण्डविहीनस्य मांसं किञ्चिल्लघु स्मृतम् ८१
अथैडकः दिुम्बा मेढा तस्य नामानि तद्भेदस्य च
एडकः पृथुशृङ्गः स्यान्मेदः पुच्छस्तु दुम्बकः
एडकस्य पलं ज्ञेयं मेषामिषसमं गुणैः ८२
मेदः पुच्छोद्भवं मांसं हृद्यं वृष्यं श्रमापहम्
पित्तश्लेष्मकरं किञ्चिद्वातव्याधिविनाशानम् ८३
बलीवर्दस्तु वृषभः ऋषभश्च तथा वृषः
अनड्वान्सौरभेयोऽपि गौरुक्षा भद्र इत्यपि ८४
सुरभिः सौरभेयी च माहेयी गौरुदाहृता
गोमांसं सुगुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम्
बृंहणं वातहृत् बल्यमपथ्यं पीनसप्रणुत् ८५
घोटकेऽप्यश्वतुरगास्तुरङ्गमाश्च तुरङ्गाः
बाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ८६
अश्वमांसन्तु तुवरं वह्निकृत्कफपित्तलम्
वातहृद् बृहणं बल्यं चक्षुष्यं मधुरं लघु ८७
महिषो घोटकारिः स्यात्कासरश्च रजस्वलः ८८
पीनस्कन्धः कृष्णकायो लुलायो यमवाहनः
महिषस्यामिषं स्वादु स्निग्धोष्णं वातनाशनम् ८९
निद्राशुक्रप्रदं बल्यं तनुदाढ्र्यकरं गुरु
वृष्यञ्च सृष्टविण्मूत्रं वातपित्तास्रनाशनम् ९०

मण्डूकः प्लवगो भेको वर्षाभूर्दर्दुरो हरिः
मण्डूकः श्लेष्मलो नातिपित्तलो बलकारकः ९१
कच्छपो गूढपात्कूर्मः कमठो दृढपृष्ठकः
कच्छपो बलदो वातपित्तनुत्पुंस्त्वकारकः ९२
सद्योहतस्य मांसं स्याद्व्याधिघाति यथाऽमृतम्
वयस्यं बृंहणं सात्म्यमन्यथा तद् विवर्जयेत् ९३
स्वयं मृतस्य चाबल्यमतीसारकरं गुरु ९४
वृद्धानां दोषलं मांसं बालानां बलदं लघु ९५
सर्पदष्टस्य मांसञ्च शुष्कमांस त्रिदोषकृत्
त्रिदोषकृद् व्यालदष्टं शुष्कं शूलकरं परम् ९६
विषाम्बुरुङ्मृतस्यैतन्मृत्युदोषरुजाकरम्
क्लिन्नमुत्क्लेशजनकं कृशं वातप्रकोपणम्
तोयपूर्णं शिराराजं मृतमप्सु त्रिदोषकृत् ९७
विहङ्गेषु पुमाञ्छ्रेष्ठः स्त्री चतुष्पदजातिषु
परार्द्धं लघु पुंसां स्यात्स्त्रीणां पूर्वार्द्धमादिशेत्
देहमध्यं गुरुप्रायं सर्वेषां प्राणिनां स्मृतम् ९८
पक्षक्षेपाद्विहङ्गानां तदेव लघु कथ्यते
गुरूण्यण्डानि सर्वेषां गुर्वी ग्रीवा च पक्षिणाम् ९९
उरः स्कन्धोदरं कुक्षी पादौ पाणी कटी तथा
पृष्ठत्वग्यकृदन्त्राणि गुरूणीह यथोत्तरम् १००
लघुवातकरं मांसं खगानां धान्यचारिणाम्
मत्स्याशिनां पित्तकरं वातघ्नं गुरु कीर्त्तितम् १०१
फलाशिनां श्लेष्मकरं लघु रूक्षमुदीरितम्
बृंहणं गुरु वातघ्नं तेषामेव पलाशिनाम् १०२
तुल्यजातिष्वल्पदेहा महादेहेषु पूजिताः
अल्पदेहेषु शस्यन्ते तथैव स्थूलदेहिनाः १०३
रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः
कृष्णपुच्छो झषः श्रेष्ठो रोहितः कथितो बुधैः १०४
रोहितः सर्वमत्स्यानां वरो वृष्योऽदितार्त्तिजित्
कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत्

ऊर्ध्वजत्रुगतान् रोगान् हन्याद्रोहितमुरण्डकम् १०५
शिलीन्ध्रः श्लेष्मलो बल्यो विपाके मधुरो गुरुः
वातपित्तहरो हृद्यः आमवातकरश्च सः १०६
भाकुरो मधुरः शीतो वृष्यः श्लेष्मकरो गुरुः
विष्टम्भजनकश्चापि रक्तपित्तहरः स्मृतः १०७
मोचिका वातहृद् बल्या बृंहणी मधुरा गुरुः
पित्तहृत्कफकृद्रुच्या वृष्या दीप्ताग्नये हिता १०८
पाठीनः श्लेष्मलो बल्यो निद्रालुः पिशिताशनः
दूषयेद्रुधिरं पित्तं कुष्ठरोगं करोति च १०९
शृङ्गी तु वातशमनी स्निग्धा श्लेष्मप्रकोपणी
रसे तिक्ता कषाया च लघ्वी रुच्या स्मृताबुधैः ११०
इल्लीसो मधुरः स्निग्धो रोचनो वह्निवर्द्धनः
पित्तहृत्कफकृत्किञ्चिल्लघुर्वृष्योऽनिलापहः १११
शष्कुली ग्राहिणी हृद्या मधुरा तुवरा स्मृता ११२
गर्गरः पित्तलः किञ्चिद्वातजित्कफकोपनः ११३
कविका मधुरा स्निग्धा कफघ्नी रुचिकारिणी
कञ्चित्पित्तकरी वातनाशिनी वह्निवर्द्धिनी ११४
वर्मिमत्स्यो हरेद्वातं पित्तं रुचिकरो लघुः ११५
दण्डमत्स्यो रसे तिक्तः पित्तरक्तं कफं हरेत्
वातसाधारणः प्रोक्तः शुक्रलो बलवर्द्धनः ११६
एरङ्गो मधुरः स्निग्धो विष्टम्भी शीतलो लघुः ११७
महाशफरसंज्ञस्तु तिक्तः पित्तकफापहः
शिशिरो मधुरो रुच्यो वातसाधारणः स्मृतः ११८
गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत्
कफघ्नी रुचिकृल्लघ्वी दीपनी बलवीर्यकृत् ११९
मद्गुरो वातहृद् बल्यो वृष्यः कफकरो लघुः १२०
सपादमत्स्यो मेधाकृन्मेदः क्षयकरश्च सः
वातपित्तकरश्चापि रुचिकृत्परमो मतः १२१
प्रोष्ठी तिक्ता कटुः स्वादुः शुक्रदा कफवातजित्
स्निग्धाऽस्यकण्ठरोगघ्नी रोचनी च लघुः स्मृता १२२

क्षुद्रमत्स्याः स्वादुरसा दोषत्रयविनाशनाः
लघुपाका रुचिकरा बलदास्ते हिता मताः १२३
अतिसूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः १२४
मत्स्यगर्भो भृशं वृष्यः स्निग्धः पुष्टिकरो लघुः
कफमेदःप्रदो बल्यो ग्लानिकृन्मेहनाशनः १२५
शुष्कमत्स्या नवा बल्या दुर्जरा विड्विबन्धिनः १२६
दग्धमत्स्यो गुणैः श्रेष्ठः पुष्टिकृद् बलवर्द्धनः १२७
कौपमत्स्याः शुक्रमूत्रकुष्ठश्लेष्मविवर्द्धनाः
सरोजा मधुराः स्निग्धा बल्या वातविनाशनाः
नादेया बृंहणा मत्स्या गुरवोऽनिलनाशनाः
रक्तपित्तकरा वृष्याः स्निग्धोष्णाः स्वल्पवर्चसः
चौञ्ज्याः पित्तकराः स्निग्धा मधुरा लघवो हिमाः
तडागा गुरवो वृष्याः शीतला मलमूत्रदाः
ताडागवन्निर्झरजा बलायुर्मतिदृक्कराः १२८
हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः
वसन्ते ते तु नादेया ग्रीष्मे चौञ्ज्यसमुद्भवाः
तडागजाता वर्षासु तास्वपथ्या नदीभवाः
नैर्झरा शरदि श्रेष्ठा विशेषोऽयमुदाहृतः १२९

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
मिश्रप्रकरणे एकादशो मांसवर्गः समाप्तः ११

## अथ द्वादशः कृतान्नवर्गः

समवायिनि हेतौ ये मुनिभिर्गणिता गुणाः
कार्येऽपि तेऽखिलाज्ञेयाः परिभाषेति भाषिताः १
क्वचित्संस्कारभेदेन गुणभेदो भवेद्यतः
भक्तं लघु पुराणस्यशालेस्तच्चिपिटो गुरुः २
क्वचिद्योगप्रभावेण गुणान्तरमपेक्षते
कदन्नं गुरु सर्पिश्च तद्युक्तं सुपचं भवेत् ३
भक्तमन्नं तथाऽन्धश्च क्वचित्कूरं च कीर्त्तितम्
ओदनोऽस्त्री स्त्रियां भिस्सा दीदिविः पुंसि भाषितः ४

सुधौतांस्तरडुलान् स्फीतांस्तोये पञ्चगुणे पचेत्
तदुक्तं प्रस्नुतं चोष्णं विशदं गुणवन्मतम् ५
भक्तं वह्निकरं पथ्यं तर्पणं रोचनं लघु
अधौतमस्नुतं शीतं गुर्वरुच्यं कफप्रदम् ६
दलितन्तु शमीधान्यं दालिर्दाली स्त्रियामुभे
दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभिः ७
संयुक्ता सूपनाम्नी स्यात्कथ्यन्ते तद्गुणा अथ
सूपो विष्टम्भको रूक्षः शीतस्तु स विशेषतः
निस्तुषो भृष्टसंसिद्धो लाघवं सुतरां व्रजेत् ८
तरडुला दालिसंमिश्रा लवणार्द्रकहिङ्गुभिः
संयुक्ताः सलिले सिद्धाः कृशरा कथिता बुधैः ९
कृशरा शुक्रला बल्या गुरुः पित्तकफप्रदा
दुर्जरा बुद्धिविष्टम्भमलमूत्रकरी स्मृता १०
वृते हरिद्रासंयुक्ते माषजा भर्जयेद्वटीम् ११
तरडुलांश्चापि निर्धौतान्सहैव परिभर्जयेत्
सिद्धयोग्यं जलं तत्र प्रक्षिप्य कुशलः पचेत् १२
लवणार्द्रकहिङ्गूनि मात्रया तत्र निक्षिपेत्
एषा सिद्धि समायाता प्रोक्ता तापहरी बुधैः १३
भवेत्तापहरी बल्या वृष्या श्लेष्माणमाचरेत्
बृंहणी तर्पणी रुच्या गुर्वी पित्तहरी स्मृता १४
पायसं परमान्नं स्यात्क्षीरिकाऽपि तदुच्यते
शुद्धेर्द्धऽपक्वे दुग्धे तु घृताक्तांस्तरडुलान्पचेत् १५
ते सिद्धाः क्षीरिका ख्याताः ससिताऽज्ययुतोत्तमा
क्षीरिका दुर्जरा प्रोक्ता बृंहणी बलवर्द्धिनी
विष्टम्भिनी हरेत् पित्तं रक्तपित्ताग्निमारुतान् १६
नारिकेरं तनूकृत्य छिन्नं पयसि गोः क्षिपेत्
सितागव्याज्यसंयुक्ते तत्पचेन्मृदुनाऽग्निना १७
नारिकेरोद्भवा क्षीरी स्निग्धा शीताऽतिपुष्टिदा
गुर्वी सुमधुरावृष्या रक्तपित्तानिलापहा १८
समितावर्त्तिकाः कृत्वा सुसूक्ष्मा यवसन्निभा

शुष्काः क्षीरेणसंसाध्या भोज्यावृत्तसिताऽन्विताः १९
सेविका तर्पणी बल्या गुर्वी पित्तानिलापहा
ग्राहिणी सन्धिकृद्रुच्या तां खादेन्नातिमात्रया २०
गोधूमा धवला धौताः कुट्टिताः शोषितास्ततः
प्रोक्षितायन्त्रनिष्पष्टाश्चालिताः समिताः स्मृताः २१
वारिणा कोमलां कृत्वा समितां साधु मर्दयेत्
हस्तचालनया तस्या लोप्त्रद्यं सम्यक्प्रसारयेत् २२
अधोमुखघटस्यैतद्विस्तृतं प्रक्षिपेद् बहिः
मृदुना वह्निना साध्या सिद्धो मगडक उच्यते २३
दुग्धेन साज्यखगडेन मगडकं भक्षयेन्नरः
अथवा सिद्धमांसेन सतक्रवटकेन वा २४
मगडको बृंहणो वृष्यो बल्यो रुचिकरो भृशम्
पाकेऽपि मधुरो ग्राही लघुर्दोषत्रयापहः२५
कुर्यात्समितयाऽतीव तन्वी पर्पटिका ततः २६
स्वेदयेत्तप्तके तां तु पोलिकां जगदुर्बुधाः
तां खादेल्लप्सिकायुक्तां तस्या मगडकवद् गुणाः २७
समितां सर्पिषा भृष्टां शर्करां पयसि क्षिपेत्
तस्मिन्घनीकृते न्यस्येल्लवङ्गं मरिचादिकम्
सिद्धषा लप्सिका ख्याता गुणानस्या वदाम्यहम् २८
लप्सिका बृंहणी वृष्या बल्या पित्तानिलापहा
स्निग्धा श्लेष्मकरी गुर्वी रोचनी तर्पणी परम् २९
शुष्कगोधूमचूर्णेन किञ्चित्पुष्टाञ्च पोलिकाम् ३०
तप्तके स्वेदयेत्कृत्वा भूर्यङ्गारेऽपि तां पचेत्
सिद्धैषारोटिका प्रोक्ता गुणानस्याः प्रचक्ष्महे ३१
रोटिका बलकृद्रुच्या बृंहणी धातुवर्द्धनी
वातघ्नी कफकृद् गुर्वी दीप्ताग्नीनां प्रपूजिता ३२
शुष्कगोधूमचूर्णन्तु साम्बु गाढं विमर्दयेत्
विधाय वटकाकारं निर्धूमेऽग्नौ शनैः पचेत्  ३३
अङ्गारकर्कटी ह्येषा बृंहणी शुक्रला लघुः
दीपनी कफकृद्बल्या पीनसश्वासकासजित् ३४

यवजारोटिका रुच्या मधुरा विशदा लघुः
मलशुक्रानिलकरी बल्या हन्ति कफामयान् ३५
चूर्णं यच्छुष्कमाषाणां चमसी साऽभिधीयते
चमसीरचिता रोटी कथ्यते बलभद्रिका
रूक्षोष्णा वातला बल्या दीप्ताग्नीनां सुपूजिता ३६
माषाणां दालयस्तोये स्थापितास्त्यक्तकञ्चुकाः
आतपे शोषिता यन्त्रे पिष्टास्ता धूमसी स्मृता ३७
धूमसीरचिता चैव प्रोक्ता झर्झरिका बुधैः
झर्झरी कफपित्तघ्नी किञ्चिद्वातकरी स्मृता ३८
चणक्या रोटिका रूक्षा श्लेष्मपित्तास्रनुद्गुरुः
विष्टम्भिनी न चक्षुष्या तद्गुणा चापि शष्कुली ३९
दालि संस्थापिता तोये ततोऽपहृतकञ्चुका
शिलायां साधु सम्पिष्टा पिष्टिका कथिता बुधैः ४०
माषपिष्टिकया पूर्णगर्भा गोधूमचूर्णतः
रचिता रोटिका सैव प्रोक्ता बेढमिका बुधैः ४१
भवेद्वेढमिका बल्या वृष्या रुच्याऽनिलापहा
उष्णा सन्तर्पणी गुर्वी बृंहणी शुक्रला परम् ४२
भिन्नमूत्रमला स्तन्यमेदःपित्तकफप्रदा
गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ४३
धूमसीरचिता हिङ्गुहरिद्रालवणैर्युताः
जीरकस्वर्जिकाभ्याञ्च तनूकृत्य च वेल्लिताः ४४
पर्पटास्ते सदाऽङ्गारभृष्टाः परमरोचकाः
दीपनाः पाचनाः रूक्षा गुरवः किञ्चिदीरिताः ४५
मौद्गाश्च तद्गुणाः प्रोक्ता विशेषाल्लघवो हिताः ४६
चणकस्य गुणैर्युक्ताः पर्पटाश्चणकोद्भवाः
स्नेहभृष्टास्तु ते सर्वे भवेयुर्मध्यमा गुणैः ४७
माषाणां पिष्टिकां पूर्याल्लवणार्द्रकहिङ्गुभिः
तया पिष्टिकया पूर्णा समिता कृत पोलिका ४८
ततस्तैलेन पक्वा सा पूरिका कथिता बुधैः
रुच्या स्वादी गुरुः स्निग्धा बल्या पितास्रदूषिका ४९

चक्षुस्तेजोहरी चोष्णा पाके वातविनाशिनी
तथैव घृतपक्वाऽपि चक्षुष्या रक्तपित्तहृत् ५०
अथ वटकः शुष्कः सरसश्च सूखा व रसदार बरा
माषाणांपिष्टिकां युक्तां लवणार्द्रकहिङ्गुभिः
कृत्वा विदध्याद्वटकांस्तांस्तैलेषु पचेच्छनैः ५१
विशुष्का वटका बल्या बृंहणा वीर्य्यवर्द्धनाः
वातामयहरा रुच्या विशेषाददर्दितापहाः ५२
विबन्धभेदिनः श्लेष्मकारिणोऽत्यग्निपूजिताः
संचूर्ण्यनिक्षिपेत्तक्रे भृष्टं जीरकहिङ्गु च ५३
लवणं तत्र वटकान्सकलानपि मज्जयेत्
शुक्लस्तत्र वटको बलकृद्रोचनो गुरुः ५४
विबन्धहृद्विदाही च श्लेष्मलः पवनापहः
राज्यक्तयाऽतिरोचन्या पाचन्या तांस्तु भक्षयेत् ५५
मन्थनी नूतना धार्या कटुतैलेन लेपिता
निर्मलेनाम्बुनाऽपूर्य तस्यां चूर्णं विनिक्षिपेत्
राजिकाजीरकलवणहिङ्गुशुण्ठीनिशाकृतम् ५६
निक्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्च मुद्रयेत्
ततो दिनत्रयादूर्ध्वमम्लाः स्युर्वटका ध्रुवम् ५७
काञ्जिकावटको रुच्यो वातघ्नः श्लेष्मकारकः
शूलघ्नोऽजीर्णदाहनुद् नेत्ररोगे तु नो हितः ५८
अम्लिकां स्वेदयित्वा तु जलेन सह मर्दयेत्
तन्नीरे कृतसंस्कारे वटकान्मज्जयेज्जनः ५९
अम्लिकावटकास्ते तु रुच्या वह्निप्रदीपनाः
वटकस्य गुणैः पूर्वै रेतेऽपि च समन्विताः ६०
मुद्गानां वटकास्तक्रे मज्जिता लघवो हिमाः
संस्कारजप्रभावेण त्रिदोषशमना हिताः ६१
माषाणां पिष्टिका हिङ्गुलवणार्द्रकसंस्कृता
तया विरचिता वस्त्रे वटिकाः साधु शोषिताः ६२
भर्जितास्तप्ततैलैस्ता अथवाऽम्बुप्रयोगतः
वटकस्य गुणैर्युक्ता ज्ञातव्या रोचना भृशम् ६३

कूष्माराडकवटी ज्ञेया पूर्वोक्तवटिकागुणा
विशेषात्पित्तरक्तघ्नी लघ्वी च कथिता बुधैः ६४
मूद्गानां वटिका तद्वद्रचिता साधिता तथा
पथ्या रुच्या तथा लघ्वी मुद्गसूपगुणा स्मृता ६५
माषपिष्टिकया लिप्तं नागवल्लीदलं महत् ६६
तत्तु संस्वेदयेद्युक्त्या स्थाल्यामास्तारकोपरि
ततो निष्कास्य तं खराडचं ततस्तैलेन भर्जयेत् ६७
अलीकमत्स्य उक्तोऽय प्रकारः पाक परिडतैः
तं वृन्ताक भटित्रेण वास्तूकेन च भक्षयेत् ६८
स्थाल्यां घृते वा तैले वा हरिद्रां हिङ्गु भर्जयेत्
अवलेहनसंयुक्तं तक्रं तत्रैव निक्षिपेत्
एषा सिद्धा समरिचा क्वथिता कथिता बुधैः ६९
क्वथिता पाचनी रुच्या लघ्वी वह्निप्रदीपनी
कफानिलाविबन्धघ्नी किञ्चित्पित्तप्रकोपणी ७०
अलीकमत्स्याः शुष्का वा किं वा क्वथितया पुनः
बृंहणा रोचना वृष्या बल्या वातगदापहः ७१
कोष्ठशुद्धिकराः शुष्काः किञ्चित्पित्तप्रकोपणाः
अर्दिते सहनुस्तम्भे विशेषेण हिताः स्मृताः ७२
मुद्गपिष्टीविरचितान् वटकांस्तैलपाचितान्
हस्तेन चूर्णयेत्सम्यक् तस्मिंश्चूर्णं विनिक्षिपेत् ७३
भृष्टं हिङ्ग्वार्द्रकं सूक्ष्मं मरिचं जीरकं तथा
निम्बूरसं यवानीं च युक्त्या सर्वं विमिश्रयेत् ७४
मुद्गपिष्टि पचेत्सम्यक् स्थाल्याभास्तारकोपरि
तस्यास्तु गोलकं कुर्यात्तन्मध्ये पूरण क्षिपेत् ७५
तैले तान्गोलकान्पक्त्वा क्वथितायां निमज्जयेत्
गोलकाःपाचक् प्रोक्तास्ते त्वार्द्रकवटा अपि ७६
मुद्गार्द्रकवटा रुच्या लघ्वो बलकारकाः
दीपनास्तर्पणाः पथ्यास्त्रिषु दोषेषु पूजिताः ७७
दालयश्चणकानां तु निस्तुषा यन्त्रपेषिताः
तच्चूर्णं वेसनं प्रोक्तं पाकशास्त्रविशारदैः ७८

वटिकावेसनस्यापि क्वथितायां निमज्जिता
रुच्या विष्टम्भजननी बल्या पुष्टिकरी स्मृता ७९
पाकपात्रे घृतं दद्यात्तैलञ्च तदभावतः
तत्र हिङ्गुहरिद्रां च भर्जयेत्तदनन्तरम् ८०
छागादेरस्थिरहितं मांसं तत्खण्डितं ध्रुवम्
धौतं निर्गालितं तस्मिन्घृते तद्भर्जयेच्छनैः ८१
सिद्धयोग्यं जलं दत्वा लवणन्तु पचेत्ततः
सिद्धे जलेन सम्पिष्य वेशवारं परिक्षिपेत् ८२
द्रव्याणि वेशवारस्य नागवल्लीदलानि च
तण्डुलाश्च लवङ्गानि मरिचानि समासतः ८३
अनेन विधिना सिद्धं शुद्धमांसमिति स्मृतम् ८४
शुद्धमांसं परं वृष्यं बल्यं रुच्यञ्च बृंहणम्
त्रिदोषशमनं श्रेष्ठं दीपनं धातुवर्द्धनम् ८५
छागादेर्मांसमूर्वादेः कुट्टितं खण्डितं पुनः
शुद्धमांसविधानेन पचेदेतत्सहद्रकम्
सहद्रकं गुणैर्ग्रन्थे शुद्धमांसगुणं स्मृतम् ८६
पाकपात्रे घृतं दत्त्वा हरिद्रां हिङ्गु भर्जयेत्
छागादेः सकलस्यापि खण्डान्यपि च भर्जयेत् ८७
सिद्धयोग्यं जलं दत्त्वा पचेन्मृदुतरं तथा
जीरकादियुते तक्रे मांसखण्डानि भावयेत् ८८
तक्रमांसन्तु वातघ्नं लघु रुच्यं बलप्रदम्
कफघ्नं पित्तलं किञ्चित्सर्वाहारस्य पाचनम् ८९
पाकपात्रे तु बृहति मांसखण्डानि निक्षिपेत्
पानीयं प्रचुरं सर्पिः प्रभूतं हिङ्गु जीरकम् ९०
हरिद्रामार्द्रकं शुण्ठीं लवणं मरिचानि च
तण्डुलांश्चापि गोधूमाञ्जम्बीराणां रसान् बहून् ९१
यथा सर्वाणि वस्तूनि सुपक्वानि भवन्ति हि
तथा पचेत्तु निपुणो बहुमण्डस्थितिर्यथा ९२
एषा हरीसा बलकृद्वातपित्तापहा गुरुः
शीतोष्णा शुक्रदा स्निग्धा सरा सन्धानकारिणी ९३

शुद्धमांसविधानेन मांसं सम्यक्प्रसाधितम्
पुनस्तदाज्ये सम्भृष्टं तलितं प्रोच्यते बुधैः ९४
तलितं बलमेधाऽग्निमांसौजःशुक्रवृद्धिकृत्
तर्पणं लघु सुस्निग्धं रोचनं दृढताकरम् ९५
कालखण्डादिमांसानि ग्रथितानि शलाकया
घृतं सलवणं दत्त्वा निर्धूमे दहने पचेत् ९६
तत्तु शूल्यमिति प्रोक्तं पाककर्मविचक्षणैः ९७
शूल्यं पलं सुधातुल्यं रुच्यं बह्निकरं लघु
कफवातहरं बल्यं किञ्चित्पित्तकरं हि तत् ९८
शुद्धमांसं तनूकृत्य कर्त्तितं स्वेदितं जले
लवङ्गहिङ्गुलवणमरिचार्द्रकसंयुतम् ९९
एलाजीरकधान्याकनिम्बूरससमन्वितम्
घृते सुगन्धे तद् भृष्टं पूरणं प्रोच्यते बुधैः १००
शृङ्गाटकं समितया कृतं पूरणपूरितम्
पुनः सर्पिषि सभृष्टं मांसशृङ्गाटकं वदेत् १०१
मांसशृङ्गाटकं रुच्यं बृंहणं बलकृद् गुरु
वातपित्तहरं वृष्यं कफघ्नं वीर्यवर्धनम् १०२
सिद्धमांसरसो रुच्यः श्रमश्वासक्षयापहः
प्रीणनो वातपित्तघ्नः क्षीणानामल्परेतसाम्
विश्लिष्टभग्नसन्धीनां शुद्धानां शुद्धिकाङ्क्षिणाम् १०३
स्मृत्योजोबलहीनानां ज्वरक्षीणक्षतोरसाम्
शस्यते स्वरहीनानां दृष्ट्यायुःश्रवणार्थिनाम् १०४
प्रकाराः कथिताः सन्ति बहवो मांससम्भवाः
ग्रन्थविस्तरभीतेस्ते मया नात्र प्रकीर्त्तिताः १०५
हिङ्गुजीरयुते तैले क्षिपेच्छाकं सुखण्डितम् १०६
लवणं चात्र चूर्णादि सिद्धे हिङ्गूदकं क्षिपेत्
इत्येवं सर्वशाकानां साधनेऽभिहितो विधिः १०७
समितां मर्दयेदाज्यैर्जलेनापि च सन्नयेत्
तस्यास्तु वटिकां कृत्वा पचेत्सर्पिषि नीरसम्
एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते १०८

मज्ञयित्वा सितापाके ततस्तञ्च समुद्धरेत्
अयं प्रकारः संसिद्धौ मराठ इत्यभिधीयते १०९
मराठस्तु बृंहणो वृष्यो बल्यः सुमधुरो गुरुः
पित्तानिलहरो रुच्यो दीप्ताग्नीनां सुपूजितः ११०
समिताशर्करासर्पिर्निर्मिता अपरेऽपि ये
प्रकारा अमुना तुल्यास्तेऽपि चेत्तद्गुणाः स्मृताः १११
पर्पटयः साज्यसमिता निर्मिता घृतभर्जिताः
कुट्टिताश्चालिताः शुद्धशर्कराभिर्विमर्दिताः ११२
तत्र चूर्णं क्षिपेदेलालवङ्गमरिचानि च
नारिकेरं सकर्पूरं चारबीजान्यनेकधा ११३
घृताक्तसमिता पुष्टरोटिका रचिता ततः
तस्यान्तःपूरणं तस्य कुर्यान्मुद्रां दृढां सुधीः ११४
सर्पिषि प्रचुरे तान्तु सुपचेन्निपुणो जनः
प्रकारज्ञैः प्रकारोऽय सम्पाव इति कीर्त्तितः ११५
मराठकेन समो ज्ञेयः सम्पावोऽपि गुणैर्जनैः ११६
घृताढ्यया समितया लम्बं कृत्वा पुटं ततः
लवङ्गोषणकर्पूरयुतया सितयाऽन्वितम् ११७
पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका
सम्पावसदृशा ज्ञेया गुणैः कर्पूरनालिका ११८
समिताया घृताढ्याया वर्त्तीर्दीर्घाः समाचरेत्
तास्तु सन्निहिता दीर्घाः पीठस्योपरि धारयेत् ११९
वेल्लयेद्वेल्लनेनैता यथैका पर्पटी भवेत्
ततश्छुरिकया तान्तु संलग्नामेव कर्त्तयेत् १२०
ततस्तु वेल्लयेद्भूयः सट्टकेन च लेपयेत्
शालिचूर्णं घृतं तोयं मिश्रितं सट्टकं वदेत् १२१
ततः संवृत्य तल्लोप्त्रद्यं विदधीत पृथक्पृथक्
पुनस्तां वेल्लयेल्लोप्त्रद्यं यथा स्यान्मराडलाकृतिः १२२
ततस्तां सुपचेदाज्ये भवेयुश्च स्फुटाः स्फुटाः
सुगन्धया शर्करया तद्धूलनमाचरेत् १२३
सिद्धैषा फेनिकानाम्नी मराठकेन समा गुणैः

ततः किञ्चिल्लघुरियं विशेषोऽयमुदाहृतः १२४
समिताया घृताक्ताया लोप्त्रद्यं कृत्वा च वेल्लयेत्
आज्ये तां भर्जयेत्सिद्धा शष्कुली फेनिकागुणा १२५
वृताढ्यया समितया कृत्वा सूत्राणि तानि तु
निपुणो भर्जयेदाज्ये खण्डपाकेन योजयेत्
युक्तेन मोदकान् कुर्यात्ते गुणैर्मण्ठका यथा १२६
मुद्गानां धूमसीं सम्यग्घोलयेन्निर्मलाऽम्बुना १२७
कटाहस्य घृतस्योर्ध्वं झर्झरं स्थापयेत्ततः
घूमसीन्तु द्रवीभूतां प्रक्षिपेज्झर्झरोपरि १२८
पतन्ति बिन्दवस्तस्मात्तान्सुपक्वान्समुद्धरेत्
सितापाकेन संयोज्य कुर्याद्धस्तेन मोदकान् १२९
लघुर्ग्राही त्रिदोषघ्नः स्वादुः शीतो रुचिप्रदः
चक्षुष्यो ज्वरहृद्बल्यस्तर्पणो मुद्गमोदकः १३०
एवमेव प्रकारेण कार्या वेसनमोदकाः १३१
ते बल्या लघवः शीताः किञ्चिद्वातकरास्तथा
विष्टम्भिनो ज्वरघ्नाश्च पित्तरक्तकफापहाः १३२
तण्डुलचूर्णविमिश्रितनष्टक्षीरेण सान्द्रपिष्टेन
दृढकूपिकां विदध्यात्ताञ्च पचेत्सर्पिषा सम्यक् १३३
अथ तां कोरितमध्यां घनपयसा पूर्णगर्भाञ्च
सट्टकमुद्रितवदनां तप्तघृते सुपक्ववदनाञ्च
अथ पाण्डुखण्डपाके स्नपयेत्कर्पूरवासिते कुशलः
अथ दुग्धकूपिका सा बल्या पित्तानिलापहाचैव १३४
वृष्या शीता गुर्वी शुक्रकरी च तर्पणी रुच्या
विदधाति कायपुष्टिं दृष्टिं दूरप्रसारिणीं सुचिरम् १३५
नूतनं घटमानीय तस्यान्तः कुशलो जनः
प्रस्थार्द्धपरिमाणेन दध्नाऽम्लेन प्रलेपयेत् १३७
द्विप्रस्थां समितां तत्र दध्यम्ल प्रस्थसम्मितम्
घृतमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत् १३८
आतपे स्थापयेत्तावद् यावद्याति तदम्लताम्
ततस्तत्प्रक्षिपेत्पात्रे सच्छिद्रे भाजने तु तत् १३९

परिभ्राम्य परिभ्राम्य सुसन्तप्ते घृते क्षिपेत्
पुनः पुनः स्तदावृत्त्या विदध्यान्मरग्डलाकृतिम् १४०
तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे
कर्पूरादिसुगन्धे च स्नापयित्वोद्धरेत्ततः १४१
एषा कुरग्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा
धातुवृद्धिकरी वृष्या रुच्या चेन्द्रियतर्पणी १४२
ग्रादौ माहिषमम्लमम्बुरहितं दध्याढकं शर्करां
शुभ्रां प्रस्थयुगोन्मितां शुचिपटे किञ्चिच्च किञ्चित्क्षिपेत्
दुग्धेनार्द्धघटेन मृग्मयनवंस्थाल्यां दृढं स्नावये
देलाबीजलवङ्गचन्द्रमरिचैर्योग्यैश्च तद्योजयेत् १४३
भीमेन प्रियभोजनेन रचिता नाम्ना रसाला स्वयं
श्रीकृष्णेन पुरा पुनः पुनरियं प्रीत्या समास्वादिता
एषा येन वसन्तवर्जितदिने संसेव्यते नित्यश
स्तस्य स्यादतिवीर्य्यवृद्धिरनिशं सर्वेन्द्रियाणां बलम् १४४
ग्रीष्मे तथाशरदि ये रविशोषिताङ्गा ये च प्रमत्तवनितासुरतातिखिन्नाः
ये चापि मार्गपरिसर्पणशीर्णगात्रास्तेषामियं वपुषि पोषणमाशु कुर्यात् १४५
रसाला शुक्रला वल्या रोचनी वातपित्तजित् १४६
दीपनी बृंहणी स्निग्धा मधुरा शिशिरा सरा
रक्तपित्तं तृषां दाहं प्रतिश्यायं विनाशयेत् १४७
जलेन शीतलेनैव घोलिता शुभ्रशर्करा
एलालवङ्गकर्पूरमरिचैश्च समन्विता १४८
शर्करोदकनाम्ना तत्प्रसिद्धं विदुषां मुखैः
शर्करोदकमाख्यातं शुक्रलं शिशिरं सरम् १४९
बल्यं रुच्यं लघु स्वादु वातपित्तप्रणाशनम्
मूर्च्छाछर्दितृषादाहज्वरशान्तिकरं परम् १५०
ग्राम्रमामं जले स्विन्नं मर्दितं दृढपाणिना
सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितम् १५१
प्रपाणकमिदं श्रेष्ठं भीमसेनेन निर्मितम्
सद्यो रुचिकरं बल्यं शीघ्रमिन्द्रिवतर्पणम् १५२
ग्रम्लिकायाः फलं पक्वं मर्दितं वारिणा दृढम्

शर्करामरिचैर्मिश्रं लवङ्गेन्दुसुवासितम् १५३
अम्लिकाफलसम्भूतं पानकं वातनाशनम्
पित्तश्लेष्मकरं किञ्चित्सुरुच्यं वह्निबोधनम् १५४
भागैकं निम्बुजं तोयं षड्भागं शर्करोदकम्
लवङ्गमरिचैर्मिश्रं पानं पानकमुत्तमम् १५५
निम्बूकफलभवं पानमत्यम्लं वातनाशनम्
वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् १५६
शिलायां साधु सम्पिष्टं धान्याकं वस्त्रगालितम्
शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतम्
नूतने मृण्मये पात्रे स्थितं पित्तहरं परम् १५७
काञ्जिकं रोचनं रुच्यं पाचनं वह्निदीपनम् १५८
शूलाजीर्णविबन्धघ्नं कोष्ठशुद्धिकरं परम्
न भवेत्काञ्जिकं यत्र तत्र जालि प्रदीयते १५९
आममाम्रफलं पिष्टं राजिकालवणान्वितम्
मृष्टहिङ्गुयुतं पूतं घोलितं जालिरुच्यते १६०
जालिर्हरति जिह्वायाः कुण्ठत्वं कण्ठशोधिनी
मन्दं मन्दन्तु पीता सा रोचनी वह्निबोधिनी १६१
तुर्यांशेन जलेन संयुतमतिस्थूलं सदम्लं दधि
प्रायोमाहिषमम्बुकेन विमले मृद्भाजने गालयेत्
भृष्टं हिंगुच जीरकञ्चलवणं राजीञ्च किञ्चिन्मितां
पिष्टां तत्र विमिश्रयेद्भवति तत्तक्रं न कस्य प्रियम् १६२
तक्रं रुचिकरं वह्निदीपनं पाचनं परम्
उदरे ये गदास्तेषां नाशनं तृप्तिकारकम् १६३
विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः
तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् १६४
धान्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि सक्तवः १६५
यवजाः सक्तवः शीता दीपना लघवः सराः
कफपित्तहरा रूक्षा लेखनाश्च प्रकीर्त्तिताः १६६
ते पीता बलदा वृष्या बृंहणा भेदनास्तथा
तर्पणा मधुरा रुच्याः परिणामे बलावहाः १६७

कफपित्तश्रमक्षुत्तृड्व्रणनेत्रामयापहाः
प्रशस्ता घर्मदाहाध्वव्यायामार्त्तशरीरिणाम् १६८
निस्तुषैश्चणकैर्भृष्टैस्तुर्यांशैश्च यवैः कृताः
सक्तवः शर्करासर्पिर्युक्ता ग्रीष्मेऽपि पूजिता १६९
सक्तवः शालिसम्भूता वह्निदा लघवो हिमाः
मधुरा ग्राहिणो रुच्याः पथ्याश्च बलशुक्रदा १७०
न भुक्त्वा न रदैश्छित्वा न निशायां न वा बहून्
नजलान्तरितानद्भिः सक्तूनद्यान्न केवलान् १७१
पृथक्पानं पुनर्दानं सामिषं पयसा निशि
दन्तच्छेदनमुष्णञ्च सप्त सक्तुषु वर्जयेत् १७२
यवास्तु निस्तुषा भृष्टाः स्मृता धाना इति स्त्रियाम्
धानाः स्युर्दुर्जरा रुक्षास्तृट्प्रदा गुरवश्च ताः
तथा मेहकफच्छर्दिनाशिन्यः सम्प्रकीर्त्तिताः १७३
येषां स्युस्तण्डुलास्तानि धान्यानि सतुषाणि च
भृष्टानि स्फुटितान्याहुर्लाजा इति मनीषिणः १७४
लाजाः स्युर्मधुराः शीता लघवो दीपनाश्च ते
स्वल्पमूत्रमला रूक्षा बल्याः पित्तकफच्छिदः
छर्द्यतीसारदाहास्रमेहमेदस्तृषाऽपहाः १७५
शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः
कुट्टिताश्चिपिटाःप्रोक्तास्ते स्मृताः पृथुका अपि १७६
पृथुका गुरवो वातनाशनाः श्लेष्मला अपि
सक्षीरा बृंहणा वृष्या बल्या भिन्नमलाश्च ते १७७
अर्द्धपक्वैः शमीधान्यैस्तृणभृष्टैश्च होलकः
होलकोऽल्पानिलोः मेदः कफदोषत्रयापहः
भवेद् यो होलको यस्य स च तत्तद्गुणो भवेत् १७८
मञ्जरी त्वर्द्धपक्वा वा यवगोधूमयोर्भवेत्
तृणानलेन संभृष्टा बुधैरूचीति सा स्मृता
ऊची कफप्रदा बल्या लघ्वी पित्तानिलापहा १७९
अर्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादयः १८०
कुल्माषा इति कथ्यन्ते शब्दशास्त्रेषु पण्डितैः

कुल्माषागुरवो रूक्षा वातला भिन्नवर्चसः १८१
पललन्तु समाख्यातं सैन्धवं तिलपिष्टकम्
पललं मलकृद् वृष्यं वातघ्नं कफपित्तकृत्
बृंहणं च गुरु स्निग्धं मूत्राधिक्यनिवर्त्तकम् १८२
तिलकिट्टन्तु पिण्याकस्तथा तिलखलि स्मृता
पिण्याको लेखनो रूक्षो विष्टम्भी दृष्टिदूषणः १८३
तुण्डुलो मेहजन्तुघ्नः स नवस्त्वतिदुर्जरः १८४
इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
द्वादशः कृतान्नवर्गः समाप्तः १२

अथ वारिवर्गः

पानीयं सलिलं नीरं कीलालं जलमम्बु च
आपो वार्वारि कं तोयं पयः पाथस्तथोदकम्
जीवनं वनमम्भोऽर्णोऽमृतं घनरसोऽपि च १
पानीयं श्रमनाशनं क्लमहरं मूर्च्छापिपासापहं
तन्द्राच्छर्दिविबन्धहृद्बलकरं निद्राहरं तर्पणम्
हृद्यं गुप्तरसं ह्यजीर्णशमकं नित्यं हितं शीतलं
लघ्वच्छं रसकारणं निगदितं पीयूषवज्जीवनम् २
पानीयं मुनिभिः प्रोक्तं दिव्यं भौममिति द्विधा ३
दिव्यं चतुर्विधं प्रोक्तं धाराजं करकाभवम्
तौषारञ्च तथा हैमं तेषु धारं गुणाधिकम् ४
धाराभिः पतितं तोयं गृहीतं स्फीतवाससा
शिलायां वसुधायां वा धौतायां पतितञ्च तत् ५
सौवर्णे राजते ताम्रे स्फाटिके काचनिर्मिते
भाजने मृण्मये वाऽपि स्थापितं धारमुच्यते ६
धारं नीरं त्रिदोषघ्नमनिर्देश्यरसं लघु
सौम्यं रसायनं बल्यं तर्पणं ह्लादि जीवनम् ७
पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान्
तृष्णां हरति तत् पथ्यं विशेषात्प्रावृषि स्मृतम् ८
धाराजलं च द्विविधं गाङ्गसामुद्रभेदतः ९

आकाशगङ्गासम्बन्धिजलमादाय दिग्गजाः
मेघैरन्तरिता वृष्टिं कुर्वन्तीति वचः सताम् १०
गाङ्गमाश्वयुजे मासि प्रायो वर्षति वारिदः
सर्वथा तज्जलं ज्ञेयं तथैव चरके वचः ११
स्थापिते हेमजे पात्रे राजते मृण्मयेऽपि वा
शाल्यन्नं येन संसिक्तं भवेदक्लेदि वर्णवत् १२
तद्गाङ्गं सर्वदोषघ्नं ज्ञेयं सामुद्रमन्यथा
तत्तु सक्षारलवणं शुक्रदृष्टिबलापहम् १३
विस्रञ्च दोषलं तीक्ष्णं सर्वकर्मसु नो हितम्
सामुद्रं त्वाश्विने मासि गुणैर्गाङ्गवदादिशेत् १४
यतोऽगस्त्यस्य दिव्यर्षेरुदयात्सकलं जलम्
निर्मलं निर्विषं स्वादु शुक्रलं स्याददोषलम् १५
फूत्कारविषवातेन नागानां व्योमचारिणाम्
वर्षासु सविषं तोयं दिव्यमप्याश्विनं विना १६
अनार्त्तवं प्रमुञ्चन्ति वारि वारिधरास्तु यत्
तत्त्रिदोषाय सर्वेषां देहिनां परिकीर्त्तितम् १७
दिव्यवाय्वग्निसंयोगात् संहताः खात् पतन्ति याः
पाषाणखण्डवच्चापस्ताः कारक्योऽमृतोपमाः १८
करकाजं जलं रूक्षं विशदं गुरु च स्थिरम्
दारुणं शीतलं सान्द्रं पित्तहृत्कफवातकृत् १९
अपि नद्याः समुद्रान्ते वह्निरापस्तदुद्भवाः
धूमावयवनिर्मुक्तास्तुषाराख्यास्तु ताः स्मृताः २०
अपथ्याः प्राणिनां प्रायो भूरुहाणान्तु ता हिताः
तुषाराम्बु हिमं रूक्षं स्याद्वातलमपित्तलम्
कफोरुस्तम्भकण्ठाग्निमेहगण्डादिरोगनुत् २१
हिमवच्छिखरादिभ्यो द्रवीभूयाभिवर्षति
यत्तदेव हिमं हैमं जलमाहुर्मनीषिणः
हिमाम्बु शीतं पित्तघ्नं गुरु वातविवर्द्धनम् २२
और्वानलधूमेरितमम्बु समुद्रस्य यद्घनीभूतम्
पवनानीतमुदीच्यां तद्धिममिति कथ्यते सद्भिः २३

हिमन्तु शीतलं रूक्षं दारुणं सूक्ष्ममित्यपि
न तद् दूषयते वातं न च पित्तं न वा कफम् २४
भौममम्भो निगदितं प्रथमं त्रिविधं बुधैः
जाङ्गलं परमानूपं ततः साधारणं क्रमात् २५
अल्पोदकोऽल्पवृक्षश्च पित्तरक्तामयान्वितः
ज्ञातव्यो जाङ्गलो देशस्तत्रत्यं जाङ्गलं जलम् २६
वह्वम्बुर्बहुवृक्षश्च वातश्लेष्मामयान्वितः
देशोऽनूप इति ख्यात आनूपं तद्भवं जलम् २७
मिश्रचिह्नस्तु यो देशः स हि साधारणः स्मृतः
तस्मिन्देशे यदुदकं तत्तु साधारणं स्मृतम् २८
जाङ्गलं सलिलं रूक्षं लवणं लघु पित्तनुत्
वह्निकृत्कफहृत्पथ्यं विकारान्हरते बहून् २९
आनूपं वार्यभिष्यन्दि स्वादु स्निग्धं घनं गुरु
वह्निहृत्कफकृद्हृद्यं विकारान्कुरुते बहून् ३०
साधारणं तु मधुरं दीपनं शीतलं लघु
तर्पणं रोचनं तृष्णादाहदोषत्रयप्रणुत् ३१
नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम् ३२
नादेयमुदकं रूक्षं वातलं लघु दीपनम्
अनभिष्यन्दि विशदं कटुकं कफपित्तनुत् ३३
नद्यः शीघ्रवहा लघ्व्यः सर्वा याश्चामलोदकाः
गुर्व्यः शैवलसंछन्ना मन्दगाः कलुषाश्च याः ३४
हिमवत्प्रभवाः पथ्या नद्योऽश्माहतपाथसः
गङ्गाशतद्रुसरयूयमुनाऽद्या गुणोत्तमाः ३५
सह्यशैलभवा नद्यो वेणागोदावरीमुखाः
कुर्वन्ति प्रायशः कुष्ठमीषद्वातकफावहाः ३६
नदीसरस्तडागस्थे कूपप्रस्रवणादिजे
उदके देशभेदेन गुणान्दोषांश्च लक्षयेत् ३७
विदार्य भूमिं निम्नां यन्महत्या धारया स्रवेत्
तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः ३८
औद्भिदं वारि पित्तघ्नमविदाह्यतिशीतलम्

प्रीणनं मधुरं बल्यमीषद्वातकरं लघु ४९
शैलसानुस्त्रवद्वारिप्रवाहो निर्झरो झरः
स तु प्रस्त्रवणश्चापि तत्रत्यं नैर्झरं जलम् ४०
नैर्झरं रुचिकृन्नीरं कफघ्नं दीपनं लघु
मधुरं कटुपाकं च वातलं स्यादपित्तलम् ४१
नद्याः शैलादिरुद्धायाः यत्र संस्त्रुत्य तिष्ठति
तत्सरो जलजच्छन्नं तदम्भः सारसं स्मृतम् ४२
सारसं सलिलं बल्यं तृष्णाघ्नं मधुरं लघु
रोचनं तुवरं रूक्षं बद्धमूत्रमलं स्मृतम् ४३
प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः
जलाशयस्तडागः स्यात्ताडागं तज्जलं स्मृतम् ४४
ताडागमुदकं स्वादु कषायं कटुपाकि च
वातलं बद्धविण्मूत्रमसृक्पित्तकफापहम् ४५
पाषाणैरिष्टकाभिर्वा बद्धः कूपो बृहत्तरः
ससोपानो भवेद्वापी तज्जलं वाप्यमुच्यते ४६
वाप्यं वारि यदि क्षारं पित्तकृत्कफवातहृत्
तदेव मिष्टं कफकृद्वातपित्तहरं भवेत् ४७
भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः
बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौपमुच्यते ४८
कौपं पयो यदि स्वादु त्रिदोषघ्नं हितं लघु
तत्क्षारं कफवातघ्नं दीपनं पित्तकृत्परम् ४९
शिलाकीर्णं स्वयं श्वभ्रं नीलाञ्जनसमोदकम्
लतावितानसंच्छन्नं चौञ्ज्यमित्यभिधीयते ५०
अश्मादिभिरबद्धं यत्तच्चौञ्ज्यमिति वा परे
तत्रत्त्यमुदकं चौञ्ज्यं मुनिभिस्तदुदाहृतम् ५१
चौञ्ज्यं वह्निकरं नीरं रूक्षं कफहरं लघु
मधुरं पित्तनुद्रुच्यं पाचनं विशदं स्मृतम् ५२
अल्पं सरः पल्वलं स्याद्यत्र चन्द्रक्षगे रवौ ५३
न तिष्ठति जलं किञ्चित्तत्रत्यं वारि पाल्वलम्
पाल्वलं वार्यभिष्यन्दि गुरु स्वादु त्रिदोषकृत् ५४

नद्यादिनिकटे भूमिर्या भवेद्वालुकामयी
उद्धाव्यते ततो यत्तु तज्जलं विकिरं विदुः ५५
विकिरं शीतलं स्वच्छं निर्दोषं लघु च स्मृतम्
तुवरं स्वादु पित्तघ्नं क्षारं तर्त्पित्तलं मनाक् ५६
केदारः क्षेत्रमुद्दिष्टं कैदारं तज्जलं स्मृतम्
कैदारं वार्यभिष्यन्दि मधुरं गुरु दोषकृत् ५७
वार्षिकं तदहर्वृष्टं भूमिस्थमहितं जलम्
त्रिरात्रमुषितं तत्तु प्रसन्नममृतोपमम् ५८
हेमन्ते सारसं तोयं ताडागं वा हितं स्मृतम्
हेमन्ते विहितं तोयं शिशिरेऽपि प्रशस्यते ५९
वसन्तग्रीष्मयोः कौपं वाप्यं वा नैर्झरं जलम्
नादेयं वारि नादेयं वसन्तग्रीष्मयोर्बुधैः ६०
विषवद्धनवृक्षाणां पत्राद्यैर्दूषितं यतः
औद्भिदं वाऽन्तरिक्षं वा कौपं वा प्रावृषि स्मृतम्
शस्तं शरदि नादेयं नीरमंशूदकं परम् ६१
दिवा रविकरैर्जुष्टं निशि शीतकरांशुभिः
ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम् ६२
अनभिष्यन्दि निर्दोषमान्तरिक्षजलोपमम्
बल्यं रसायनं मेध्यं शीतं लघु सुधासमम् ६३
शरदि स्वच्छमुदयादगस्त्यादखिलं हितम् ६४
पौषे वारि सरोजातं माघे तत्तु तडागजम्
फाल्गुने कूपसम्भूतं चैत्रे चौञ्ज्यं हितम् मतम् ६५
वैशाखे नैर्झरं नीरं ज्येष्ठे शस्तं तथौद्भिदम्
आषाढे शस्यते कौपं श्रावणे दिव्यमेव च ६६
भाद्रे कौपं पयः शस्तमाश्विने चौञ्ज्यमेव च
कार्त्तिके मार्गशीर्षे च जलमात्रं प्रशस्यते ६७
भौमानामम्भसां प्रायो ग्रहणं प्रातरिष्यते
शीतत्वं निर्मलत्वञ्च यतस्तेषां मतो गुणः ६८
अत्यम्बुपानान्न पिच्यतेऽन्न निरम्बुपानाच्च स एव दोषः
तस्मान्नरो वह्निविवर्द्धनाय मुहुर्मुहुर्वारि पिबेदभूरि ६९

मूर्च्छापित्तोष्ण दाहेषु विषे रक्ते मदात्यये
श्रमे भ्रमे विदग्धेऽन्नेतमके वमथौ तथा
ऊर्ध्वगे रक्त पित्ते च शीतमम्भः प्रशस्यते ७०
पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे
आध्माने स्तिमिते कोष्ठे सद्यःशुद्धौ नवज्वरे ७१
अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ
हिक्कायां स्नेहपाने च शीताम्बु परिवर्जयेत् ७२
अरोचके प्रतिश्याये मन्देऽग्नौ श्वयथौ क्षये
मुखप्रसेके जठरे कुष्ठे नेत्रामये ज्वरे
व्रणे च मधुमेहे च पिबेत्पानीयमल्पकम् ७३
जीवनं जीविनां जीवो जगत् सर्वन्तु तन्मयम्
नातोऽत्यन्तनिषेधेन कदाचिद्वारि वार्य्यते ७४
तृष्णा गरीयसी घोरा सद्यःप्राणविनाशिनी
तस्माद् देयं तृषाऽर्त्ताय पानीयं प्राणधारणम् ७५
तृषितो मोहमायाति मोहात्प्राणान्विमुञ्चति
अतः सर्वास्ववस्थासु न क्वचिद्वारि वारयेत् ७६
अगन्धमव्यक्तरसं सुशीतं तर्षनाशनम्
स्वच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते ७७
पिच्छिलं कृमिलं क्लिन्नं वर्णशैवालकर्दमैः
विवर्णं विरसं सान्द्रं दुर्गन्धं न हितं जलम् ७८
कलुषं छन्नमम्भोजपर्णनीलीतृणादिभिः
दुःस्पर्शनमसंस्पृष्टं सौरचान्द्रमरीचिभिः ७९
अनार्त्तवं वार्षिकं तु प्रथमं तच्च भूमिगम्
व्यापन्नं परिहर्त्तव्यं सर्वदोषप्रकोपणम् ८०
तत् कुर्यात्स्नानपानाभ्यां तृष्णाऽध्मानचिरज्वरान्
कासाग्निमान्द्याभिष्यन्दकण्डूगण्डादिकं तथा ८१
निन्दितं चापि पानीयं क्वथितं सूर्यतापितम्
सुवर्णं रजतं लौहं पाषाणं सिकतामपि ८२
भृशं सन्ताप्य निर्वाप्य सप्तधा साधितं तथा
कर्पूरजातिपुन्नागपाटलादिसुवासितम् ८३

शुचिसान्द्रपटस्त्रावि क्षुद्रजन्तुविवर्जितम्
स्वच्छं कनकमुक्ताऽद्यै शुद्धं स्याद्दोषवर्जितम् ८४
पर्णमूलविसग्रन्थिमुक्ताकनकशैवलैः
गोमेदेन च वस्त्रेण कुर्य्यादम्बुप्रसादनम् ८५
पीतं जलं जीर्य्यति यामयुग्माद्यामैकमात्राच्छृतशीतलञ्च
तदर्धमात्रेण शृतं कदुष्णं पयःप्रपाके त्रय एव कालाः ८६
इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
मिश्रप्रकरणे त्रयोदशो वारिवर्गः समाप्त १३

## अथ दुग्धवर्गः

दुग्धं क्षीरं पयः स्तन्यं बालजीवनमित्यपि
दुग्धं सुमधुरं स्निग्धं वातपित्तहरं सरम् १
सद्यः शुक्रकरं शीतं सात्म्यं सर्वशरीरिणाम्
जीवनं बृहणं बल्यं मेध्यं वाजीकरं परम्
वयःस्थापनमायुष्यं सन्धिकारि रसायनम् २
विरेकवान्तिवस्तीनां सेव्यमोजोविवर्द्धनम् ३
जीर्णज्वरे मनोरोगे शोषमूर्च्छाभ्रमेषु च
ग्रहण्यां पाण्डुरोगे च दाहे तृषि हृदामये ४
शूलोदावर्त्तगुल्मेषु वस्तिरोगे गुदाङ्कुरे
रक्तपित्तेऽतिसारे च योनिरोगे श्रमे क्लमे ५
गर्भस्त्रावे च सततं हितं मुनिवरैः स्मृतम्
बालवृद्धक्षतक्षीणाः क्षुद्व्यवायकृशाश्च ये
तेभ्यः सदाऽतिशयितं हितमेतदुदाहृतम् ६
गव्यं दुग्धं विशेषेण मधुरं रसपाकयोः
दोषधातुमलस्त्रोतः किञ्चित्क्लेदकरं गुरु ७
शीतलं स्तन्यकृत्स्निग्धं वातपित्तास्त्रनाशनम्
जरासमस्तरोगाणां शान्तिकृत् सेविनां सदा ८
कृष्णाया गोर्भवेद् दुग्धं वातहारि गुणाधिकम् ९
पीताया हरते पित्तं तथा वातहरं भवेत्
श्लेष्मलं गुरु शुक्लाया रक्ता चित्रा च वातहृत् १०

बालवत्सविवत्सानां गवां दुग्धं त्रिदोषकृत् ११
वष्कयिरयास्त्रिदोषघ्नं तर्पणं बलकृत्पयः १२
जाङ्गलानूपशैलेषु चरन्तीनां यथोत्तररम्
पयो गुरुतरं स्नेहो यथाऽहारं प्रवर्त्तते १३
स्वल्पान्नभक्षणाज्जातं क्षीरं गुरु कफप्रदम्
तत्तु बल्यं परं वृष्यं स्वस्थानां गुणदायकम्
पलालतृणकार्पासबीजजं रोगिणे हितम् १४
माहिषं मधुरं गव्यात्स्निग्धं शुक्रकरं गुरु
निद्राकरमभिष्यन्दि क्षुधाऽधिक्यहरं हिमम् १५
छागं कषायं मधुरं शीतं ग्राहि तथा लघु
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् १६
अजानामल्पकायत्वात्कटुतिक्तनिषेवणात्
स्तोकाम्बुपानाद्व्यायामात्सर्वरोगापहं पयः १७
मृगीणां जाङ्गलोत्थानामजाक्षीरगुणं पयः १८
आविकं लवणं स्वादु स्निग्धोष्णं चाश्मरीप्रणुत्
अहृद्यं तर्पणं केश्यं शुक्रपित्तकफप्रदम्
गुरु कासानिलोद्भूते केवले चानिले वरम् १९
रूक्षोष्णं वडवाक्षीरं बल्यं शोषानिलापहम्
अम्लं पटु लघु स्वादु सर्वमेकशफं तथा २०
औष्ट्रं दुग्धं लघु स्वादु लवणं दीपनं तथा
कृमिकुष्ठकफानाहशोथोदरहरं सरम् २१
बृंहणं हस्तिनीदुग्धं मधुरं तुवरं गुरु
वृष्यं बल्यं हिमं स्निग्धं चक्षुष्यं स्थिरताकरम् २२
भार्या लघु पयः शीतं दीपनं वातपित्तजित्
चक्षुः शूलाभिवातघ्नं नस्याश्च्योतनयोर्वरम् २३
धारोष्णं गोपयो बल्यं लघु शीतं सुधासमम्
दीपनञ्च त्रिदोषघ्नं तद्धाराशिशिरं त्यजेत् २४
धारोष्णं शस्यते गव्यं धाराशीतन्तु माहिषम्
शृतोष्णमाविकं पथ्यं शृतशीतमजापयः २५
आमं क्षीरमभिष्यन्दि गुरु श्लेष्मामवर्द्धनम्

ज्ञेयं सर्वमपथ्यं तु गव्यमाहिषवर्जितम् २६
नारीक्षीरं त्वाममेव हितं न तु शृतं हितम्
शृतोष्णं कफवातघ्नं शृतशीतन्तु पित्तनुत् २७
अर्द्धोदकं क्षीरशिष्टमामाल्लघुतरं पयः
जलेन रहितं दुग्धमतिपक्वं यथा यथा
तथा तथा गुरु स्निग्धं वृष्यं बलविवर्धनम् २८
क्षीरं तत्कालसूताया घनं पीयूषमुच्यते
नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटकः २९
अपक्वमेव यन्नष्टं क्षीरशाकं हि तत्पयः ३०
दध्ना तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा
द्रवभावेन सहितं तक्रपिण्डः स उच्यते ३१
नष्टदुग्धभवं नीरं मोरटं जेज्जटोऽब्रवीत्
पीयूषञ्च किलाटञ्च क्षीरशाकं तथैव च ३२
तक्रपिण्ड इमे वृष्या बृंहणा बलवर्द्धनाः
गुरवः श्लेष्मला हृद्या वातपित्तविनाशनाः ३३
दीप्ताग्नीनां विनिद्राणां विद्रधौ चाभिपूजिताः
मुखशोष तृषा दाह रक्त पित्त ज्वरप्रणुत्
लघुर्बलकरो रुच्यो मोरटः स्यात्सितायुतः ३४
सन्तानिका गुरुः शीता वृष्या पित्तास्रवातनुत्
तर्पणी वृंहणी स्निग्धा बलासबलशुक्रला ३५
खण्डेन सहितं दुग्धं कफकृत्पवनापहम्
सितासितोपलायुक्तं शुक्रलं त्रिमलापहम्
सगुडं मूत्रकृच्छ्रघ्नं पित्तश्लेष्मकरं परम् ३६
रात्रौ चन्द्रगुणाधिक्याद्व्यायामाकरणात्तथा
प्राभातिकं पयः प्रायः प्रादोषाद् गुरु शीतलम् ३७
दिवाकरकराघाताद्व्यायामानिलसेवनात्
प्राभातिकात्तु प्रादोषं लघु वातकफापहम् ३८
वृष्यं बृंहणमग्निदीपनकरं पूर्वाह्णकाले पयो
मध्याह्ने तु बलावहं कफहरं पित्तापहं दीपनम्
बाले बृद्धिकरं क्षयेऽक्षयकरं वृद्धेषु रेतोवहं

रात्रौ पथ्यमनेकदोषशमनं चक्षुर्हितं संस्मृतम् ३९
वदन्ति पेयं निशि केवलं पयो भोज्यं न तेनेह सहौदनादिकम्
भवत्यजीर्णे न शयीत शर्वरीं क्षीरस्य पीतस्य न शेषमुत्सृजेत् ४०
विदाहीन्यन्नपानानि दिवा भुङ्क्ते हि यन्नरः
तद्विदाहप्रशान्त्यर्थं रात्रौ क्षीरं सदा पिबेत् ४१
दीप्तानले कृशे पुंसि बाले वृद्धे पयःप्रिये
मतं हिततमं दुग्धं सद्यःशुक्रकरं यतः ४२
क्षीरं गव्यमथाजं वा कोष्णं दण्डाहतं पिबेत्
लघु वृष्यं ज्वरहरं वातपित्तकफापहम् ४३
गोदुग्धप्रभवं किं वा छागीदुग्धसमुद्भवम्
भवेत् फेनं त्रिदोषघ्नं रोचनं बलवर्द्धनम् ४४
वह्निबृद्धिकरं वृष्यं सद्यस्तृप्तिकरं लघु
अतीसारेऽग्निमान्द्ये च ज्वरे जीर्णे प्रशस्यते ४५
विवर्णं विरसं चाम्लं दुर्गन्धं ग्रथितं पयः
वर्जयेदम्ललवणयुक्तं कुष्ठादिकृद् यतः ४६

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
मिश्रप्रकरणे चतुर्दशो दुग्धवर्गः समाप्तः १४

अथ दधिवर्गः

दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु
पाकेऽम्ल ग्राहि पित्तास्रशोथमेदः कफप्रदम् १
मूत्रकृच्छ्रे प्रतिश्याये शीतगे विषमज्वरे
अतीसारेऽरुचौ कार्श्ये शस्यते बलशुक्रकृत् २
आदौ मन्दं ततः स्वादु स्वाद्वम्लञ्च ततःपरम्
अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा ३
मन्दं दुग्धवदव्यक्तरसं किञ्चिद्घनं भवेत्
मन्दं स्यात्सृष्टविण्मूत्रं दोषत्रयविदाहकृत् ४
यत्सम्यग्घनतां यातं व्यक्तस्वादुरसं भवेत्
अव्यक्ताम्लरसं तत्तु स्वादु विज्ञैरुदाहृतम् ५
स्वादु स्यादत्यभिष्यन्दि वृष्यं मेदःकफावहम्

वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम् ६
स्वाद्वम्लं सान्द्रमधुरं कषायानुरसं भवेत्
स्वाद्वम्लस्य गुणा ज्ञेया सामान्यदधिवज्जनैः ७
यत्तिरोहितमाधुर्यं व्यक्ताम्लत्वं तदम्लकम्
अम्लं तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनम् ८
तदत्यम्लं दन्तरोमहर्षकण्ठादिदाहकृत्
अत्यम्लं दीपनं रक्तवातपित्तकरं परम् ९
गव्यं दधि विशेषेण स्वाद्वम्लं च रुचिप्रदम्
पवित्रं दीपनं हृद्यं पुष्टिकृत्पवनापहम्
उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम् १०
माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत्
स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्रदूषकम् ११
आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम्
शस्यते श्वासकासार्शः क्षयकार्श्येषु दीपनम् १२
पक्वदुग्धभवं रुच्यं दधि स्निग्धं गुणोत्तमम्
पित्तानिलापहं सर्वधात्वग्निबलवर्द्धनम् १३
असारं दधि सङ्ग्राहि शीतलं वातलं लघु
विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम् १४
गालितं दधि सुस्निग्धं वातघ्नं कफकृद् गुरु
बलपुष्टिकरं रुच्यं मधुरं नातिपित्तकृत् १५
सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित्
सगुडं वातनुद् वृष्यं बृंहणं तर्पणं गुरु १६
न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम्
नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना १७
हेमन्ते शिशिरे चापि वर्षासु दधि शस्यते
शरद्ग्रीष्मवसन्तेषु प्रायशस्तद्विगर्हितम् १८
ज्वरासृक्पित्त वीसर्पकुष्ठपाण्ड्वामयभ्रमान्
प्राप्नुयात्कामलां चोग्रां विधिं हत्वा दधिप्रियः १९
दध्नस्तूपरि यो भागो घनः स्नेहसमन्वितः
स लोके सर इत्युक्तो दध्नो मण्डस्तु मस्त्विति २०

सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः
सोऽम्लो वस्तिप्रशमनः पित्तश्लेष्मविवर्द्धनः २१
मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत् २२
स्रोतोविशोधनं ह्लादि कफतृष्णानिलापहम्
अवृष्यं प्रीणनं शीघ्रं भिनत्ति मलसञ्चयम् २३
इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
मिश्रप्रकरणे पञ्चदशो दधिवर्गः समाप्तः १५

अथ तक्रवर्गः

घोलं तु मथितं तक्रमुदश्विच्छच्छिकाऽपि च
ससरं निर्जलं घोलं मथितं त्वसरोदकम् १
तक्रं पादजलं प्रोक्तमुदश्वित्त्वर्द्धवारिकम्
छच्छिका सारहीना स्यात्स्वच्छा प्रचुरवारिका
घोलं तु शर्करायुक्तं गुणैर्ज्ञेयं रसालवत् २
वातपित्तहरं ह्लादि मथितं कफपित्तनुत् ३
तक्रं ग्राहि कषायाम्लं स्वादुपाकरसं लघु
वीर्योष्णं दीपनं वृष्यं प्रीणनं वातनाशनम् ४
ग्रहण्यादिमतां पथ्यं भवेत्संग्राहि लाघवात्
किञ्च स्वादुविपाकित्वान्न च पित्तप्रकोपणम् ५
अम्लोष्णं दीपनं वृष्यं प्रीणनं वातनाशनम्
कषायोष्णविकाशित्वाद्रौक्ष्याच्चापि कफापहम् ६
न तक्रसेवी व्यथते कदाचिन्न तक्रदग्धाः प्रभवन्ति रोगाः
यथा सुराणाममृतं सुखाय तथा नराणां भुवि तक्रमाहुः ७
उदश्वित् कफकृद् बल्यमामघ्नं परमं मतम्
छच्छिका शीतला लघ्वी पित्तश्रमतृषाहरी
वातनुत् कफकृत् सा तु दीपनी लवणान्विता ८
समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः ९
स्तोकोद्धृतघृतं तस्माद् गुरु वृष्यं कफापहम्
अनुद्धृतघृतं सान्द्रं गुरुपुष्टिकफप्रदम् १०
वातेऽम्ल शस्यते तक्रं शुण्ठीसैन्धवसंयुतम्

पित्ते स्वादु सितायुक्तं व्योषक्षारयुतं कफे ११
हिङ्गुजीरयुतं घोलं सैन्धवेन च संयुतम्
भवेदतीव वातघ्नमर्शोऽतीसारहृत्परम् १२
रुचिदं पुष्टिदं बल्यं वस्तिशूलविनाशनम्
मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम् १३
तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च
पीनसश्वासकासादौ पक्वमेव प्रयुज्यते १४
शीतकालेऽग्निमान्द्ये च तथा वातामयेषु च
अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम्
तत्तु हन्ति गरच्छर्दिप्रसेकविषमज्वरान्
पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्दरान् १५
मेहं गुल्ममतीसारं शूलप्लीहोदरारुचीः
श्वित्रकोष्ठगतव्याधीन् कुष्ठशोथतृषाकृमीन् १६
नैव तक्रं क्षये दद्यान्नोष्णकाले न दुर्बले
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपित्तजे १७
यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत् १८

इति श्रीमिश्रलटक ननतय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
षोडशस्तक्रवर्गः समाप्तः १६

## अथ नवनीत वर्गः

म्रक्षणं सरजं हैयङ्गवीनं नवनीतकम्
नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत् १
संग्राहि वातपित्तासृक्क्षयार्शोऽदितकासहृत्
तद्धितं बालके वृद्धे विशेषादमृतं शिशोः २
नवनीतं महिष्यास्तु वातश्लेष्मकरं गुरु
दाहपित्तश्रमहरं मेदः शुक्रविवर्द्धनम् ३
दुग्धोत्थं नवनीतं तु चक्षुष्यं रक्तपित्तनुत्
वृष्यं बल्यमतिस्निग्धं मधुरं ग्राहि शीतलम् ४
नवनीतं तु सद्यस्कं स्वादु ग्राहि हिमं लघु
मेध्यं किञ्चित्कषायाम्लमीषत्तक्रांश सङ्क्रमात् ५

सक्षारकटुकाम्लत्वाच्छर्द्यर्शःकुष्ठकारकम्
श्लेष्मलं गुरु मेदस्यं नवनीतं चिरन्तनम् ६
इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
मिश्रप्रकरणे सप्तदशो नवनीतवर्गः समाप्तः १७

अथ घृतवर्गः
घृतमाज्यं हविः सर्पिः कथ्यन्ते तद्गुणा अथ
घृतं रसायनं स्वादु चक्षुष्यं वह्निदीपनम् १
शीतवीर्यविषालक्ष्मीपापपित्तानिलापहम्
अल्पाभिष्यन्दि कान्त्योजस्तेजोलावण्यवृद्धिकृत् २
स्वरस्मृतिकरं मेध्यमायुष्यं बलकृद्गुरु
उदावर्त्तज्वरोन्मादशूलानाहव्रणान् हरेत्
स्निग्धं कफकरं रक्षःक्षयवीसर्परक्तनुत् ३
गव्यं घृतं विशेषेण चक्षुष्यं वृष्यमग्निकृत्
स्वादु पाककरं शीतं वातपित्तकफापहम् ४
मेधालावण्यकान्त्योजस्तेजोवृद्धिकरं परम्
अलक्ष्मीपापरक्षोघ्नं वयसः स्थापकं गुरु ५
बल्यं पवित्रमायुष्यं सुमङ्गल्यं रसायनम्
सुगन्धं रोचनं चारु सर्वाज्येषु गुणाधिकम् ६
माहिषन्तु घृतं स्वादु पित्तरक्तानिलापहम्
शीतलं श्लेष्मलं वृष्यं गुरु स्वादु विपच्यते ७
आजमाज्यं करोत्यग्निं चक्षुष्यं बलवर्द्धनम्
कासे श्वासे क्षये चापि हितं पाके भवेत् कटु ८
औष्ट्रं कटु घृतं पाके शोषकृमिविषापहम्
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ९
पाके लघ्वाविकं सर्पिः सर्वरोगविनाशनम् १०
वृद्धिं करोति चास्थ्नां वा अश्मरीशर्कराऽपहम्
चक्षुष्यमग्निसंधुक्ष्यं वातदोषनिवारणम् ११
कफेऽनिले योनिदोषे पित्ते रक्ते च तद्धितम्
चक्षुष्यमाज्यं स्त्रीणां वा सर्पिः स्यादमृतोपमम् १२

वृद्धिं करोति देहाग्नेर्लघु पाके विषापहम्
तर्पणं नेत्ररोगघ्नं दाहनुद् वडवाघृतम् १३
घृतं दुग्धभवं ग्राहि शीतलं नेत्ररोगहृत्
निहन्ति पित्तदाहास्रमदमूर्च्छाभ्रमानिलान् १४
हविर्ह्यस्तनदुग्धोत्थं तत्स्याद्धैयङ्गवीनकम्
हैयङ्गवीनं चक्षुष्यं दीपनं रुचिकृत्परम्
बलकृद् बृंहणं वृष्यं विशेषाज्ज्वरनाशनम् १५
बर्षादूर्ध्वं भवेदाज्यं पुराणं तत् त्रिदोषनुत्
मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम् १६
यथा यथा ऽखिलं सर्पिः पुराणमधिकं भवेत्
तथा तथा गुणैः स्वैः स्वैरधिकं तदुदाहृतम् १७
योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे
बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः १८
राजयक्ष्मणि बाले च वृद्धे श्लेष्मकृते गदे १९
रोगे सोमे विषूच्याञ्च विबन्धे च मदात्यये
ज्वरे च दहने मन्दे न सर्पिर्बहु मन्यते २०
इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
मिश्रप्रकरणेऽष्टादशो घृतवर्गः समाप्तः १८

अथ मूत्रवर्गः

गोमूत्रं कटु तीक्ष्णोष्णं क्षारं तिक्तकषायकम्
लघ्वग्निदीपनं मेध्यं पित्तकृत्कफवातहृत् १
शूलगुल्मोदरानाहकण्ड्वक्षिमुखरोगजित्
किलासगदवातामवस्तिरुक्कुष्ठनाशनम्
कासश्वासापहं शोथकामलापाण्डुरोगहृत् २
कण्डूकिलासगदशूलमुखाक्षिरोगान्गुल्मातिसारमरुदामयमूत्ररोधान्
कासं सकुष्ठजठरकृमिपाण्डुरोगान्गोमूत्रमेकमपि पीतमपाकरोति ३
सर्वेष्वपि च मूत्रेषु गोमूत्रं गुणतोऽधिकम्
अतोऽविशेषात्कथने मूत्रं गोमूत्रमुच्यते ४
प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् ५

शूलगुल्मरुजाऽनाहकामलापाण्डुरोगहृत्
कषायं तिक्ततीक्ष्णं च पूरणात्कर्णशूलहृत् ६
नरमूत्रं गरं हन्ति सेवितं तद्रसायनम्
रक्तपामाहरं तीक्ष्णं सक्षारलवणं स्मृतम् ७
गोऽजाऽविमहिषीणां तु स्त्रीणां मूत्रं प्रशस्यते
खरोष्ट्रेभनराश्वानां पुंसां मूत्रं हितं स्मृतम् ८
इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
एकोनिविंशो मूत्रवर्गः समाप्तः १९

अथ तैलवर्गः

तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम्
तत्तु वातहरं सर्वं विशेषात्तिलसम्भवम् १
तिलतैलं गुरु स्थैर्यबलवर्णकरं सरम्
वृष्यं विकाशि विशदं मधुरं रसपाकयोः २
सूक्ष्मं कषायानुरसं तिक्तं वातकफापहम्
वीर्येणोष्णं हिमं स्पर्शे बृंहणं रक्तपित्तकृत् ३
लेखनं बद्धविण्मूत्रं गर्भाशयविशोधनम्
दीपनं बुद्धिदं मेध्यं व्यवायि व्रणमेहनुत् ४
श्रोत्रयोनिशिरःशूलनाशनं लघुताकरम्
त्वच्यं केश्यं च चक्षुष्यमभ्यङ्गे भोजनेऽन्यथा ५
छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्चिते
भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते ६
तथाऽभिहतनिर्भुग्नमृगव्याघ्रादिविक्षते
वस्तौ पानेऽन्नसंस्कारे नस्ये कर्णाक्षिपूरणे
सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ७
रूक्षादिदुष्टः पवनः स्रोतः संकोचयेद् यदा
रसोऽसम्यग्वहन् कार्श्यं कुर्याद्रक्तान्यवर्द्धयन् ८
तेषु प्रवेष्टुं सरतासौक्ष्म्यस्निग्धत्वमार्दवैः
तैलं क्षमं रसं नेतुं कृशानां तेन बृंहणम् ९
व्यवायिसूक्ष्मतीक्ष्णोष्णसरत्वैर्मेदसः क्षयम्

शनैः प्रकुरुते तैलं तेन लेखनमीरितम् १०
द्रुतं पुरीषं बध्नाति स्खलितं तत्प्रवर्त्तयेत्
ग्राहकं सारकञ्चापि तेन तैलमुदीरितम् ११
घृतमब्दात्परं पक्वं हीनवीर्यं प्रजायते
तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम् १२
दीपनं सार्षपं तैलं कटुपाकरसं लघु
लेखनं स्पर्शवीर्य्योष्णं तीक्ष्णं पित्तास्रदूषकम् १३
कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम्
कण्डूकुष्ठकृमिश्वित्रकोठदुष्टकृमिप्रणुत् १४
तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत् १५
तीक्ष्णोष्णं तुवरी तैलं लघु ग्राहि कफास्रजित्
बह्निकृद्विषहृत्कण्डूकुष्ठकोठकृमिप्रणुत्
मेदोदोषापहं चापि व्रणशोथहरं परम् १६
अतसीतैलमाग्नेयं स्निग्धोष्णं कफपित्तकृत्
कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु १७
मलकृद्रसतः स्वादु ग्राहि त्वग्दोषहृद् घनम् १८
वस्तौ पाने तथाऽभ्यङ्गे नस्ये कर्णस्य पूरणे
अनुपानविधौ चापि प्रयोज्यं वातशान्तये १९
कुसुम्भतैलमम्लं स्यादुष्णं गुरुविदाहि च
चक्षुर्भ्यामहितं बल्यं रक्तपित्तकफप्रदम् २०
तैलं तु खसबीजानां बल्यं वृष्यं गुरुस्मृतम्
वातहृत्कफहृच्छीतं स्वादुपाकरसं च तत् २१
एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु
वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिबलप्रदम् २२
कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम्
विस्रं स्वादु रसे पाके सतिक्तं कटुकं रसम् २३
बिषमज्वरहृद्रोगपृष्ठगुह्यादिशूलनुत्
हन्ति वातोदरानाहगुल्माष्ठीलाकटिग्रहान् २४
वातशोणितविड्बन्धव्रघ्नशोथामविद्रधीन्
आमवातगजेन्द्रस्य शरीरवनचारिणः

एक एव निहन्ताऽयमैरराडस्नेहकेसरी २५
तैलं सर्जरसोद्भूतं विस्फोटव्रणनाशनम्
कुष्ठपामाकृमिहरं वातश्लेष्मामयापहम् २६
तैलं स्वयोनिगुणकृद्वाग्भटेनाखिलं मतम्
अतः शेषस्य तैलस्य गुणा ज्ञेयाः स्वयोनिवत् २७
इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
मिश्रप्रकरणे विंशस्तैलवर्गः समाप्तः २०

अथ सन्धानवर्गः

सन्धितं धान्यमराडादि काञ्जिकं कथ्यते जनैः
काञ्जिकं भेदि तीक्ष्णोष्णं रोचनं पाचनं लघु १
दाहज्वरहरं स्पर्शात्पानाद्वातकफापहम्
माषादिवटकैर्यत्तु क्रियते तद् गुणाधिकम् २
लघु वातहरं तत्तु रोचनं पाचनं परम्
शूलाजीर्णविबन्धामनाशनं वस्तिशोधनम् ३
शोषमूर्च्छाभ्रमार्त्तानां मदकराडूविशोषिणाम्
कुष्ठिनां रक्तपित्तीनां काञ्जिकं न प्रशस्यते ४
पाराडुरोगे यक्ष्मणि च तथा शोषातुरेषु च
क्षतक्षीणे तथा श्रान्ते मन्दज्वरनिपीडिते
एतेषां न हितं प्रोक्तं काञ्जिकं दोषकारकम् ५
तुषोदकं यवैरामैः सतुषैः शकलीकृतैः ६
तुषाम्बु दीपनं हृद्यं पाराडुकृमिगदापहम्
तीक्ष्णोष्णं पाचनं पित्तरक्तकृद्वस्तिशूलनुत् ७
सौवीरं तु यवैरामैः पक्वैर्वा निस्तुषैः कृतम्
गोधूमैरपि सौवीरमाचार्याः केचिदूचिरे ८
सौवीरं तु ग्रहरायर्शःकफघ्नं भेदि दीपनम्
उदावर्त्ताङ्गमर्दास्थिशूलानाहेषु शस्यते ९
आरनालं तु गोधूमैरामैः स्यान्निस्तुषीकृतैः
पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः १०
धान्याम्लं शालिचूर्णं च कोद्रवादिकृतं भवेत्

धान्याम्लं धान्ययोनित्वात्प्रीणनं लघु दीपनम्
अरुचौ वातरोगेषु सर्वेष्वास्थापने हितम् ११
शिण्डाकी राजिकायुक्तैः स्यान्मूलकदलद्रवैः
सर्षपस्वरसैर्वाऽपि शालिपिष्टकसंयुतैः १२
शिण्डाकी रोचनी गुर्वी पित्तश्लेष्मकरी स्मृता १३
कन्दमूलफलादीनि सस्नेहलवणानि च
यत्र द्रवेऽभिषूयन्ते तच्छुक्तमभिधीयते १४
शुक्तं कफघ्नं तीक्ष्णोष्णं रोचनं पाचनं लघु
पाण्डुकृमिहरं रूक्षं भेदनं रक्तपित्तकृत् १५
कन्दमूलफलाढ्यं यत्तु विज्ञेयमासुतम्
तद्रुच्यं पाचनं वातहरं लघु विशेषतः १६
मद्यन्तु सीधुमैरेयमिरा च मदिरा सुरा
कादम्बरी वारुणी च हालाऽपि बलवल्लभा १७
पेयं यन्मादकं लोकैस्तन्मद्यमभिधीयते
यथाऽरिष्टं सुरा सीधुरासवाद्यमनेकधा १८
मद्यं सर्वं भवेदुष्णं पित्तकृद्वातनाशनम्
भेदनं शीघ्रपाकं च रूक्षं कफहरं परम् १९
अम्लं च दीपनं रुच्यं पाचनं चाशुकारि च
तीक्ष्णं सूक्ष्मं च विशदं व्यवायि च विकाशि च २०
पक्वौषधाम्बुसिद्धं यन्मद्यं तत्स्यादरिष्टकम् २१
अरिष्टं लघुपाकेन सर्वतश्च गुणाधिकम्
अरिष्टस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः २२
शालिषष्टिकपिष्टादिकृतं मद्यं सुरा स्मृता
सुरा गुर्वी बलस्तन्यपुष्टिमेदःकफप्रदा
ग्राहिणी शोथगुल्मार्शोग्रहणीमूत्रकृच्छ्रनुत् २३
पुनर्नवाशिलापिष्टैर्विहिता वारुणी स्मृता
संहितैस्तालखर्जूररसैर्या साऽपि वारुणी
सुरावद्वारुणी लघ्वी पीनसाध्मानशूलनुत् २४
इक्षोः पक्वै रसैः सिद्धः सीधुः पक्वरसश्च सः
आमैस्तैरेव यः सीधुः स च शीतरसः स्मृतः २५

सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत्
वातपित्तकरः सद्यः स्नेहनो रोचनो हरेत् २६
विबन्धमेदः शोफार्शः शोफोदरकफामयान्
तस्मादल्पगुणः शीतरसः संलेखनः स्मृतः २७
यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः २८
आसवस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः २९
मद्यं नवमभिष्यन्दि त्रिदोषजनकं सरम्
अहृद्यं बृंहणं दाहि दुर्गन्धं विशदं गुरु ३०
जीर्णं तदेव रोचिष्णु कृमिश्लेष्मानिलापहम्
हृद्यं सुगन्धि गुणवल्लघु स्रोतोविशोधनम् ३१
सात्त्विकेगीतहास्यादि राजसे साहासादिकम्
तामसे निन्द्यकर्माणि निद्राञ्च मदिराऽचरेत् ३२
विधिना मात्रया काले हितैरन्नैर्यथाबलम्
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ३३
किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथाऽमृतम् ३४
मुस्तैलवालुगदजीरकधान्यकैला यश्चर्वयन्सदसि वाचमभिव्यनक्ति
स्वाभाविकं मुखजमुञ्झति पूतिगन्धं गन्धञ्च मद्यलशुनादि भवञ्च नूनम् ३५

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
मिश्रप्रकरणे एकविंशः सन्धानवर्गः समाप्तः २१

अथ मधुवर्गः

मधु माक्षिक माध्वीकक्षौद्रसारघमीरितम्
मक्षिकावरटीभृङ्गवान्तं पुष्परसोद्भवम् १
मधु शीतं लघु स्वादु रूक्षं ग्राहि विलेखनम्
चक्षुष्यं दीपनं स्वर्यं व्रणशोधनरोपणम् २
सौकुमार्यकरं सूक्ष्मं परं स्रोतोविशोधनम्
कषायानुरसं ह्लादि प्रसादजनकं परम् ३
वर्ण्यं मेधाकरं वृष्यं विशदं रोचनं हरेत्
कुष्ठार्शःकास पित्तास्र कफ मेह क्लमकृमीन् ४

मेदस्तृष्णा वमिश्वास हिक्काऽतीसारविड्ग्रहान्
दाहक्षतक्षयांस्तत्तु योगवाह्यल्पवातलम् ५
माक्षिकं भ्रामरं क्षौद्रं पौत्तिकंछात्रमित्यपि
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ६
मक्षिकाः पिङ्गवर्णास्तु महत्यो मधुमक्षिकाः
ताभिः कृतं तैलवर्णं माक्षिकं परिकीर्त्तितम् ७
माक्षिकं मधुषु श्रेष्ठं नेत्रामयहरं लघु
कामलाऽर्शक्षतश्वासकासक्षयविनाशनम् ८
किञ्चित्सूक्ष्मैः प्रसिद्धेभ्यः षट्पदेभ्योऽलिभिश्चितं
निर्मलं स्फटिकाभं यत्तन्मधु भ्रामरं स्मृतम् ९
भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु
स्वादुपाकमभिष्यन्दि विशेषात्पिच्छिलं हिमम् १०
मक्षिकाःकपिलाः सूक्ष्माः क्षुद्राऽख्यास्तत्कृतं मधु
मुनिभिः क्षौद्रमित्युक्तंतद्वर्णात्कपिलं भवेत्
गुणैर्माक्षिकवत्क्षौद्रं विशेषान्मेहनाशनम् ११
कृष्णा या मशकोपमा लघुतराः प्रायो महापीडिका
वृक्षाणां पृथुकोटरान्तरगताः पुष्पासवं कुर्वते
तास्तज्ज्ञैरिह पुत्तिका निगदितास्ताभिः कृतं सर्पिषा
तुल्यं यन्मधु तद्वनेचरजनैः संकीर्तितं पौत्तिकम् १२
पौत्तिकं मधु रूक्षोष्णं पित्तदाहास्रवातकृत्
विदाहि मेहकृच्छ्रघ्नं ग्रन्थ्यादिक्षतशोषि च १३
वरटाः कपिलाः पीताः प्रायो हिमवतो वने १४
कुर्वन्ति च्छत्रकाकारं तज्जं छात्रं मधु स्मृतम्
छात्रं कपिलपीतं स्यात्पिच्छिलं शीतलं गुरु १५
स्वादुपाकं कृमिश्वित्ररक्तपित्तप्रमेहजित्
भ्रमतृण्मोहविषहृत्तर्पणञ्चगुणाधिकम् १६
मधूकवृक्षनिर्यासं जरत्कार्वाश्रभोद्भवम्
स्रवत्यार्घ्यं तदाख्यातं श्वेतकं मालवे पुनः १७
तीक्ष्णतुण्डास्तु याः पीता मक्षिकाः षट्पदोपमाः
अर्घ्यास्तास्तत्कृतं यत्तदार्घ्यमित्यपरे जगुः १८

आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम्
कषायं कटुकं पाके तिक्तञ्च बलपुष्टिकृत् १९
प्रायो वल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः
कुर्वन्ति कपिलं स्वल्पं तत्स्यादौद्दालकं मधु २०
औद्दालकं रुचिकरं स्वर्यं कुष्ठविषापहम्
कपायमुष्णमम्लञ्च कटुपाकञ्च पित्तकृत् २१
संस्रुत्य पतितं पुष्पाद्यत्तु पत्रोपरि स्थितम्
मधुराम्लकषायञ्च तद्दालं मधु कीर्त्तितम् २२
दालं मधु लघु प्रोक्तं दीपनीयं कफापहम्
कषायानुरसं रूक्षं रुच्यं छर्दिप्रमेहजित् २३
अधिकं मधुरं स्निग्धं बृंहणं गुरु भारिकम् २४
नवं मधुभवेत्पुष्टयै नातिश्लेष्महरं सरम्
पुराणं ग्राहकं रूक्षं मेदोघ्नमतिलेखनम् २५
मधुनः शर्करायाश्च गुडस्यापि विशेषतः
एकसंवत्सरे वृत्ते पुराणत्वं स्मृतं बुधैः २६
विषपुष्पादपि रसं सविषा भ्रमरादयः
गृहीत्वा मधु कुर्वन्ति तच्छीतं गुणवन्मधु २७
विषान्वयात्तदुष्णान्तु द्रव्येणोष्णेन वा सह
उष्णार्त्तस्योष्णकाले च स्मृतं विषसमं मधु २८
मयनं तु मधूच्छिष्टं मधुशेषं च सिक्थकम्
मध्वाधारो मदनकं मधूषितमति स्मृतम् २९
मदनं मृदु सुस्निग्धं भूतघ्नं व्रणरोपणम्
भग्नसन्धान्कृद्वातकुष्ठवीसर्परक्तजित् ३०

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
द्वाविंशो मधुवर्गः समाप्तः २२

अथ इक्षुवर्गः

इक्षुर्दीर्घच्छदः प्रोक्तस्तथा भूरिरसोऽपि च
गुडमूलोऽसिपत्रश्च तथा मधुतृणः स्मृतः १
इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः

स्वादुपाकरसाः स्निग्धाः गुरवो मूत्रला हिमाः २
पौण्ड्रको भीरुकश्चापि वंशकः शतपोरकः
कान्तारतापसेक्षुश्च काण्डेक्षुः सूचिपत्रकः ३
नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत्
मनोगुप्ता च इत्येता जातयस्तत्र कीर्त्तिताः ४
वातपित्तप्रशमनो मधुरो रसपाकयोः
सुशीतो वृंहणो बल्यः पौण्ड्रको भीरुकस्तथा ५
कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः ६
कान्तारेक्षुर्गुरुर्वृष्यः श्लेष्मलो वृंहणः सरः ७
दीर्घपोरः सुकठिनः सक्षारो वंशकः स्मृतः ८
शतपर्वा भवेत्किञ्चित्कोशकारगुणान्वितः
विशेषात्किञ्चिदुष्णश्च सक्षारः पवनापहः ९
तापसेक्षुर्भवेन्मृद्वी मधुरा श्लेष्मकोपनी
तर्पणी रुचिकृच्चापि वृष्या च बलकारिणी १०
एवं गुणैस्तु काण्डेक्षुः स तु वातप्रकोपणः ११
सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः १२
मनोगुप्ता वातहरी तृष्णाऽमयविनाशिनी
सुशीता मधुराऽतीव रक्तपित्तप्रणाशिनी १३
बालइक्षुः कफं कुर्य्यान्मेदोमेहकरश्च सः
युवा तु वातहृत् स्वादुरीषत्तीक्ष्णश्च पित्तनुत्
रक्तपित्तहरो वृद्धः क्षतहृद्बलवीर्यकृत् १४
मूले तु मधुरोऽत्यर्थं मध्येऽपि मधुरः स्मृतः
अग्रे ग्रन्थिषु विज्ञेय इक्षुः पटुरसोजनैः १५
दन्तनिष्पीडितस्येक्षो रसः पित्तास्रनाशनः
शर्करासमवीर्यः स्यादविदाही कफप्रदः १६
मूलाग्रजन्तुग्रन्थ्यादिपीडनान्मलसङ्कराद्
किञ्चित्कालविधृत्या च विकृतिं याति यान्त्रिकः
तस्माद्विदाही विष्टम्भी गुरुः स्याद्यान्त्रिको रसः १७
रसः पर्युषितो नेष्टो ह्यम्लो वातापहो गुरुः

कफपित्तकरः शोषी भेदनश्चातिमूत्रलः १८
पक्वो रसो गुरुः स्निग्धः सुतीक्ष्णः कफवातनुत्
गुल्मानाहप्रशमनः किञ्चित्पित्तकरः स्मृतः १९
इक्षोर्विकारास्तृड्दाहमूर्छापित्तास्रनाशनः
गुरवो मधुरा बल्याः स्निग्धा वातहराः सराः
वृष्या मोहहराः शीता वृंहणा विषहारिणः २०
इक्षो रसस्तु यः पक्वः किञ्चिद्गाढो बहुद्रवः
स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया
फाणितं गुर्वभिष्यन्दि वृंहणं कफशुक्रकृत्
वातपित्तश्रमान्हन्ति मूत्रवस्तिविशोधनम् २१
इक्षो रसो यः सम्पक्वो घनः किञ्चिद्द्रवान्वितः २२
मन्दं यत्स्यन्दते तस्मात्तन्मत्स्यण्डी निगद्यते
मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा
मधुरा बृंहणी वृष्या रक्तदोषापहा स्मृता २३
इक्षो रसो यः सम्पन्नो जायते लोष्टवद् दृढः २४
स गुडो गौडदेशे तु मत्स्यण्ड्येव गुडो मतः
गुडो वृष्यो गुरुः स्निग्धो वातघ्नो मूत्रशोधनः
नातिपित्तहरो मेदःकफकृमिबलप्रदः २५
गुडो जीर्णो लघुः पथ्योऽनभिष्यन्द्यग्निपुष्टिकृत्
पित्तघ्नो मधुरो वृष्यो वातघ्नोऽसृक्प्रसादनः २६
गुडो नवः कफश्वासकासकृमिकरोऽग्निकृत् २७
श्लेष्माणमाशु विनिहन्ति सहार्द्रकेण पित्तं निहन्ति च तदेव हरीतकीभिः
शुण्ठ्या समं हरति वातमशेषमित्थं दोषत्रयक्षयकराय नमो गुडाय २८
खण्डन्तु मधुरं वृष्यं चक्षुष्यं बृंहणं हिमम्
वातपित्तहरं स्निग्धं बल्यं वान्तिहरं परम् २९
खण्डन्तु सिकतारूपं सुश्वेतं शर्करा सिता
सिता सुमधुरा रुच्या वातपित्तास्रदाहहृत्
मूर्च्छाच्छर्दिज्वरान्हन्ति सुशीता शुक्रकारिणी ३०
भवेत्पुष्पसिता शीता रक्तपित्तहरी लघुः
सितोपला सरा लघ्वी वातपित्तहरी हिमा ३१

मधुजा शर्करा रूक्षा कफपित्तहरा गुरुः
छर्द्यतीसारतृड्दाहरक्तहृत्तुवरा हिमा ३२
यथा यथैषां नैर्मल्यं मधुरत्वं यथा यथा
स्नेहलाघवशैत्यादि सरत्वञ्च तथा तथा ३३

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
त्रयोविंश इक्षुवर्गः समाप्तः २३

अक्षशब्दः स्मृतोऽष्टासु सौवर्चलबिभीतके
कर्षपद्माक्षरुद्राक्षशकटेन्द्रियपाशके १
काकाख्यः काकमाची च काकोली काकणन्तिका
काकजङ्घा काकनासा काकोदुम्बरिकाऽपि च
सप्तस्वर्थेषु कथितः काकशब्दो विचक्षणैः २
सर्पद्विरदमेषेषु सीसके नागकेसरे
नागबल्ल्यां नागदन्त्यां नागशब्दः प्रयुज्यते ३
मांसेद्रवे चेक्षुरसे पारदे मधुरादिषु
बोले रागे विषे नीरे रसो नवसु वर्त्तते ४

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे मिश्रप्रकरणे
चतुर्विंशोऽनेकार्थवर्गःसमाप्तः २४

इति भावप्रकाशे पूर्वखण्डे प्रथमभागे द्रव्यगुणप्रकरणापरनामकं षष्ठं
मिश्रप्रकरणं समाप्तम् ६ समाप्तश्चायं निघण्टुभागः

Bhāva Prakāśha, by Bhav Mishra, edited by Brahmashankar Mishra, 1969 edition.
Typed by Pramod Sharma, M.A.
Proofread by Maya Nand Sastri, Ved Vyakaranacharya.
Font conversion by Claude Setzer and Ralph Bunker.
Formatted for Maharishi University of Management Vedic Literature Collection.

# भाव प्रकाशः
## पूर्वखराडे द्वितीयो भागः
### तत्र सप्तमं परिभाषादिप्रकरणम् ७

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित्
ग्रतः प्रयोगकार्यार्थं मानमत्रोच्यते मया १
चरकस्य मतं वैद्यैराद्यैर्यस्मान्मतं ततः
विहाय सर्वमानानि मागधं मानमुच्यते २
त्रसरेणुर्बुधैः प्रोक्तस्त्रिशता परमाणुभिः
त्रसरेणुस्तु पर्यायनाम्ना वंशी निगद्यते ३
जालान्तरगतैः सूर्यकरैर्वंशी विलोक्यते
षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ४
तिसृभी राजिकाभिश्च्न सर्षपः प्रोच्यते बुधैः
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ५
षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधानकौ
माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ६
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते
च्चुद्रको वटकश्चैव द्रङ्च्चणः स निगद्यते ७
कोलद्वयन्तु कर्षः स्यात्स प्रोक्तः पाणिमानिका
ग्रच्चः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् ८
विडालपदकं चैव तथा षोडशिका मता
करमध्यो हंसपदं सुवर्णं कवलग्रहः ९
उदुम्बरञ्च पर्यायैः कर्षमेव निगद्यते
स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा १०
शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका
प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीत्तर्यते ११
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते
प्रसृतिभ्यामञ्जलि स्यात्कुडवोऽद्धशरावकः १२
ग्रष्टमानञ्च स ज्ञेयः कुडवाभ्याञ्च मानिका
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचच्चणैः १३
शरावाभ्यां भवेत्प्रस्थश्चतुः प्रस्थस्तथाऽढकः

भाजनं कांस्यपात्रं च चतुःषष्टिपलश्च सः १४
चतुर्भिराढकैर्द्रोणः कलशो नल्वणोऽमणः
उन्मानञ्चघटो राशिर्द्रोणपर्यायसंज्ञितः १५
द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टिशरावकः
शूर्पाभ्याञ्च भवेद् द्रोणी वाहो गोणी च सा स्मृता १६
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः
चतुःसहस्रपलिका षण्णवत्यधिका च सा १७
पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः
तुलापलशतं ज्ञेयं सर्वत्रैवैष निश्चयः १८
माषटङ्काक्षबिल्वानि कुडवप्रस्थमाढकम्
राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम् १९
गुञ्जाऽदिमानमारभ्य यावत्स्यात्कुडवस्थितिः
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् २०
प्रस्थादिमानमारभ्य द्विगुणं तद् द्रवार्द्रयोः
मानं तथा तुलायास्तु द्विगुणं न क्वचित्स्मृतम् २१
मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम्
विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं वदेत् २२
इति मागधमानं समाप्तम्
यतो मन्दाग्नयो ह्रस्वा हीनसत्त्वा नराः कलौ
अतस्तु मात्रा तद्योग्या प्रोच्यते सुज्ञसंमता २३
यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः
यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते २४
माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित्
चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च २५
गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषकैः
चतुष्कर्षैः पलं प्रोक्तं दशशाणमितं बुधैः २६
चतुष्पलैश्च कुडवः प्रस्थाद्याः पूर्ववन्मताः
स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयो बलम् २७
प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत्
नाल्पं हन्त्यौषधं व्याधिं यथाऽम्भोऽल्प महानलः

अतिमात्रं च दोषाय यथा शस्ये बहूदकम् २८

इति कालिङ्गमानं समाप्तम्

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
परिभाषादिप्रकरणे
प्रथमं मानपरिभाषाख्यं प्रकरणं समाप्तम् १

अथ द्वितीयं भेषजविधानप्रकरणम् २

स्वरसश्च तथा कल्कः क्वाथश्च हिमफाराटकौ
ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् १
अहतात्तत्क्षणाकृष्टाद् द्रव्यात्क्षुराणात्समुद्भवेत्
वस्त्रनिष्पीडितो यश्च स्वरसो रस उच्यते २
कुडवं चूर्णितं द्रव्यं क्षिप्तञ्च द्विगुणे जले
अहोरात्रं स्थितं तस्माद्भवेद्वा रस उत्तमः ३
आदाय शुष्कद्रव्यं वा स्वरसानामसंभवे
जलेऽष्टगुणिते साध्यं पादशिष्टं च गृह्यते ४
स्वरस्य गुरुत्वाच्च पलमर्द्धं प्रयोजयेत्
निशोषितं चाग्निसिद्धं पलमात्रं रसं पिबेत् ५
सितामधुगुडक्षाराञ्जीरकं लवणं तथा
घृतं तैलञ्च चूर्णादीन् कोलमात्रान् रसे क्षिपेत् ६
कराडतं तराडुलपलं जलेऽष्टगुणिते क्षिपेत्
भावयित्वा जलं ग्राह्यं देयं सर्वत्र कर्मसु ७
क्षुराणं द्रव्यपलं सम्यक् षड्भिर्नीरपलैः प्लुतम्
निशोषितं हिमः स स्यात्तथा शीतकषायकः
तस्य मानं मतं पाने पलद्वयमितं बुधैः ८
जले चतुष्पले शीते क्षुराणं द्रव्यपलं क्षिपेत्
मृत्पात्रे मन्थयेत् सम्यक् तस्माच्च द्विपलं पिबेत् ९
क्षुराणे द्रव्यपले सम्यग्जलमुष्णं विनिक्षिपेत्
मृत्पात्रे कुडवोन्मानं ततस्तु स्त्रावयेत्पटात् १०
स स्याच्चूर्णद्रवः फाराटस्तन्मानं द्विपलोन्मितम्
क्षौद्रं सितागुडादींस्तु कर्षमात्रान्विनिक्षिपेत् ११

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत्
तदेव कल्को विज्ञेयस्तन्मानं कर्षसम्मितम् १२
कल्के मधुघृतं तैलं देयं द्विगुणमात्रया
सितां गुडं समं दद्याद् द्रवो देयश्चतुर्गुणः १३
अत्यन्तशुष्कं यद् द्रव्यं सुपिष्टं वस्त्रगालितम्
तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्षसम्मिता १४
चूर्णे गुडः समो देयः शर्करा द्विगुणा मता
चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत् १५
लिहेच्चूर्णं द्रवैः सर्वैर्घृताद्यैर्द्विगुणोन्मितैः
पिबेच्चतुर्गुणैरेवं चूर्णमालोडितं द्रवैः १६
चूर्णावलेहगुटिकाकल्कानामनुपानकम्
पित्तवातकफातङ्के त्रिद्व्येकपलमाहरेत् १७
यथा तैलं जले क्षिप्तं क्षणेनैव विसर्पति
अनुपानबलादङ्गे तथा सर्पति भेषजम् १८
द्रवेण यावता सम्यक् चूर्णं सर्वं प्लुतं भवेत्
भावनायाः प्रमाणं तु चूर्णे प्रोक्तं भिषग्वरैः १९
पुटपाकस्य कल्कस्य स्वरसो गृह्यते यतः
अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया २०
पुटपाकस्य पाकोऽय लेपस्याङ्गारवर्णता
लेपश्च द्व्यङ्गुलं स्थूलं कुर्याद् द्व्यङ्गुलमात्रकम् २१
काश्मरीवटजम्ब्वादिपत्रैर्वेष्टनमुत्तमम् २२
पलमात्रो रसो ग्राह्यः कर्षमानं मधु क्षिपेत्
कल्कचूर्णद्रवाद्यास्तु देयाः कोलमिता बुधैः २३
अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा
अथवा क्वथनेनैव सिद्धमुष्णोदकं भवेत् २४
श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम्
कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि २५
क्षीरमष्टगुणं द्रव्यात्क्षीरान्नीरं चतुर्गुणम्
क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत् २६
पानीयं षोडशगुणं क्षुण्णे द्रव्यपले क्षिपेत्

मृत्पात्रे क्वाथयेद् ग्राह्यमष्टमांशावशेषितम् २७
कर्षादौ तु पलं यावद् दद्यात्षोडशिकं जलम्
ततस्तु कुडवं यावत्तोयमष्टगुणं भवेत्
चतुर्गुणमतश्चोर्ध्वं यावत् प्रस्थादिकं जलम् २८
तज्जलं पाययेद्धीमान्कोष्णं मृद्वग्निसाधितम्
शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते २९
मात्रोत्तमा पलेन स्यात्त्रिभिरक्षैस्तु मध्यमा
जघन्या च पलार्द्धेन स्नेहक्वाथौषधेषु च ३०
क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते
चतुर्भागावशिष्टन्तु पेयं जलचतुष्टयम् ३१
दीप्तानलं महाकायं पाययेदञ्जलि जलम्
अन्ये त्वर्द्धं परित्यज्य प्रसृतिं तु चिकित्सकाः ३२
क्वाथत्यागमनिच्छन्तस्त्वष्टभागावशेषितम्
पारम्पर्योपदेशेन वृद्धवैद्याः पलद्वयम् ३३
क्वाथे क्षिपेत्सितामंशैश्चतुर्थाष्टमषोडशैः
वातपित्तकफातङ्के विपरीतं लघु स्मृतम् ३४
जीरकं गुग्गुलं क्षारं लवणं च शिलाजतु
हिङ्गु त्रिकटुकञ्चैव क्वाथे शाणोन्मितं क्षिपेत् ३५
क्षीरं घृतं गुडं तैलं मूत्रं चान्यद् द्रवं तथा
कल्कं चूर्णादिकं क्वाथे निक्षिपेत् कर्षसम्मितम् ३६
तत्रोपविश्य विश्रान्तः प्रसन्नवदनेक्षणः
औषधं हेमरजतमृद्भाजनपरिस्थितम् ३७
पिबेत् प्रसन्नहृदयः पीत्वा पात्रमधोमुखम्
विधायाचम्य सलिलं ताम्बूलाद्युपयोजयेत् ३८
क्वाथादेर्यत्पुनः पाकाद् घनत्वं सा रसक्रिया
सोऽवलेहश्च लेहश्च तन्मात्रा स्यात्पलोन्मिता ३९
सिता चतुर्गुणा कार्या चूर्णाच्च द्विगुणो गुडः
द्रवं चतुर्गुणं दद्यादिति सर्वत्र निश्चयः ४०
सुपक्वे तन्तुमत्त्वं स्यादवलेहेऽप्सु मज्जनम्
स्थिरत्वं पीडिते मुद्रा गन्धवर्णरसोद्भवः ४१

दुग्धमिक्षुरसं यूषं पञ्चमूलकषायकम्
वासाक्वाथं यथायोग्यमनुपानं प्रशस्यते ४२
वटका अथ कथ्यन्ते तन्नाम गुटिका वटी
मोदको वटिका पिण्डी गुडो वर्त्तिस्तथोच्यते ४३
लेहवत्साध्यते वह्नौ गुडो वा शर्कराऽथवा
गुग्गुल्लुर्वा क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी ४४
कुर्यादवह्निसिद्धेन क्वचिद् गुग्गुलुना वटीम्
द्रवेण मधुना वाऽपि गुटिकां कारयेद् बुधः ४५
सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः
चूर्णे चूर्णसमः कार्यो गुग्गुलुर्मधु तत्समम् ४६
द्रवं तु द्विगुणं देयं मोदकेषु भिषग्वरैः ४७
कर्षप्रमाणं तन्मात्रा बलं दृष्ट्वा प्रयुज्यते ४८
कल्काच्चतुर्गुणीकृत्य घृतं वा तैलमेव च
चतुर्गुणद्रवे साध्यं तस्य मात्रा पलोन्मिता ४९
निक्षिप्य क्वाथयेत्तोयं क्वाथ्यद्रव्याच्चतुर्गुणम्
पादशिष्टं गृहीत्वा तु स्नेहं तेनैव साधयेत् ५०
चतुर्गुणं मृदुद्रव्ये कठिनेऽष्टगुणं जलम्
मृद्वादिक्वाथ्यसंघाते दद्यादष्टगुणं पयः
अत्यन्त कठिने द्रव्ये नीरं षोडशिकं मतम् ५१
प्रस्थादितः क्षिपेन्नीरं खारीं यावच्चतुर्गुणम् ५२
अम्बुक्वाथरसैर्यत्र पृथक् स्नेहस्य साधनम्
कल्कस्यांशं तत्र दद्याच्चतुर्थ षष्ठमष्टमम् ५३
दुग्धेदध्नि रसे तक्रे कल्को देयोऽष्टमांशकः
कल्काच्च सम्यक् पाकार्थं तोयमत्र चतुर्गुणम् ५४
द्रवाणि यत्र स्नेहेषु पञ्चादीनि भवन्ति हि
तत्र स्नेहसमान्याहुर्यथापूर्वं चतुर्गुणम् ५५
द्रव्येण केवलेनैव स्नेहपाको भवेद् यदि
तत्राम्बुपिष्टः कल्कः स्याज्जलं चात्र चतुर्गुणम् ५६
क्वाथेन केवलेनैव पाको यत्रोदितः क्वचित्
क्वाथ्यद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते ५७

प्रभाते दन्तकाष्ठान्ते गृहान्निर्गमने तथा २२८
व्यायामाध्वव्यवायान्ते विरामूत्रान्तेऽञ्जने कृते
कवलान्ते भोजनान्ते दिवास्वप्नोस्त्थिते तथा २२९
वमनान्ते तथा सायं प्रतिमर्शः प्रयुज्यते २३०
रीषदुच्छिङ्कनात्स्नेहो यथा वक्त्रं प्रपद्यते
नस्ये निषिक्तं तं विद्यात्प्रतिमर्शप्रमाणतः २३१
उच्छिष्टं न पिबेन्नैव निष्ठीवेन्मुखमागतम् २३२
क्षीणे तृष्णाऽस्यशोषार्त्ते बाले वृद्धे च पूज्यते
प्रतिमर्शान्न जायन्ते रोगाश्चैवोर्ध्वजत्रुजाः
बलीपलितनाशश्च बलमिन्द्रियजं भवेत् २३३
बिभीतनिम्बौ गाम्भारी शिवा शेलुश्च काकिनी
एकैकतैलनस्येन पलितं नश्यति ध्रुवम् २३४
अथ नस्यविधिं वक्ष्ये नस्यग्रहणहेतवे
देशेवातरजोमुक्ते कृतदन्तनिघर्षणम् २३५
विशुद्धं धूमपानेन स्विन्नभालगलं तथा
उत्तानशायिनं किञ्चित्प्रलम्बशिरसं नरम् २३६
आस्तीर्णहस्तपादञ्च वस्त्राच्छादितलोचनम्
समुन्नामितनासाऽग्र वैद्यो नस्येन योजयेत् २३७
कोष्णेनाच्छिन्नधारेण हेमतारादिशुक्तिभिः
शुक्त्या वा यन्त्रयुक्त्या वा प्लोतैर्वा नस्यमाचरेत् २३८
नस्येष्वासिच्यमानेषु सिरो नैव प्रकम्पयेत्
न कुप्येन्न प्रभाषेत नोच्छिक्केन्न हसेत्तथा २३९
एतैर्हि विहितः स्नेहो नैवान्तं सम्प्रपद्यते
ततः कासप्रतिश्यायशिरोऽक्षिगदसम्भवः २४०
शृङ्गाटकमभिव्याप्य स्थापयेन्न गिलेद् द्रवम्
पञ्च सप्त दशैव स्युर्मात्राः स्नेहस्य धारणे २४१
उपविश्याथ निष्ठीवेन्नासावक्त्रागतं द्रवम्
वामदक्षिणपार्श्वाभ्यां निष्ठीवेत्संमुखं न हि २४२
नीते नस्ये मनस्तापं रजःक्रोधञ्च सन्त्यजेत्
शयीत निद्रां त्यक्त्वा च प्रोत्तानो वाक्छतं नरः २४३

तथा शिरोविरेकान्ते धूमो वा कवलो हितः
नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः २४४
शुद्धहीनातियोगा हि विज्ञेयाः शास्त्रचिन्तकैः
लाघवं मलसंशुद्धिः स्रोतसां व्याधिसंक्षयः
चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् २४५
कण्डूःप्रदेहो गुरुता स्रोतसां कफसंस्रवः
मूर्ध्नि हीनाविशुद्धेस्तु लक्षणं परिकीर्त्तितम् २४६
मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः
शून्यता शिरसश्चापि मूर्ध्नि गाढं विरेचिते २४७
हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत्
तत्र हीनेन नस्येन शुद्धे वातघ्नमाचरेत् २४८
सम्यग्विशुद्धे शिरसि सर्पिर्नस्येन दीयते
कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः २४९
लक्षणं तदतिस्निग्धे तत्र रूक्षं प्रदापयेत्
भोजयेच्चानभिष्यन्दि नस्ये वातिकमादिशेत् २५०

इति श्रीमिश्रलटकन तनय श्रीमिश्रभाव विरचिते भावप्रकाशे
परिभाषाऽदिप्रकरणे
पञ्चमं पञ्चकर्मविधिप्रकरणं समाप्तम् ५

अथ षष्ठं धूमपानादिविधिप्रकरणम् ६

धूमस्तु षड्विधः प्रोक्तः शमनो बृंहणस्तथा
रेचनः कासहा चैव वामनो व्रणधूपनः १
शमनस्य तु पर्यायौ मध्यः प्रायोगिकस्तथा
बृंहणस्य च पर्यायौ स्नेहनो मृदुरेव च २
रेचनस्यापि पर्यायौ शोधनस्तीक्ष्ण एव च
अधूमार्हाश्च खल्वेते श्रान्तो भीतश्च दुःखितः ३
दत्तवस्तिर्विरिक्तश्च रात्रौ जागरितस्तथा
पिपासितश्च दाहार्त्तस्तालुशोषी तथोदरी ४
शिरोऽभितापी तिमिरी छर्द्याध्मानप्रपीडितः
क्षतोरस्कः प्रमेहार्त्तः पाण्डुरोगी च गर्भिणी ५

रूक्षः क्षीणोऽभ्यवहृतक्षीरक्षौद्रघृतासवः
भुक्तान्नदधिमत्स्यश्च बालो वृद्धः कृशस्तथा ६
अकाले चातिपीतश्च धूमः कुर्यादुपद्रवान्
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ७
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराऽम्बु वा
मधुराम्लौ रसौ वाऽपि वमनाय प्रदापयेत् ८
धूमस्तु द्वादशाद्वर्षाद् गृह्यतेऽशीतिकान्न च
कासश्वासप्रतिश्यायान् मन्याहनुशिरोरुजः ९
वातश्लेष्मविकारांश्च हन्याद्धूमः सुयोजितः
धूमोपयोगात्पुरुषः प्रसन्नेन्द्रियवाङ्मनाः
दृढकेशद्विजश्मश्रुः सुगन्धिवदनो भवेत् १०
धूमनाडी भवेत्तत्र त्रिखण्डा च त्रिपर्विका
कनिष्ठिकापरीणाहा राजमाषागमान्तरा ११
धूमपानी भवेद्दीर्घा शमने रोगिणोऽङ्गुलैः
चत्वारिंशन्मितैस्तद्वद् द्वात्रिंशद्भिर्मृदौ मता १२
तीक्ष्णे चतुर्विंशतिभिः कासघ्ने षोडशोन्मित् १३
दशाङ्गुलैर्वामनीये तथा स्याद् व्रणनाडिका
कलायमण्डलस्थूला कुलत्थागमरन्ध्रिका १४
अथेषिकां प्रलिम्पेच्च सुश्लक्ष्णां द्वादशाङ्गुलाम्
धूमद्रव्यस्य कल्केन लेपश्चाष्टाङ्गुलः स्मृतः १५
कल्कं कर्षमितं लिप्त्वा छायाशुष्कञ्च कारयेत्
ईषिकामपनीयाथ स्नेहाक्तां वर्त्तिमादरात् १६
अङ्गारैर्दीपितां कृत्वा धृत्वा नेत्रस्य रन्ध्रके
वदनेन पिबेद् धूमं वदनेनैव संत्यजेत् १७
नासिकाभ्यां ततः पीत्वा मुखेनैव वमेत्सुधीः
शरावसम्पुटे क्षिप्त्वा कल्कमङ्गारदीपितम्
छिद्रे नेत्रं निवेश्याथ व्रणं तेनैव धूपयेत् १८
एलादिकल्कं शमने स्निग्धं सर्जरसं मृदौ १९
रेचने तीक्ष्णकल्कञ्च श्वासघ्ने क्षुद्रकोषणम्
वामने स्नायुचर्माढ्यं दद्याद्धूमस्य पानकम् २०

व्रणे निम्बवचाद्यश्च धूपनं संप्रशस्यते
अन्येऽपि धूमा गेहेषु कर्त्तव्या रोगशान्तये २१
मयूरपिच्छं निम्बस्य पत्राणि बृहतीफलम्
मरिचं हिङ्गु मांसी च बीजं कार्पाससम्भवम् २२
छागरोमाहिनिर्मोको विष्ठा वैडालिकी तथा
गजदन्तश्च तच्चूर्णं किञ्चिद्घृतविमिश्रितम् २३
गेहेषु धूपनं दत्तं सर्वान् बालग्रहान् हरेत्
पिशाचान् राक्षसान् हत्वा सर्वज्वरहरं भवेत् २४
मनस्तापं रजःक्रोधौ धूमपाने निवारयेत्
नेत्राणि धातुजान्याहुर्नलवंशादिजान्यपि २५
स्नेहक्षीरकषायादिद्रवैः सम्पूर्णमाननम्
आपूर्य स्थीयते तावद्विधिर्गण्डूषधारणे २६
कफपूर्णास्यता यावच्छेदो दोषस्य वा भवेत्
नेत्रघ्राणस्रुतिर्यावत्तावद्गण्डूषधारणम् २७
गण्डूषान् सुस्थितः कुर्य्यात्स्विन्नभालगलादिकः
मनुष्यस्त्रींस्तथा पञ्च सप्त वाऽदोषनाशनात् २८
चतुर्विधः स्याद् गण्डूषः स्नेहनः शमनस्तथा
शोधनो रोपणश्चैव कवलश्चापि तादृशः २९
स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः
पित्ते कट्वम्ललवणैरुष्णैः संशोधनः कफे
कषायतिक्तमधुरैः कटूष्णो रोपणो व्रणे ३०
दद्याद् द्रव्येषु चूर्णञ्च गण्डूषे कोलमात्रकम्
कर्षप्रमाणः कल्कश्च कवले दीयते बुधैः ३१
धार्यन्ते पञ्चमाद्वर्षाद्गण्डूषाः कवलादयः ३२
व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्
इन्द्रियाणां प्रसादश्च गण्डूषे विधृते भवेत् ३३
हरेदास्यस्य वैरस्यं शोषं पाकं व्रणं तृषाम्
दन्तचालञ्च गण्डूषो वैशद्यं तु करोति हि ३४
वातपित्तकफघ्नस्य द्रव्यस्य कवलं मुखे
अर्द्धं निक्षिप्य संचर्व्य निष्ठीवेत्कवले विधिः ३५

कवलः कुरुते काङ्क्षां भक्ष्येषु हरते कफम्
तृष्णां शोषञ्च वैरस्यं दन्तचालञ्च नाशयेत् ३६
दन्त जिह्वामुखानां यच्चूर्णकल्कावलेहकैः
शनैर्घर्षणमङ्गुल्या तदुक्तं प्रतिसारणम् ३७
वैरस्यं मुखदौर्गन्ध्यं मुखशोषं तथा तृषाम्
अरुचिं दन्तपीडाञ्च निहन्ति प्रतिसारणम् ३८
हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च
अतियोगान्मुखे पाकः शोषस्तृष्णावमिः क्लमः ३९
स्वेदश्चतुर्विधः प्रोक्तस्तापोष्मस्वेदसंज्ञितः
उपनाहो द्रवः स्वेदः सर्वे वातार्त्तिहारिणः ४०
स्वेदौ तापोष्मजौ प्रायः श्लेष्मघ्नौ समुदीरितौ
उपनाहस्तु वातघ्नः पित्तसङ्गे द्रवो हितः ४१
महाबले महाव्याधौ शीते स्वेदो महान् स्मृतः
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो मतः
बलासे रूक्षणः स्वेदो रूक्षस्निग्धः कफानिले ४२
कफमेदोवृते वाते कोष्णं गेहं रवेः करान्
नियुद्धं मार्गगमनं गुरु प्रावरणं ध्रुवम् ४३
चिन्ताव्यायामभारांश्च सेवेतामयमुक्तये
येषां नस्यं प्रदातव्यं वस्तिश्चापि हि देहिनाम् ४४
शोधनीयाश्च ये केचित् पूर्वं स्वेद्याश्च ते मताः
स्वेद्या ऊर्ध्वं त्रयोऽपीह भगन्दर्यर्शसस्तथा ४५
अश्मर्या चातुरो जन्तुः शययेच्छस्त्रकर्मणः ४६
पश्चात्स्वेद्या हृते शल्ये मूढगर्भगदे तथा
काले प्रजाताऽकाले वा पश्चात्स्वेद्या नितम्बिनी ४७
सर्वान्स्वेदान्निवाते च जीर्णेऽन्ने वाऽवचारयेत्
स्वेदाद्धातुस्थिता दोषाः स्नेहक्लिन्नस्य देहिनः ४८
द्रवत्वं प्राप्य कोष्ठान्तर्गत्वा यान्ति विरेकताम्
स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी
स्वेद्यमानशरीरस्य हृदयं शीतलः स्पृशेत् ४९
अजीर्णी दुर्बली मेही क्षतक्षीणः पिपासितः ५०

अतिसारी रक्तपित्ती पाराडुरोगी तथोदरी
मेदस्वी गर्भिणी चैव न हि स्वेद्या विजानता ५१
स्वेदादेषां याति देहो विनाशं नो साध्यत्वं यान्ति तेषां विकाराः ५२
एतानपि मृदुस्वेदैः स्वेदसाध्यानुपाचरेत्
मृदुस्वेदं प्रयुञ्जीत तथा हृन्मुष्कदृष्टिषु ५३
अतिस्वेदात्सन्धिपीठा दाहस्तृष्णा क्लमो भ्रमः
पित्तासृक्पिडिकाकोपस्तत्र शीतैरुपाचरेत् ५४
तेषु तापाभिधः स्वेदो बालुकावस्त्रपाणिभिः
कपालकन्दुकाङ्गारैर्यथायोग्यं हि जायते ५५
प्रतप्तैरम्लसिक्तैश्च कायेऽलक्तकवेष्टिते
ऊष्मस्वेदः प्रयोक्तव्यो लोहपिराडेष्टकादिभिः
अथवा वातनिर्णाशिद्रव्यक्वाथरसादिभिः ५६
उष्णैर्घटं पूरयित्वा पार्श्वे छिद्रं विधाय च
विमुद्र्यास्यं त्रिखराडां च धातुजां काष्ठजामुत ५७
षडङ्गुलास्यां गोपुच्छां नाडीं युञ्ज्याद् द्विहस्तकाम्
सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम्
हस्तिशुरिडकया नाड्या स्वेदयेद्वातरोगिणम् ५८
पुरुषायाममात्रां वा भूमिं सम्मार्ज्य खादिरैः
काष्ठैर्दग्ध्वा तथाऽभ्युन्दय क्षीरधान्याम्लवारिभिः ५९
वातघ्नपत्रैराच्छाद्य शयानं स्वेदयेन्नरम्
एवं माषादिभिः स्विन्नैः शयानं स्वेदमाचरेत् ६०
अथोपनाहस्वेदञ्च कुर्याद्वातहरौषधैः
प्रदिह्य देहं वातार्त्तं क्षीरमांसरसादिभिः ६१
अम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः
अथ ग्राम्यानूपमांसैर्जीवनीयगणेन च ६२
दधिसौवीरकक्षीरैर्वीरतर्वादिना तथा
कुलत्थमाषगोधूमैरतसीतिलसर्षपैः ६३
शतपुष्पादेवदारुशेफालीस्थूलजीरकैः
एरराडमूलजीरैश्च रास्नामूलकशिग्रुभिः ६४
मिसिकृष्णाकुठेरैश्च लवणैरम्लसंयुतैः

प्रसारण्यश्वगन्धाभ्यां बलाभिर्दशमूलकैः ६५
गुडूच्या वानरीवीजैर्यथालाभसमाहृतैः
चुण्णैः स्विन्नैश्च वस्त्रेण बद्धैः संस्वेदयेन्नरम् ६६
महाशाल्वणसंज्ञोऽय योगः सर्वानिलार्त्तिहृत् ६७
अथवाऽम्लेन सम्पिष्टैः कोष्णैःसूक्ष्मपटस्थितैः
भेषजैः स्वेदयेत् किं वा स्विन्नैः कोष्णैः पटस्थितैः ६८
द्रवस्वेदस्तु वातघ्नद्रव्यक्वाथेन पूरिते
कटाहे कोष्ठके वाऽपि सूपविष्टोऽवगाहयेत् ६९
सौवर्णं राजतं वापि ताम्रं लौहञ्च दारुजम्
कोष्ठकं तत्र कुर्वीतोच्छ्राये षड्विंशदङ्गुलम्
आयामे वा तदेव स्याच्चतुष्कोणन्तु चिक्कणम् ७०
नाभेः षडङ्गुलं यावन्मग्नं क्वाथस्य धारया
कोष्णाया स्कन्धयोः सिक्तस्तिष्ठेत्स्निग्धतनुर्नरः ७१
मुहूर्त्तैकं समारभ्य यावत्स्यात्तच्चतुष्टयम्
तावत्तदवगाहेत यावदारोग्यनिश्चयः ७२
एवं तैलेन दुग्धेन सर्पिषा स्वेदयेन्नरम्
एकान्तरो द्व्यन्तरो वा युक्तः स्नेहोऽवगाहने ७३
सिरामुखैर्लोमकूपैर्धमनीभिश्च तर्पयेत्
शरीरे बलमाधत्ते युक्तः स्नेहोऽवगाहने ७४
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरादयः
तथैव धातुवृद्धिर्हि स्नेहसिक्तस्य जायते ७५
नातः परतरः कश्चिदुपायो वातनाशनः
शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ७६
दीप्तेऽग्नौ मार्दवे जाते स्वेदनाद्विरतिर्मता ७७
अभ्यङ्गः परिषेकश्च पिचुर्वस्तिरिति क्रमात्
मूर्द्धतैलं चतुर्द्धा स्याद्बलवत्तद्यथोत्तरम् ७८
त्रयोऽभ्यङ्गादयः पूर्वे प्रसिद्धाः सर्वतः स्मृताः
शिरोवस्तिविधिश्चात्र प्रोच्यते सुज्ञसम्मतः ७९
शिरोवस्तिश्चर्मणः स्याद् द्विमुखो द्वादशाङ्गुलः
शिरःप्रमाणस्तं बद्ध्वा मस्तके माषपिष्टकैः ८०

सन्धिरोधं विधायाशु स्नेहैः कोष्णैः प्रपूरयेत्
तावद्धार्यस्तु यावत्स्यान्नासाकर्णमुखस्रुतिः ८१
वेदनोपशमो वाऽपि मात्राणां वा सहस्रकम्
स्वजानुनः करावर्त्तं कुर्याच्छोटिकया युतम् ८२
एषा मात्रा भवेदेका सर्वत्रैवैष निश्चयः
विना भोजनमेवात्र शिरोवस्तिः प्रशस्यते ८३
प्रयोज्यस्तु शिरोवस्तिः पञ्च सप्त दिनानि वा
विमोच्य शिरसो बस्तिं गृह्णीयाच्च समन्ततः ८४
ऊर्ध्वकायं ततः कोष्णे नीरे स्नानं समाचरेत्
अनेन दुर्जया रोगा वातजा यान्ति संक्षयम्
शिरःकम्पादयस्तेन सर्वकालेषु युज्यते ८५
स्वेदयेत्कर्णदेशन्तु किञ्चिन्नुः पार्श्वशायिनः
मूत्रैः स्नेहै रसैरुष्णैः श्रोत्ररन्ध्रं प्रपूरयेत् ८६
कर्णञ्च पूरितं रक्षेच्छतं पञ्च शतानि वा
सहस्रं वापि मात्राणां श्रोत्रकराठशिरोगदे ८७
मूत्राद्यैः पूरणं कर्णे भोजनात्प्राक्प्रशस्यते
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ८८
कर्णे शूलाकुले कोष्णं बस्तमूत्रं ससैन्धवम्
निक्षिपेत्तेन शाम्यन्ति शूलपाकादिजा रुजः ८९
शृङ्गवेरञ्च मधुकं सैन्धवं तैलमेव च
कदुष्णं कर्णयोर्देयमेतत्स्याद्वेदनाऽपहम् ९०
पीतार्कपत्रमाज्येन लिप्तं वह्नौ प्रतापयेत्
तद्रसः श्रवणे क्षिप्तः कर्णशूलहरः परः ९१
आलेपस्य तु नामानि लेपो लेपनलिप्तकौ
दोषघ्नो विषहा वर्ण्यः स च लेपस्त्रिधा मतः ९२
त्रिप्रमाणश्चतुर्भागत्रिभागार्द्धाङ्गुलोन्नतः
आर्द्रो व्याधिहरः स स्याच्छुष्को दूषयति च्छविम् ९३
दोषघ्नो लेपो यथा
शोथघ्नीदारुसिद्धार्थशुराठीशोभाञ्जनत्वचाम्
आरनालेप पिष्टानां प्रलेपः सर्वशोथहा ९४

शिरीषं मधुयष्टी च तगरं रक्तचन्दनम्
एला मांसी निशायुग्मं कुष्ठं बालकमेव च ९५
इति सञ्चूरर्य लेपोऽय पञ्चमांशघृतप्लुतः
जलेन क्रियते सुज्ञैर्दशाङ्ग इति संज्ञितः ९६
वीसर्पश्च विषस्फोटाञ्छोथदुष्टव्रणाञ्जयेत् ९७
विषहा लेपो यथा
अजादुग्धतिलैर्लेपो नवनीतेन संयुतः
शोथमारुष्करं हन्ति लेपो वा कृष्णमार्त्तिकः ९८
अपरः कृमिविषापहलेपो यथा
लाङ्गल्यतिविषाऽलाबूशालिनीबीजमूलकैः
लेपो धान्याम्बुसम्पिष्टः कीटविस्फोटनाशनः ९९
मुखकान्तिदो लेपो यथा
रक्तचन्दन मञ्जिष्ठा लोध्र कुष्ठ प्रियङ्गवः
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः १००
अथ लेपविधिश्चैव प्रोच्यते सुज्ञसम्मतः
आलेपश्च प्रदेहश्च द्वौ भेदौ तस्य भाषितौ १०१
चर्मार्द्रं माहिषं यद्वत्प्रोन्नतं सा मितिस्तयोः
शीतस्तनुविशोषी च प्रलेपः पित्तहृन्मतः १०२
आर्द्रो घनस्तथोष्णः स्यात्प्रदेहः श्लेष्मवातहा
न रात्रौ लेपनं कुर्याच्छुष्यमाणं न धारयेत्
शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति १०३
तमसा पिहितो ह्यूष्मा लोमकूपमुखे स्थितः
विना लेपेन निर्याति रात्रौ नालेपयेदतः १०४
रात्रावपि प्रलेपादिर्व्रणे देयो विचक्षणैः
अपाकिन्यतिगम्भीरे रक्तश्लेष्मसमुद्भवे १०५
प्रलेपो यथा
मधुकं चन्दनं मूर्वा नलमूलञ्च पर्पटम्
उशीरं बालकं पद्मं प्रलेपः पित्तशोथहृत् १०६
प्रदेहो यथा
बीजपूरजटा हिंस्रा देवदारु महौषधम्

रास्नाऽरणिः प्रदेहोऽय वातशोथविनाशनः १०७
कृष्णापुराणपिण्याकशिग्रुत्वक्सिकताशिवाः
गोमूत्रपिष्टः कोष्णोऽय प्रदेहः श्लेष्मशोथहा १०८
शोणितं स्रावयेज्जन्तोरामयं प्रसमीक्ष्य च
प्रस्थं प्रस्थार्द्धमथ वा प्रस्थार्द्धार्द्धमथापि वा १०९
शरत्काले स्वभावेन शोणितं स्रावयेन्नरः
त्वग्दोषग्रन्थिशोथाद्या नश्यन्ति रुधिरोद्भवाः ११०
व्यभ्रे वर्षासु विध्येत शीते ग्रीष्मे शरद्यपि
मध्याह्ने शीतकाले च रुधिरं स्रावयेद् बुधः १११
अनुष्णाशीतं मधुरं स्निग्धं रक्तञ्चवर्णतः
शोणितं गुरु विस्रं स्याद् विदाहश्चास्य पित्तवत् ११२
विस्रता द्रवता रागश्चलनं विलयस्तथा
भूम्यादिपञ्चभूतानामेते रक्ते गुणाः स्मृताः ११३
रक्ते दुष्टे भवेच्छोथो रक्तमण्डलमेव च
व्यथा दाहश्च पाकश्च कण्डूश्च पिडकोद्गमः ११४
वृद्धे रक्ताङ्गनेत्रत्वं सिराणां पूर्णता तथा
गात्राणां गौरवं निद्रा मोहो दाहश्च जायते ११५
क्षीणेऽस्रे मधुराकाङ्क्षा मूर्च्छा च त्वचि रूक्षता
शैथिल्यं च सिराणां स्याद्वातादुन्मार्गगामिता ११६
अरुणं फेनिलं रूक्षं परुषं तनु शीघ्रगम्
आस्कन्दि सूचीनिस्तोदि रक्तं स्याद्वातदूषितम् ११७
पित्तेन पीतं हरितं नीलं श्यावं च विस्रकम्
अस्वादूष्णं मक्षिकाणां पिपीलीनामनिष्टकम् ११८
शीतलं बहुलं स्निग्धं गैरिकोदकसन्निभम्
मांसपेशीप्रभं स्कन्दि मन्दगं कफदूषितम् ११९
द्विदोषदुष्टं संसृष्टं त्रिदुष्टं पूतिगन्धकम्
सर्वलक्षणसंयुक्तं काञ्जिकाभं च जायते १२०
विषदुष्टं भवेच्छ्यावं नासिकोन्मार्गगं तथा
विस्रं काञ्जिकसंकाशं सर्वकुष्ठकरं तथा १२१
इन्द्रगोपप्रभं ज्ञेयं प्रकृतिस्थमसंहतम् १२२

शोथे दाहेऽङ्गपाके च रक्तवर्णेऽसृजः स्रुतौ
वातरक्ते तथा कुष्ठे सपीडे दुर्जयेऽनिले
पाण्डुरोगे श्लीपदे च विषदुष्टेच शोणिते १२३
ग्रन्थ्यर्बुदापचीक्षुद्ररोगाधिमन्थकाभिधे
विदारीस्तनरोगेषु गात्राणां सादगौरवे १२४
रक्ताभिष्यन्दतन्द्रायां पूतिघ्राणास्यदाहके
यकृत्प्लीहविसर्पेषु विद्रधौ पिडकोद्गमे १२५
कर्णौष्ठघ्राणवक्त्राणां पाके दाहे शिरोरुजि
उपदंशे रक्तपित्ते रक्तस्रावः प्रशस्यते १२६
एषु रोगेषु शृङ्गैर्वा जलौकाऽलाबुकैरपि
अथवापि सिरामोक्षैः कारयेद्रक्तपातनम् १२७
न कुर्वीत सिरामोक्षं कृशस्यातिव्यवायिनः
क्लीबस्य भीरोर्गर्भिण्याः सूतायाः पाण्डुरोगिणः १२८
पञ्चकर्मविशुद्धस्य पीतस्नेहस्य चार्शसाम्
सर्वाङ्गशोथयुक्तानामुदरिश्वासकासिनाम् १२९
छर्द्यतीसारजुष्टानामतिस्विन्नतनोरपि
ऊनषोडशवर्षस्य गतसप्ततिकस्य च १३०
आघातात्स्रुतरक्तस्य सिरामोक्षो न शस्यते १३१
एषां चात्ययिके रोगे जलौकाभिर्विनिर्हरेत्
तथा च विषजुष्टानां सिरामोक्षो न शस्यते १३२
गोशृङ्गेण जलौकाभिरलाबूभिरपि त्रिधा
वातपित्तकफैर्दुष्टं शोणितं स्रावयेद् बुधः १३३
द्विदोषाभ्यान्तु दुष्टं यत्त्रिदोषैरपिदूषितम्
शोणितं स्रावयेद्युक्त्यासिरामोक्षैः पदैस्तथा १३४
गृह्णाति शोणितं शृङ्गं दशाङ्गुलमितं बलात्
जलौकाहस्तमात्रं तु तुम्बी तु द्वादशाङ्गुलम् १३५
पदमङ्गुलमात्रस्य सिरा सर्वाङ्गशोधिनी
शीते निरन्ने मूर्छार्त्तिनिद्राभीतिमदश्रमैः १३६
युक्तानां न स्रवेद्रक्तं तथा विण्मूत्रसङ्गिनाम्
शोणिते चाप्रवृत्ते तु कुष्ठत्रिकटुसैन्धवैः १३७

मर्दयेद् व्रणवक्त्रञ्च तेन रक्तं प्रवर्त्तते
तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते १३८
पीत्वा यथागूं तृप्तस्य स्रावयेच्छोणितं बुधः
अतिस्विन्नस्योष्णकाले तथैवातिसिराव्यधात् १३९
अतिप्रवर्त्तते रक्तं तत्र कुर्यात्प्रतिक्रियाम्
अतिप्रवृत्ते रक्ते तु लोध्रसर्जरसाञ्जनैः १४०
यवगोधूमचूर्णैश्च धवधन्वनगैरिकैः
सर्पनिर्मोकचूर्णैर्वा भस्मना क्षौमवस्त्रयोः १४१
मुखं व्रणस्य बद्ध्वा च शीतैश्चोपचरेद् व्रणम्
विध्येदूर्ध्वसिरां तावद्दहेत्क्षारेण वह्निना १४२
व्रणं कषायः सन्धत्ते रक्तं स्कन्दयते हिमम्
व्रणास्यं पाचयेत्क्षारो दाहः सङ्कोचयेत्सिराः १४३
रक्ते दुष्टेऽवशिष्टेऽपि व्याधिर्नैव प्रकुप्यति
अतो रक्षेत्सावशेषं रक्ते नातिस्रुतिर्हिता १४४
आन्ध्यमाक्षेपकं तृष्णां तिमिरं शिरसो रुजः
पक्षाघातं श्वासकासौ हिक्कादाहौ च पाराडुताम्
कुरुतेऽतिस्रुतं रक्तं मरणं वा करोति च १४५
देहस्योत्पत्तिरसृजा देहस्तेनैव धार्यते
रक्तं जीवस्य चाधारस्तस्माद्रक्षेदसृग्बुधः १४६
शीतोपचारैः कुपिते स्रुतरक्तस्य मारुते
कोष्णेन सर्पिषा शोथं सव्यथं परिषेचयेत् १४७
क्षीणस्यैणशशोरभ्रहरिणच्छागमांसजः
रसः समुचितः पाने क्षीरः षष्टिकया हितम् १४८
पीडाशान्तिर्लघुत्वं च व्याध्युपद्रवसंक्षयः
मनःस्वास्थ्यं भवेच्चिह्नं सम्यङ्निःसारितेऽसृजि १४९
व्यायाममैथुनक्रोधशीतस्नानप्रवातकान्
एकाशनं दिवानिद्रा क्षाराम्लकटुभोजनम् १५०
शोकं वादमजीर्णञ्च त्यजेदाबलदर्शनात् १५१
सेक आश्च्योतनं पिराडी विडालस्तर्पणं तथा
पुटपाकोऽञ्जनं चैभिः कल्पैर्नेत्रमुपाचरेत् १५२

सेकस्तु सूक्ष्मधाराभिः सर्वस्मिन्नयने हितः
मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरङ्गुलः १५३
स सस्नेहो भवेद्वाते पित्ते रक्ते च रोपणः
लेखनस्तु कफे कार्यस्तस्य मात्राऽभिधीयते १५४
षड्भिर्वाचां शतैः स्नेहे चतुर्भिश्चैव रोपणे
तैस्त्रिभिर्लेखने कार्यः सेको नेत्रप्रसादने १५५
निमेषोन्मेषणं पुंसामङ्गुल्या च्छोटिकाऽथ वा
गुर्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता बुधैः १५६
सेकस्तु दिवसे कार्यो रात्रौ चात्यन्तिके गदे
एरण्डस्य दलैः पिष्टैः पक्वमाजं पयो हितम्
सुखोष्णं नेत्रयोः सिक्तं वाताभिष्यन्दनाशनम् १५७
क्वाथक्षौद्रासवस्नेहबिन्दूनां यत्तु पातनम्
द्व्यङ्गुलोन्मीलिते नेत्रे प्रोक्तमाश्च्योतनं हितम् १५८
बिन्दवोऽष्टौ लेखनेषु रोपणे दश बिन्दवः
स्नेहने द्वादश प्रोक्तास्ते शीते कोष्णरूपिणः १५९
उष्णे तु शीतरूपाः स्युः सर्वत्रैवैष निश्चयः
वाते तिक्तं तथा स्निग्धं पित्ते मधुरशीतलम् १६०
कफे तिक्तोष्णरूक्षं च क्रमादाश्च्योतनं हितम्
आश्च्योतनानां सर्वेषां मात्रा स्याद्वाक्छतोन्मिता १६१
ततः परं लोचनाभ्यां भेषजानामयोगतः
आश्च्योतनं न कर्त्तव्यं निशायां केनचित्क्वचित् १६२
बिल्वादिपञ्चमूलेन बृहत्येरण्डशिग्रुभिः
क्वाथ आश्च्योतने कोष्णो वाताभिष्यन्दनाशनः १६३
युक्तभेषजकल्कस्य पिण्डी कवलमात्रया
वस्त्रखण्डेन सम्बद्ध्या नेत्रेऽभिष्यिन्दनाशिनी १६४
स्निग्धोष्णा पिण्डिका वाते पित्ते सा शीतला मता
रूक्षोष्णा श्लेष्मणि प्रोक्ता विधिरुक्तो बुधैरयम् १६५
एरण्डपत्रमूलत्वङ्निर्मिता वातनाशिनी
धात्रीविरचिता पित्ते शिग्रुपत्रकृता कफे १६६
विडालको बहिर्लेपो नेत्रपक्ष्मविवर्जितः

तस्य मात्रा परिज्ञेया मुखालेपविधानवत् १६७
यष्टीगैरिकसिन्धूत्थदार्वीताद्यैः समांशकैः
जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः १६८
वातातपरजोहीने वेश्मन्युत्तानशायिनः
अभितो माषचूर्णेन क्लिन्नेन परिपिरिडतौ १६९
समौ दृढावसम्बाधौ कर्त्तव्यौ नेत्रकोशयोः
पूरयेद् घृतमराडेन विलीनेन सुखोदकैः १७०
सर्पिषा शतधौतेन क्षीरजेन घृतेन वा
निमग्नान्यक्षिपक्ष्माणि यावत्स्युस्तावदेव हि १७१
पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः
भिषग्भिरेष विख्यातस्तर्पणस्योदितो विधिः १७२
यद्रूक्षञ्च परिष्यन्दि नेत्रं कुटिलमाविलम्
शीर्णपक्ष्मसिरोत्पातकृच्छ्रोन्मीलनसंयुतम् १७३
तिमिरार्जुनशुक्लाद्यैरभिष्यन्दाधिमन्थकैः
शुष्काक्षिपाकशोथाभ्यां युतं वातविपर्ययैः
तन्नेत्रं तर्पयेत्सम्यङ् नेत्ररोगविशारदः १७४
तर्पणं धारयेद्वर्त्मरोगे वाचां शतं बुधः
स्वस्थे कफे सन्धिरोगे वाचां पञ्च शतानि च १७५
षट्शतानि कफे कृष्णरोगे सप्त शतानि हि
दृष्टिरोगे शतान्यष्टावधिमन्थे सहस्रकम् १७६
सहस्रं वातरोगेषु धार्यमेव हि तर्पणम् १७७
पूर्णे चापाङ्गमार्गेण स्रावयित्वाऽक्षि शोधयेत्
स्विन्नेन यवपिष्टेन स्नेहवीर्येरितं ततः १७८
यथास्वं धूमपानेन कफमस्य विरेचयेत्
एकाहं वा त्र्यहं वापि पञ्चाहं तर्पणं चरेत् १७९
तर्पणे तृप्तिलिङ्गानि नेत्रस्यैतानि लक्षयेत्
सुखस्वप्नावबोधत्वं वैशद्यं नेत्रपाटवम्
निर्वृतिर्व्याधिशान्तिश्च क्रियालाघवमेव च १८०
गुर्वाविलमतिस्निग्धमश्रुकराडूपदेहवत्
घर्षतोदयुतं नेत्रमतितर्पितमादिशेत् १८१

सास्रावशोफरोगाढ्यमुपदेहसमाकुलम्
रूक्षमस्रावमरुणं नेत्रं स्याद्धीनतर्पितम् १८२
अनयोर्दोषबाहुल्यात्प्रयतेत चिकित्सिते
रूक्षस्निग्धोपचाराभ्यामनयोः स्यात्प्रतिक्रिया १८३
दुर्दिनात्युष्णशीतेषु चिन्तायां संभ्रमेषु च
अशान्तोपद्रवे चाक्षिणि तर्पणं न प्रशस्यते १८४
द्वे बिल्वे स्निग्धमांसस्य परद्रव्यपलं मतम्
द्रवस्य कुडवोन्मानं सर्वमेकत्र पेषयेत् १८५
तदेकत्र समालोड्य पत्रैः सुपरिवेष्टितम्
पुटपाकविधानेन तत्पक्त्वा तद्रसं बुधः १८६
तर्पणोक्तेन विधिना यथावदवधारयेत्
दृष्टिमध्ये निषेच्यः स्यान्नित्यमुत्तानशायिनः १८७
स्नेहनो लेखनश्चैव रोपणश्चेति स त्रिधा
हितः स्निग्धोऽतिरूक्षस्य स्निग्धस्य स तु लेखनः १८८
दृष्टेर्बलार्थमितरः पित्तासृग्व्रणवातनुत् १८९
स्नेहमांसवसामज्जमेदःस्वाद्वौषधैः कृतः
स्नेहनः पुटपाकः स्याद्धार्यो द्वे वाक्छते तु सः १९०
जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसंयुतैः
कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः १९१
समुद्रफेनकासीसस्रोतोऽजदधिमस्तुभिः
लेखनो वाक्छतं तस्य परं धारणमिष्यते १९२
स्तन्य जाङ्गलमध्वाज्यतिक्तद्रव्यविपाचितः
लेखनात्त्रिगुणो धार्यः पुटपाकस्तु रोपणः १९३
निम्बामृतावृषपटोलनिदिग्धिकाभिः
स्यात्पञ्चतिक्तक इति प्रथितो गणोऽयम् १९४
आचरेत्तर्पणोक्तां तु क्रियां व्यापत्तिदर्शने १९५
तेजांस्यनिलमाकाशमादर्शं भास्वराणि च
नेक्षेत तर्पिते नेत्रे यश्च वा पुटपाकवान् १९६
अथ सम्पक्वदोषस्य प्राप्तमञ्जनमाचरेत्
अञ्जनं क्रियते येन तद् द्रव्यं चाञ्जनं मतम् १९७

तत्प्रत्येकं त्रिधा प्रोक्तं लेखनं रोपणं तथा
स्नेहनं चेति लिङ्गानि तेषां विस्तरतः शृणु १९८
लेखनं क्षारतीक्ष्णाम्लरसैरञ्जनमुच्यते
नेत्रवर्त्मसिराजालश्रोत्रशृङ्गाटकस्थितम् १९९
मुखनासाऽक्षिभिर्दोषमुत्क्लिश्य स्रावयेच्च तत्
कषायं तिक्तकं चापि सस्नेहं रोपणं मतम् २००
स्नेहस्य शैत्याद्वर्ण्यं स्याद् दृष्टेश्च बलवर्द्धनम्
मधुरं स्नेहमण्डं तदञ्जनं स्यात्प्रसादनम् २०१
दृष्टिदोषप्रसादार्थं स्नेहनार्थञ्च तद्धितम्
हरेणुमात्रावर्त्तिस्तु लेखनी स्यात्प्रमाणतः २०२
सार्द्धहरेणुकमिता रोपणी वर्त्तिरिष्यते
क्रियते स्नेहनी वर्त्तिर्द्विहरेणुकमात्रया २०३
रसाञ्जनस्य मात्रा तु पिष्टवर्तिमिता मता
चूर्णं तु लेखनं वैद्यैर्द्विशलाकं प्रदीयते
रोपणं त्रिशलाकं स्याच्चतस्रः स्नेहनाञ्जने २०४
मुखयोर्मुकुलाकारा कलायपरिमण्डला
अष्टाङ्गुला शलाका स्यादश्मजा धातुजाऽथ वा २०५
ताम्रलोहाश्मसञ्जाता शलाका लेखने मता
सुवर्णरजतोद्भूता स्नेहने समुदाहृता २०६
अङ्गुली च मृदुत्वेन रोपणे सम्प्रयुज्यते
कृष्णभागावधिं लिम्पेदपाङ्गं यावदञ्जनम् २०७
हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते
पूर्वाह्णेवाऽपराह्णे वा ग्रीष्मे शरदि चेष्यते २०८
वर्षास्वनभ्रे नात्युष्णे वसन्ते तु सदैव हि
अथ वा सर्वदा प्रातः सायं वाऽञ्जनमाचरेत् २०९
नातिशीतोष्णवाताभ्रवेलायां तत्प्रयुज्यते
श्रान्तेऽथ रुदिते भीते पीतमद्ये नवज्वरे २१०
अजीर्णे वेगघाते च नाञ्जनं सम्प्रयुज्यते
रागोपदेहौ तिमिरं शूलं संरम्भमेव च २११
निद्राक्षयञ्च कुरुते निषिद्धे युक्तमञ्जनम् २१२

शङ्खनाभिर्बिभीतस्य मज्जा पथ्या मनः शिला
पिप्पली मरिचं कुष्ठं वचा चेति समांशकम् २१३
छागक्षीरेण सम्पिष्य वर्त्तिं कुर्याद्यवोन्मिताम्
हरेणुमात्रां सम्पिष्य जलैः कुर्याद्यथाऽञ्जनम् २१४
तिमिरं मांसवृद्धिञ्च काचं पटलमर्बुदम्
रात्र्यन्धं वार्षिकं पुष्पं वर्त्तिश्चन्द्रोदया हरेत् २१५
इति चन्द्रोदया वर्त्तिर्लेखनी
अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः
जातीपुष्पाणि पञ्चाशन्मरिचानि तु षोडश २१६
सूक्ष्मं पिष्ट्वाऽम्बुना वर्त्तिः कृता कुसुमिकाऽभिधा
तिमिरार्जुनशुक्लानां नाशिनी मांसवृद्धिनुत्
एतस्या अञ्जने प्रोक्ता मात्रा सार्धहरेणुका २१७
धात्र्यक्षपथ्याबीजानि एकद्वित्रिगुणानि च
पिष्ट्वा वर्त्तिं जलैः कुर्यादञ्जनं द्विहरेणुकम् २१८
नेत्रस्रावं हरत्याशु वातरक्तरुजं तथा २१९
तुत्थमाक्षिकसिन्धूत्थाः सिताशङ्खमनःशिलाः
गैरिकं सिन्धुफेनञ्च मरिचं चेति चूर्णयेत् २२०
संयोज्य मधुना कुर्यादञ्जनार्थं रसक्रियाम्
वर्त्मरोगार्मतिमिरकाचशुक्लहरीं पराम् २२१
रसाञ्जनं सर्जरसो जातिपुष्पं मनः शिला
समुद्रफेनो लवणं गैरिकं मरिचं तथा२२२
एतत्समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मने
अञ्जनं क्लेदकण्डूघ्नं पक्ष्मणाञ्च प्ररोहणम् २२३
कतकस्य फलं घृष्ट्वा मधुना नेत्रमञ्जयेत्
ईषत्कर्पूरसहितं स्मृतं नेत्रप्रसादनम् २२४
दक्षाण्डत्वक्छिलाकाचशङ्खचन्दनसैन्धवैः
अञ्जनं हरते नित्यं सर्वानक्षिगदान्बलात् २२५
शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा
गृह्णीयात्तज्जलं सर्वं त्यजेच्चूर्णमधोगतम् २२६
शुष्कं तच्च जलं सर्वं पर्पटीसन्निभं भवेत्

विचूर्ण्य भावयेत्सम्यक्त्रिवेलं त्रिफलारसैः २२७
कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत्
अञ्जयेन्नयनं तेन सर्वदोषप्रशान्तये
समस्तनेत्ररोगघ्नं चूर्णमेतन्न संशयः २२८
अग्नितप्तं हि सौवीरं निषिञ्चेत्त्रिफलारसैः
सप्तवेलं तथा स्तन्यैः स्त्रीणां सिक्तं विचूर्णितम् २२९
अञ्जयेत्तेन नयने प्रत्यहं चक्षुषोर्हितम्
सर्वानक्षिविकारांस्तु हन्यादेतन्न संशयः २३०
गतदोषमपेताश्रु प्रपश्यत्सम्यगम्भसि
प्रक्षाल्याक्षि यथादोषं कार्यं प्रत्यञ्जनं ततः २३१
न वा निर्वातदोषेऽक्षिधावनं सम्प्रयोजयेत्
प्रत्यञ्जनं तत्रदद्याच्चूर्णं तीक्ष्णप्रसादनम् २३२
शुद्धे नागे द्रुते तुत्थं शुद्धं सूतं विनिक्षिपेत्
कृष्णाञ्जनं तयोस्तुल्यं सर्वमेकत्र चूर्णयेत् २३३
दशमांशेन कर्पूरं तस्मिंश्चूर्णे विनिक्षिपेत्
एतत्प्रत्यञ्जनं नेत्रगदजिन्नयनामृतम् २३४
त्रिफलाभृङ्गशुण्ठीनां रसैस्तद्वच्च सर्पिषा
गोमूत्रमध्वजाक्षीरैः सिक्तो नागः प्रतापितः २३५
तच्छलाका हरत्येव सर्वान्नेत्रभवान्गदान् २३६
इति भेषजानां विधानानि
भैषज्यमभ्यवहरेत्प्रभाते प्रायशो बुधः
कषायांस्तु विशेषेण तत्र भेदस्तु दर्शितः २३७
ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम्
किञ्चित्सूर्योदये जाते तथा दिवसभोजने
सायन्तने भोजने च मुहुश्चापि तथा निशि २३८
प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः
लेखनार्थे च भैषज्यं प्रभातेऽनन्नमाहरेत् २३९
भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते
अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत् २४०
समानवाते विगुणे मन्देऽग्नावतिदीपनम्

दद्याद्भोजनमध्ये च भैषज्यं कुशलो भिषक् २४१
व्यानकोपेतु भैषज्यं भोजनान्ते समाहरेत्
हिक्काऽक्षेपककम्पेषु पूर्वमन्ते च भोजनात् २४२
उदाने कुपिते वाते स्वरभङ्गादिकारिणि
ग्रासग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने २४३
प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते प्रदीयते
औषधं प्रायशो धीरैः कालोऽय स्यात्तृतीयकः २४४
मुहुर्मुहुश्च तृट्छर्दिहिक्काश्वासगरेषु च
सायञ्च भेषजं दद्यादिति कालश्चतुर्थकः २४५
ऊर्ध्वजत्रुविकारेषु लेखने बृंहणे तथा
पाचने शमने देयमनन्नं भेषजं निशि २४६
वीर्याधिकं भवति भेषजमन्नहीनं हन्यात्तदामयमसंशयमाशु चैव
तद्बालवृद्धयुवतीमृदुभिश्च पीतं ग्लानिं परां नयति चाशु बलक्षयञ्च २४७
शीघ्रं विपाकमुपयाति बलं न हिंस्यादन्नावृतं न च मुहुर्वदनान्निरेति
एतद्धितं स्थविरवालकृशाङ्गनाभ्यः प्राग्भोजनाद्यदशितं किल तच्च तद्वत्
२४८
औषधशेषे भुक्तं भोजनशेषे यदौषधं पीतम्
न करोति गदोपशमम्प्रकोपयत्यन्यरोगांश्च २४९
अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णासुमनस्कताः
लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः २५०
क्लमो दाहोऽङ्गसदनं भ्रममूर्च्छाशिरोरुजाः
अरतिर्बलहानिश्च सावशेषौषधाकृतिः २५१
देवान्गुरूंस्तथा विप्रान्पूजयित्वा प्रणम्य च
आशिषश्च समादाय श्रद्धया भैषजं भजेत् २५२
रसायनमिवर्षीणां देवानाममृतं यथा
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते २५३
ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः
देवाश्च सौषधिग्रामा भूमिदेवाश्च पान्तु वः २५४
औषधं हेमरजतमृद्भाजनपरिस्थितम्
पिबेदाप्तजनस्याग्रे प्रसन्नवदनेक्षणः २५५

प्रशान्तस्तूपविश्याथ पीत्वा पात्रमधोमुखम्
निक्षिप्याचम्य सलिलं ताम्बूलाद्युपयोजयेत् २५६
इति श्रीमिश्रलटकन तनय श्रीमन्मिश्रभाव विरचिते भावप्रकाशे
परिभाषादिप्रकरणे षष्ठं धूमपानादिविधिप्रकरणं समाप्तम्

अथ सप्तमं रोगिपरीक्षाप्रकरणम् ७

दर्शनस्पर्शनप्रश्नैस्तं परीक्षेत रोगिणम्
आयुरादि दृशा स्पर्शाच्छीतादि प्रश्नतः परम् १
मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैव च
तथा दुष्परिदृष्टाश्च मोहयेयुश्चिकित्सकान् २
तत्र दर्शनं नेत्रजिह्वामूत्रादीनां कर्त्तव्यम्
नेत्रं स्यात्पवनाद्रूक्षं धूम्रवर्णं तथाऽरुणम्
कोटरान्तः प्रविष्टं च तथा स्तब्धविलोकनम् ३
हरिद्राखण्डवर्णं वा रक्तं वा हरितं तथा
दीपद्वेषिसदाहञ्च नेत्रं स्यात्पित्तकोपतः ४
चक्षुर्बलासबाहुल्यात्स्निग्धं स्यात्सलिलप्लुतम्
तथा धवलवर्णञ्च ज्योतिर्हीनं बलान्वितम् ५
नेत्रं द्विदोषबाहुल्यात्स्याद्दोषद्वयलक्षणम्
त्रिदोषलिङ्गसङ्गेन तं मारयति रोगिणम् ६
त्रिदोषदूषितं नेत्रमन्तर्मग्नं भृशं भवेत्
त्रिलिङ्गं सलिलस्रावि प्रान्तेनोन्मीलयत्यपि ७
शाकपत्रप्रभा रूक्षा स्फुटना रसनाऽनिलात्
रक्ता श्यावा भवेत्पित्तात्लिप्तार्द्रा धवला कफात् ८
परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके
सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणा ९
वातेन पाण्डुरं मूत्रं रक्तं नीलञ्च पित्ततः
रक्तमेव भवेद्रक्ताद्धवलं फेनिलं कफात् १०
अथ शरीरस्य शैत्योष्णत्वादिज्ञानार्थं स्पर्शनं कार्यम्
पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्य तु
अङ्गुष्ठमूलगां नाडीं परीक्षेत भिषग्वरः ११

अङ्गुलीभिस्तु तिसृभिर्नाडीमवहितः स्पृशेत्
तच्चेष्टया सुखं दुःखं जानीयात्कुशलोऽखिलम् १२
सद्यःस्नातस्य सुप्तस्य क्षुत्तृष्णाऽतपशीलिनः
व्यायामश्रान्तदेहस्य सम्यङ् नाडी न बुध्यते १३
वातेऽधिके भवेन्नाडी प्रव्यक्ता तर्जनीतले
पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे १४
तर्जनीमध्यमामध्ये वातपित्ताधिके स्फुटा
अनामिकायां तर्जन्यां व्यक्ता वातकफे भवेत् १५
मध्यमाऽनामिकामध्ये स्फुटा पित्तकफेऽधिके
अङ्गुलित्रितयेऽपि स्यात्प्रव्यक्ता सन्निपाततः १६
वाताद्वक्रगतिं धत्ते पित्तादुत्प्लुत्य गामिनी
कफान्मन्दगतिर्ज्ञेया सन्निपातादतिद्रुता १७
वक्रमुत्प्लुत्य चलति धमनी वातपित्ततः
वहेद्वक्रञ्च मन्दञ्च वातश्लेष्माधिकत्वतः १८
उत्प्लुत्य मन्दं चलति नाडी पित्तकफेऽधिके
कामात्क्रोधाद्वेगवहा क्षीणा चिन्ताभयप्लुता १९
स्थित्वा स्थित्वा चलेद्या सा हन्ति स्थानच्युता तथा
अतिक्षीणा च शीता च प्राणान्हन्ति न संशयः २०
ज्वरकोपेन धमनी सोष्णावेगवती भवेत्
मन्दाग्नेः क्षीणधातोश्च सैव मन्दतरा मता २१
चपला क्षुधितस्य स्यात्तृप्तस्य भवति स्थिरा
सुखिनोऽपि स्थिरा ज्ञेया तथा बलवती मता २२
हेतुस्तदनु सम्प्राप्तिः पूर्वरूपञ्च लक्षणम्
तथैवोपशयः पञ्च रोगविज्ञानहेतवः २३
यत्तु न स्याद्विना येन तस्य तद्धेतुरुच्यते
शास्त्रे संव्यवहाराय तत्पर्यायान्प्रचक्ष्महे २४
निदानं कारणं हेतुर्निमित्तं च निबन्धनम्
मूलमायतनं तत्र प्रत्ययोऽपि निगद्यते २५
यथा दुष्टेन दोषेण यथा चानुविसर्पता
उत्पत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः २६

संख्याविकल्पप्राधान्यबलकालविशेषतः
साभिद्यते यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति २७
दोषाणां समवेतानां विकल्पोंऽशाशकल्पना २८
स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् २९
हेत्वादिकात्स्न्यावयवैर्बलाबलविशेषणम् ३०
नक्तंदिनर्त्तुभुक्तांशैर्व्याधिकालो यथामलम् ३१
नक्तादेरंशेषु वातादिप्रकोप उक्तो वाग्भटेन
ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः
वयोऽहोरात्रभुक्तानामन्तमध्यादिगाः क्रमात् ३२ इति
ऋतुषु वातादिकोपो यथा
वर्षासु शिशिरे वायुः पित्तं शरदि चोष्णके
वसन्ते तु कफः कुप्येदेषा प्रकृतिरार्तवी ३३
पूर्वरूपन्तु तद्येन विद्याद्भाविनमामयम्
सामान्यं च विशिष्टञ्च द्विविधं तदुदाहृतम्
सामान्यं तत्र दोषाणां विशेषैरनधिष्ठितम्
विशिष्टमीषद्व्यक्तं स्याद्विशेषैश्च समन्वितम् ३४
पूर्वरूपं विशिष्टं यद्व्यक्तं तल्लक्षणं स्मृतम्
संस्थानं लिङ्गं चिह्नञ्च व्यञ्जनं रूपमाकृतिः ३५
औषधान्नविहाराणामुपयोगं सुखावहम्
नृणामुपशयं विद्यात्सहि सात्म्यमिति स्मृतः ३६
मधुरलवणसाम्लस्निग्धनस्योष्णनिद्रागुरुरविकरवस्तिस्वेदसंमर्दनानि
दधिघृततिलतैलाभ्यङ्गसन्तर्पणानिप्रकुपितपवमानं शान्तमेतानि कुर्य्युः ३७
तिक्तस्वादुकषायशीतपवनच्छायानिशावीजनं
ज्योत्स्नाभूगृहयन्त्रवारिजलजं स्त्रीगात्रसंस्पर्शनम्
सर्पिःक्षीरविरेकसेकरुधिरस्त्रावप्रदेहादिकं
पानाहारविहारभेषजमिदं पित्तप्रशान्तिं नयेत् ३८
रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवनं
धूमात्युष्णशिरोविरेकवमनस्वेदोपवासादिकम्
तृड्वाताध्वनियुद्धजागरजलक्रीडाऽङ्गनासेवनं-
पानाहारविहारभेषजमिदं श्लेष्माणमुग्रं हरेत् ३९

सर्वेषामेव रोगाणां निदानं कुपिता मलाः
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ४०
नीवारस्त्रिपुटः सतीनचणकश्यामाकमुद्गाढकी
निष्पावाश्च मकुष्ठकश्चवरटी मङ्गल्यकः कोद्रवः
यद् द्रव्यं कटुकं सतिक्ततुवरं शीतञ्च रूक्षं लघु-
स्वल्पाशो विषमाशनं निरशनं भुक्तेह्यजीर्णेऽशनम् ४१
भुक्तं जीर्णतरं परिश्रमभरोगर्त्तादिकोष्णं ल्लिं घनं-
बाहुभ्यांतरणं तरोः प्रपतनं मार्गेऽतियानं पदा
दण्डादिप्रहृतिस्तथोच्चपतनं धातुक्षयो जागरो-
मार्गस्यावरणंव्यवायभृशता वातादिवेगाहतिः ४२
अत्यर्थं वमनं विरेचनमतिस्त्रावोऽधिकश्चासृजो-
रोगान्मांसविहीनताऽतिमदनश्चिन्ता च शोको भयम्
वर्षा वै शिशिरो दिनस्य रजनेर्भागौ तृतीयौ घनाः
प्राग्वातस्तुहिनं शरीरमरुतो दुष्टेरमी हेतवः ४३
कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातप-
स्त्रीसम्भोगतृषाक्षुधाऽभिहननव्यायाममद्यादिभिः
भुक्ते जीर्यति भोजने च शरदि ग्रीष्मे तथा प्राणिनां
मध्याह्ने च तथाऽधरात्रिसमये पित्तप्रकोपो भवेत् ४४
विदाहिद्रव्यमुद्गारमम्लं कुर्यात्तथा तृषाम्
हृद्विदाहञ्च जनयेत्पाकं गच्छति तच्चिरात् ४५
माषैस्तिलैः कुलत्थैश्च मत्स्यैर्मेषामिषेण च
गव्येन दधितक्रेण नृणां पित्तं प्रकुप्यति ४६
गुरुपटुमधुराम्लस्निग्धमाषैस्तिलैश्च द्रवदधिदिननिद्राशीतसर्पिः प्रपूरैः
प्रथमदिवसभागे रात्रिभागेऽपि चाद्येभवति हि कफकोपो भुक्तमात्रे वसन्ते
४७
निदानार्थकरो रोगो रोगस्याप्युपलक्ष्यते ४८
कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति ४९
न प्रशाम्यति चाप्यन्यो हेत्वर्थं कुरुतेऽपि च ५०
अत्यन्तकुत्सितावेतौ सदा स्थूलकृशौ नरौ
श्रेष्ठो मध्यशरीरस्तु स्थूलः क्षीणो न पूजितः

कर्षयेद् बृंहयेच्चापि सदा स्थूलकृशौ नरौ
रक्षणञ्चापि मध्यस्य कुर्वीत कुशलो भिषक् ५१
क्षपयेद् बृंहयेच्चापि दोषधातुमलान्भिषक्
नरो रोगान्वितो यावद्रोगेण रहितो भवेत् ५२
अस्वस्थो येन विधिना स्वस्थो भवति मानवः
तमेव कारयेद्वैद्यो यतः स्वास्थ्यं सदेप्सितम् ५३
समदोषः समाग्निश्च समधातुमलक्रियः
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ५४
विण्मूत्राखिलदोषधातुसमता काङ्क्षाऽन्नपाने रुचि-
र्भुक्तं जीर्यति पुष्टये परिणतिः स्वप्नावबोधौ सुखम्
गृह्णीते विषयान्यथास्वमुचितान्वृत्तिं मनोवृत्तितः
स्वस्थस्याभिहितं चतुर्दशविधं जन्तोरिदं लक्षणम् ५५
तत्तद्वृद्धिकराहारविहारातिनिषेवणात्
दोषधातुमलानां हि वृद्धिरुक्ता भिषग्वरैः ५६
वाते वृद्धे भवेत्कार्श्यं पारुष्यं चोष्णकामिता
गाढं मलं बलञ्चाल्पं गात्रस्फूर्त्तिर्विनिद्रता
विण्मूत्रनेत्रगात्राणां पीतत्वं क्षीणमिन्द्रियम्
शीतेच्छातापमूर्च्छाःस्युः पित्ते वृद्धेऽल्पमूत्रता ५७
विडादिशौक्ल्यं शीतत्वं गौरवञ्चातिनिद्रता
सन्धिशैथिल्यमुत्क्लेदो मुखसेकः कफेऽधिके ५८
रसे वृद्धेऽन्नविद्वेषो जायते गात्रगौरवम्
लालाप्रसेकश्छर्दिश्च मूर्च्छा सादो भ्रमः कफः ५९
प्रवृद्धं रुधिरं कुर्याद् गात्रमारक्तवर्णकम्
लोचनञ्च तथा रक्तं सिराः पूरयतेऽपि च ६०
रक्तन्तु कुरुते वृद्धं विसर्पप्लीहविद्रधीन्
कुष्ठं वातास्रकं गुल्मं सिरापूर्णत्वकामले ६१
गात्राणां गौरवं निद्रा मदो दाहश्च जायते
व्यङ्गाग्निसादसंमोहरक्तत्वङ्नेत्रमूत्रताः ६२
गुदमेढ्रास्यपाकार्शःपिडकामशकास्तथा
इन्द्रलुप्ताङ्गमर्दासृग्दरास्तापं कराङ्घ्रिषु ६३

शमयेद्रक्तवृद्ध्युत्थान् रक्तस्त्रुतिविरेचनैः
मांसं वृद्धन्तु गण्डौष्ठस्फिगुपस्थोरुवाहुषु
जङ्घयोः कुरुते वृद्धिं तथा गात्रस्य गौरवम् ६४
उदरे पार्श्वयोर्वृद्धिः कासश्वासादयस्तथा
दौर्गन्ध्यं स्निग्धता गात्रे मेदोवृद्धौ भवेदिति ६५
प्रवृद्धं कुरुते मेदः श्रममल्पेऽपि चेष्टिते
तृट्स्वेदगलगण्डौष्ठरोगमेहादिजन्म च ६६
श्वासं स्फिग्जठरग्रीवास्तनानां लम्बनं तथा
वृद्धान्यस्थीनि कुर्वन्ति अस्थीन्यन्यानि चास्थिषु ६७
आचरन्ति तथा दन्तान्विकटान्महतस्तथा
मज्जा वृद्धः समस्ताङ्गनेत्रगौरवमाचरेत् ६८
शुक्राश्मरी शुक्रवृद्धौ शुक्रस्यातिप्रवर्त्तनम्
मलप्रवृद्धावाटोपो जायते जठरे व्यथा ६९
मूत्रे वृद्धे मुहुर्मूत्रमाध्मानं वस्तिवेदना
स्वेदे वृद्धे तु दौर्गन्ध्यं त्वचि कण्डूश्च जायते ७०
आर्त्तवातिप्रवृत्तिः स्याद्दौर्गन्ध्यं चार्त्तवे भवेत्
अङ्गमर्दश्च जायेत लिङ्गं स्यादार्त्तवेऽधिके ७१
स्तनयोरतिपीनत्वं क्षीरस्त्रावो मुहुर्मुहुः
तोदश्च तत्र भवति स्तन्याधिक्यस्य लक्षणम् ७२
उदरादिप्रवृद्धिस्तु वृद्धे गर्भेऽभिजायते
स्वेदश्च गर्भवत्याः स्यात्प्रसवे व्यसनं महत् ७३
तत्तद्ध्रासकराहारविहारपरिषेवणात्
दोषधातुमलानां हि ह्रासो निगदितो नृणाम् ७४
पूर्वः पूर्वोऽतिवृद्धत्वाद्वर्द्धयेद्धि परस्परम्
तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम् ७५
असात्म्यान्नसदाक्रोधशोकचिन्ताभयश्रमै
अतिव्यवायानशनात्यर्थसंशोधनै्रपि ७६
वेगानां धारणाच्चापि साहसादविघाततः
दोषाणामथ धातूनां मलानाञ्च भवेत्क्षयः ७७
वातक्षयेऽल्पचेष्टत्वं मन्दवाक्यं विसंज्ञता

पित्तक्षयेऽधिकः श्लेष्मा वह्निमान्द्यं प्रभाक्षयः ७८
सन्धयः शिथिला मूर्च्छा रौक्ष्यं दाहः कफक्षये
हृत्पीडा कण्ठशोषौत्वक्शून्यातृट् च रसक्षये ७९
सिराः श्लथा हिमाम्लेच्छा त्वक्पारुष्यं क्षयेऽसृजः
गण्डौष्ठकन्धरास्कन्धवक्षोजठरसन्धिषु ८०
उपस्थशोथपिण्डीषु शुष्कता गात्ररूक्षता
तोदो धमन्यः शिथिला भवेयुर्मांससंक्षये ८१
प्लीहाभिवृद्धिः सन्धीनां शून्यता तनुरूक्षता
प्रार्थना स्निग्धमांसस्य लिङ्गं स्यान्मेदसः क्षये ८२
अस्थिशूलं तनौ रौक्ष्यं नखदन्तत्रुटिस्तथा
अस्थिक्षये लिङ्गमेतद्वैद्यैः सर्वैरुदाहृतम् ८३
शुक्राल्पत्वं पर्वभेदस्तोदः शून्यत्वमस्थिनि
लिङ्गान्येतानि जायन्ते नराणां मज्जसंक्षये ८४
शुक्रक्षये रतेऽशक्तिर्व्यथा शेफसि मुष्कयोः
चिरेण शुक्रसेकः स्यात्सेके रक्ताल्पशुक्रता ८५
ओजः संक्षीयते कोपाच्चिन्ताशोकश्रमादिभिः
रूक्षतीक्ष्णोष्णकटुकैः कर्षणैरपरैरपि ८६
बिभेति दुर्बलोऽभीक्ष्णं चिन्तयेद्व्यथितेन्द्रियः
अभ्युत्थायोन्मना रूक्षः क्षामः स्यादोजसः क्षये ८७
पुरीषस्य क्षये पार्श्वे हृदये च व्यथा भवेत्
सशब्दस्यानिलस्योर्ध्वगमनं कुक्षिसंवृतिः ८८
मूत्रक्षयेऽल्पमूत्रत्वं वस्तौ तोदश्च जायते
स्वेदनाशस्त्वचो रौक्ष्यं चक्षुषोरपि रूक्षता ८९
स्तब्धाश्च रोमकूपाः स्युर्लिङ्गं स्वेदक्षये भवेत्
आर्त्तवस्य स्वकाले चाभावस्तस्याल्पताऽथ वा ९०
जायते वेदना योनौ लिङ्गं स्यादार्त्तवक्षये
अभावः स्वल्पता वा स्यात्स्तन्यस्य भवतस्तथा ९१
ग्लानौ पयोधरावेतल्लक्षणं स्तन्यसंक्षये
अनुन्नतो भवेत्कुक्षिर्गर्भस्यास्पन्दनं तथा
इति गर्भक्षये प्राज्ञैर्लक्षणं समुदाहृतम् ९२

तत्तत्संवर्द्धनाहारविहारातिनिषेवणात्
तत्तत्प्राप्य नरः शीघ्रं तत्तत्क्षयमपोहति ९३
ओजस्तु वर्द्धते नृणां सुस्निग्धैः स्वादुभिस्तथा
वृष्यैरन्यैर्विशेषात्तु क्षीरमांसरसादिभिः ९४
दोषधातुमलक्षीणो बलक्षीणोऽपि मानवः
तत्तत्संवर्द्धनं यत्तदन्नपानं प्रकाङ्क्षति ९५
यद्यदाहारजातन्तु क्षीणः प्रार्थयते नरः
तस्य तस्य स लाभेन तत्तत्क्षयमपोहति ९६
कषायकटुतिक्तानि रूक्षशीतलघूनि च
यवमुद्गप्रियङ्गूंश्च वातक्षीणोऽभिकाङ्क्षति ९७
तिलमाषकुलत्थादिपिष्टान्नविकृतिं तथा
मस्तुशुक्ताम्लतक्राणि काञ्जिकञ्चतथा दधि ९८
कट्वम्ललवणोष्णानि तीक्ष्णं क्रोधं विदाहि च
समयं देशमुष्णञ्च पित्तक्षीणोऽभिकाङ्क्षति ९९
मधुरस्निग्धशीतानि लवणाम्लगुरूणि च
दधि क्षीरं दिवास्वप्नं कफक्षीणोऽभिकाङ्क्षति १००
रसक्षीणो नरः काङ्क्षत्यम्भोऽतिशिशिरं मुहुः
रात्रिनिद्रां हिमं चन्द्रं भोक्तुञ्च मधुरं रसम् १०१
इक्षुं मांसरसं मन्थं मधु सर्पिर्गुडोदकम् १०२
द्राक्षादाडिमशुक्तानि सस्नेहलवणानि च
रक्तसिद्धानि मांसानि रक्तक्षीणोऽभिकाङ्क्षति १०३
अन्नानि दधिसिद्धानि षाडवांश्च बहूनपि
स्थूलक्रव्यादमांसानि मांसक्षीणोऽभिकाङ्क्षति १०४
मेदः सिद्धानि मांसानि ग्राम्यानूपौदकानि च
सक्षाराणि विशेषेण मेदःक्षीणोऽभिकाङ्क्षति १०५
अस्थिक्षीणस्तथा मांसं मज्जास्थिस्नेहसंयुतम्
स्वाद्वम्लसंयुतं द्रव्यं मज्जाक्षीणोऽभिकाङ्क्षति १०६
शिखिनः कुक्कुटस्याण्डं हंससारसयोस्तथा
ग्राम्यानूपौदकानाञ्च शुक्रक्षीणोऽभिकाङ्क्षति १०७
यवान्नं यवकान्नञ्च शाकानि विविधानि च

मसूरमाषयूषञ्च मलक्षीणोऽभिकाङ्क्षति १०८
पेयमिक्षुरसं क्षीरं सगुडं बदरोदकम्
मूत्रक्षीणोऽभिलषति त्रपुसैर्वारुकाणि च १०९
अभ्यङ्गोद्वर्त्तने मद्यं निवातशयनासने
गुरु प्रावरणं चैव स्वेदक्षीणोऽभिकाङ्क्षति ११०
कट्वम्ललवणोष्णानि विदाहीनि गुरूणि च
फलशाकानि पानानि स्त्री काङ्क्षत्यार्त्तवक्षये १११
सुराशाल्यन्नमांसानि गोक्षीरं शर्करां तथा
आसवं दधि हृद्यानि स्तन्यक्षीणाऽभिवाञ्छति ११२
मृगाजाविवराहाणां गर्भान्वाञ्छति संस्कृतान्
वसाशूल्यप्रकारादीन्भोक्तुं गर्भपरिक्षये ११३
रसादिशुक्रपर्य्यन्तं धातुपुष्टिनिमित्तकम्
चेष्टासु पाटवं यत्तु बलं तदभिधीयते ११४
अभिघाताद्भयात्क्रोधाच्चिन्तया च परिश्रमात्
धातूनां संक्षयाच्छोकाद्बलं संक्षीयते नृणाम् ११५
गौरवं स्तब्धता गात्रे मुखम्लानिर्विवर्णता
तन्द्रा निद्रा वातशोथो बलव्यापत्तिलक्षणम् ११६
दोषसाम्यकरं यत्तु बह्निसाम्यकरं च यत्
धातुपुष्टिकरं द्रव्यं बलं तदभिवर्द्धयेत् ११७
कृशोऽपि बलवान्कश्चित् स्थूलोऽत्यल्पबलो यतः
तस्माच्चेष्टापटुत्वेन बलवन्तं विदुर्बुधाः ११८
इति श्रीमिश्रलटकन तनय श्रीमन्मिश्रभाव विरचिते श्रीभावप्रकाशे पूर्वखरडे
परिभाषादिप्रकरणे सप्तमं रोगिपरीक्षाप्रकरणं समाप्तम् ७
इति पूर्व खरडं समाप्तम्

Bhāva Prakāśha, by Bhav Mishra, edited by Brahmashankar Mishra, 1969 edition.
Typed by Pramod Sharma, M.A.
Proofread by Maya Nand Sastri, Ved Vyakaranacharya.
Font conversion by Claude Setzer and Ralph Bunker.
Formatted for Maharishi University of Management Vedic Literature Collection

अथ मध्यखण्डम्
ज्वराधिकारः
तत्राष्टमं चिकित्साप्रकरणम् ८

यतः समस्तरोगाणां ज्वरो राजेति विश्रुतः
अतो ज्वराधिकारोऽत्र प्रथमं लिख्यते मया १
दक्षापमानसंक्रुद्धरुद्रनिः श्वाससम्भवः
ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः २
मिथ्याऽहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः
बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः३
श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ४
जृम्भाऽङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः
अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे ५
सामान्यतो विशेषात्तु जृम्भाऽत्यर्थं समीरणात्
पित्तान्नयनयोर्दाहः कफान्नान्नाभिनन्दनम् ६
रूपैरन्यतराभ्यां तु संसृष्टैर्द्वन्द्वजं विदुः ७
सर्वलिङ्गसमावायः सर्वदोषप्रकोपजे ८
स्वेदावरोधः सन्तापः सर्वाङ्गग्रहणं तथा
युगपद्यत्र रोगे तु स ज्वरो व्यपदिश्यते ९
रुणद्धि चाप्यपां धातून् यस्मात्तस्माज्ज्वरातुरः
भवत्यत्युष्णगात्रश्च स्विद्यते न च सर्वशः१०
अंशांशं यत्र दोषाणां विवेक्तुं नैव शक्नुयात्
साधारणीं क्रियां तत्र विदध्यात्तु चिकित्सकः
सामान्यतो ज्वरी पूर्वं निर्वाते निलये वसेत्
निर्वातमायुषो वृद्धिमारोग्यं कुरुते यतः ११
व्यजनस्यानिलस्तृष्णास्वेदमूर्च्छाश्रमापहः
तालवृन्तभवो वातस्त्रिदोषशमनो मतः १२
वंशव्यजनजः सोष्णो रक्तपित्तप्रकोपणः
चामरो वस्त्रसम्भूतो मायूरो वेत्रजस्तथा
एते दोषजितो वाताः स्निग्धा हृद्याः सुपूजिताः १३

नवज्वरी भवेद् यत्नाद् गुरूष्णवसनावृतः
यथर्त्तुपक्वपानीयं पिबेत्किञ्चिंन्निवारयन् १४
विनाऽपि भेषजैर्व्याधिः पथ्यादेव निवर्तते
न तु पथ्यविहीनस्य भेषजानां शतैरपि १५
परिषेकान्प्रदेहांश्च स्नेहान्संशोधनानि च
दिवास्वप्नं व्यवायञ्च व्यायामं शिशिरं जलम्
क्रोधप्रवातभोज्यांश्च वर्जयेत्तरुणज्वरी १७
शोषं छर्दिं मदं मूर्च्छां भ्रमं तृष्णामरोचकम्
प्राप्नोत्युपद्रवानेतान्परिषेकादिसेवनात् १८
व्यायामाज्ज्वरसंबृद्धिर्व्यवायात्स्तम्भमूर्च्छनम्
मृतिश्च स्नेहपानाद्यैर्मूर्च्छा च्छर्दिर्मदोऽरुचिः १९
गुर्वन्नभोजनात्स्वप्नाद्विष्टम्भो दोषकोपनम्
अग्निसादः खरत्वञ्च स्रोतसां च प्रवर्त्तनम् २०
सज्वरो ज्वरमुक्तो वा विदाहीनि गुरूणि च
असात्म्यान्नानि पानानि विरुद्धाध्यशनानि च २१
व्यायाममतिचेष्टां वाऽभ्यङ्गं स्नानञ्च वर्जयेत्
तेन ज्वरः शमं याति शान्तश्च न पुनर्भवेत् २२
आमाशयस्थो हत्वाऽग्निं सामो मार्गान् पिधापयन्
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् २३
ज्वरादौ लङ्घनं प्रोक्तं ज्वरमध्ये तु पाचनम्
ज्वरान्ते भेषजंदद्याज्ज्वरमुक्ते विरेचनम् २४
त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत्
दोषेऽल्पे लङ्घनं पथ्यं मध्ये लङ्घनपाचनम्
प्रभूते शोधनं तच्च मूलादुन्मूलयेन्मलान् २५
तरुणं तु ज्वरं पूर्वं लङ्घनेन क्षयं नयेत्
आमदोषमलिङ्गाद्वा लङ्घयेत्तं यथाविधि २६
वातः पचति सप्ताहात्पित्तं तु दशभिर्दिनैः
श्लेष्मा द्वादशभिर्घस्रैः पच्यते वदतां वर २७
लङ्घनं लङ्घनीयस्तु कुर्याद्दोषानुरूपतः
त्रिरात्रमेकरात्रं वाऽहोरात्रमथवा ज्वरे २८

निर्वातसेवनात्स्वेदाल्लङ्घनादुष्णवारिणः
पानादामज्वरे क्षीणे पश्चादौषधमाचरेत् २९
ज्वरादौ लङ्घनं प्रोक्तं ज्वरमध्ये तु पाचनम्
ज्वरान्ते भेषजं दद्याज्ज्वरमुक्ते विरेचनम् ३०
दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च
लङ्घितश्चाप्यदोषश्चेद्यवागूपानमाचरेत् ३१
शालिषष्टिकमुद्गानां यूषं वा शस्तमाचरेत्
पञ्चकोलेन संसिद्धां यवागूं मध्यलङ्घने ३२
अत्यर्थं लङ्घितं दृष्ट्वा तस्य संतर्पणं हितम्
द्राक्षादाडिमखर्जूरप्रियालैः सपरूषकैः ३३
तर्पणार्हस्य कर्त्तव्यं तर्पणं ज्वरशान्तये ३४
लङ्घनेन क्षयं नीते दोषे सन्धुक्षितेऽनले
विज्वरत्वं लघुत्वं च क्षुच्चैवास्योपजायते ३५
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम्
ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम् ३६
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ३७
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ३८
कफोत्क्लेशः सहृल्लासः ष्ठीवनं च मुहुर्मुहुः
कण्ठास्यहृदयाशुद्धिस्तन्द्रा स्याद्धीनलङ्घने ३९
पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ४०
मनसः संभ्रमोऽभीक्ष्णमूर्ध्ववातस्तमो हृदि
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ४१
बलाविरोधिना चैनं लङ्घनेनोपपादयेत्
बलाधिष्ठानमारोग्यं यदर्थोऽय क्रियाक्रमः ४२
तद्धि मारुततृष्णाक्षुन्मुखशोषभ्रमान्वितः
न कार्यं गुर्विणीबालवृद्धदुर्बलभीरुभिः
न क्षयाध्वश्रमक्रोधकामशोषचिरज्वरी ४३

अवश्यमेव कुर्वीत ज्वरी सामे समीरणे
लङ्घनं ह्यामपाकार्थं न तदूर्ध्वं यथा कफे ४४
आहारस्य रसः सारो यो न पक्वोऽग्निलाघवात्
आमसंज्ञाञ्च लभते बहुव्याधिसमाश्रयः ४५
आममन्नरसं केचित् केचित्तु मलसञ्चयम्
प्रथमां दोषदुष्टिं वा केचिदामं प्रचक्षते ४६
अविपक्वमसंसक्तं दुर्गन्धं बहुपिच्छिलम्
सादनं सर्वगात्राणामाम इत्यभिशब्दितः ४७
तेनामेन समायुक्ता दोषा दूष्याश्च तादृशाः
तदुद्भवा आमयाश्च सामा इति बुधैः स्मृताः ४८
वायुः सामो विबन्धाग्नि सादतन्द्राऽन्त्रकूजनः
वेदनाशोथनिस्तोदैः क्रमतोऽङ्गानि पीडयेत् ४९
विचरेद् युगपच्चापि गृह्णाति कुपितो भृशम्
स्नेहाद्यैर्वृद्धिमायाति मेघे सूर्य्योदये निशि ५०
निरामो विशदो रूक्षो निर्गन्धोऽत्यल्पवेदनः
विपरीतगुणैः शान्तिं स्निग्धैर्याति विशेषतः ५१
पित्तं सामं भवेदम्लं दुर्गन्धं हरितं गुरु
अम्लिकाकराठहृद्दाह करं श्यावं तथा स्थिरम् ५२
निरामं पित्तमाताम्रमत्युष्णं कटुकं सरम्
दुर्गन्धि रुचिकृद् वह्निबलवर्धनमीरितम् ५३
आविलस्तन्तुलः स्त्यानः कराठदेशे च तिष्ठति
सामो बलासो दुर्गन्धस्तृट्क्षुधोरुपघातकृत् ५४
श्लेष्मा निरामो निर्गन्धः फेनवांश्छेदवानपि
भवेत् स पिरिडतः पाराडु रास्यवैरस्यनाशकृत् ५५
आलस्यतन्द्राहृदयाविशुद्धि दोषप्रवृत्त्याविलमूत्रताभिः
गुरूदरत्वारुचिसुप्तताभिरामान्वितं व्याधिमुदाहरन्ति ५६
आमं जयेल्लङ्घनकोष्णपेया लघ्वन्नसूपौदनतिक्तयूषैः
विरूक्षणस्वेदनपाचनैश्च संशोधनैरूर्ध्वमधस्तथैव ५७
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति
अतः सर्वास्ववस्थासु न क्वचिद् वारि वर्जयेत् ५८

तृष्णा गरीयसी घोरा सद्यः प्राणविनाशिनी
तस्माद्देयं तृषाऽऽर्त्ताय पानीयम्प्राणधारणम् ५९
नवज्वरे प्रतिश्याये पार्श्वशूले गलग्रहे
सद्यः शुद्धौ तथाऽध्माने व्याधौ वातकफोद्भवे ६०
अरुचिग्रहणीगुल्म श्वासकासेषु विद्रधौ
हिक्कायां स्नेहपाने च शीतं वारि विवर्जयेत् ६१
सेव्यमानेन शीतेन ज्वरस्तोयेन वर्द्धते ६२
क्वाथ्यमानं तु निर्वेगं निष्फेनं निर्मलं तथा
अर्द्धावशिष्टं यत् तोयं तदुष्णोदकमुच्यते ६३
ज्वरकासकफश्वास  पित्तवातामममेदसाम्
नाशनं पाचनञ्चैव पथ्यमुष्णोदकं सदा ६४
त्रिपादशेषं सलिलं ग्रीष्मे शरदि शस्यते
हिमेऽद्धशेषं शिशिरे तथा वर्षावसन्तयोः ६५
निदाघे त्वर्द्धपादोनं पादहीनन्तु शारदम्
शिशिरे च वसन्ते च हिमे चार्द्धावशेषितम् ६६
अष्टमांशावशेषन्तु वारि वर्षासु शस्यते
इति केचिद् बुधाः प्राहुर्जेज्ञटागमदर्शनात् ६७
पक्षयोस्त्रिषु वेदेषु बाणेष्वङ्गेषु सप्तसु
एषु भागावशेषं स्यादम्बु वर्षाऽदिषु क्रमात् ६८
तत्पादहीनं पित्तघ्नमर्द्धहीनन्तु वातनुत्
त्रिपादहीनं श्लेष्मघ्नं संग्राह्यग्निप्रदं लघु ६९
पादशेषं तु यत्तोयमारोग्याम्बु तदुच्यते
आरोग्याम्बु सदा पथ्यं कासश्वासकफापहम् ७०
सद्योज्वरहरं ग्राहि दीपनं पाचनं लघु
आनाहपाण्डुशूलार्शो गुल्मशोथोदरापहम् ७१
हेमन्ते शिशिरे चाम्बु सारसं वा तडागजम्
वसन्तग्रीष्मयोः कौप्यं वाप्यं वा नैर्झरं हितम् ७२
नादेयं वारि नादेयं वसन्तग्रीष्मयोर्बुधः
विषवत्पत्रपुष्पादि दुष्टनिर्झरयोगतः ७३
आद्भिदं चान्तरिक्षं वा कौप्यं वा प्रावृषि स्मृतम्

शस्तं शरदि नादेयं नीरमंशूदकं परम् ७४
दिवा रविकरैर्जुष्टं निशि शीतकरांशुभिः
ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम् ७५
अनभिष्यन्दि निर्दोषञ्चान्तरिक्षजलोपमम्
बल्यं रसायनं मेध्यं शीतं लघु सुधासमम्७६
शरद्यगस्तेरुदयादखिलं सलिलं हितम् ७७
कार्त्तिके मार्गशीर्षे च जलमात्रं प्रशस्यते ७८
दाहातिसारपित्तास्त्र मूर्च्छामद्यविषार्त्तिषु
मूत्र कृच्छ्रे पाराडुरोगे तृष्णाच्छर्दिश्रमेषु च
मद्यपानसमुद्भूते रोगे पित्तोत्थिते तथा
सन्निपातसमुत्थेषु शृतशीतं प्रशस्यते ७९
शृताम्बु तत्त्रिदोषघ्नं तदन्तर्बाष्पशीतलम्
अरूक्षमनभिष्यन्दि कृमितृड्ज्वरहृल्लघु
धारापातेन विष्टम्भि दुर्जरं पवनाहतम्८०
भिनत्ति श्लेष्मसङ्घातं मारुतं चापकर्षति
अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि ८१
दिवा शृतंपयो रात्रौ गुरुतामधिगच्छति
रात्रौ शृतं दिवा पीतं गुरुत्वमधिगच्छति ८२
तत्तु पर्य्युषितं वह्निगुणोत्सृष्टं त्रिदोषकृत्
गुर्वम्लपाकं विष्टम्भि सर्वरोगेषु निन्दितम् ८३
शृतशीतं पुनस्तप्तं तोयं विषसमं भवेत्
निर्य्यूहोऽपि तथा शीतः पुनस्तप्तो विषोपमः ८४
अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा
अथ वा क्वथनेनैवसिद्धमुष्णोदकं वदेत् ८५
श्लेष्मानिलाममेदोघ्नं दीपनं बस्तिशोधनम्
श्वासकासज्वरहरं पीतमुष्णोदकं निशि ८६
रात्रावुष्णोदकञ्च तप्तमेव पिबेदित्याह
उष्णं तदग्निजननं लघ्वच्छं बस्तिशोधनम् ८७
पार्श्वरुक्पीनसाध्मानहिक्काऽनिलकफापहम्
शस्तं तृट्श्वासशूलेषु सद्यःशुद्धौ नवज्वरे ८८

मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये
भ्रमश्रमपरीतेषु तमके श्वयथौ तथा ८९
धूमोद्गारे विदग्धेऽन्ने शोषे च मुखकण्ठयोः
ऊर्ध्वगे रक्तपित्ते च शीतलाम्बु प्रशस्यते ९०
आमं जलं पाकमुपैति यामं पक्वं पुनः शीतलमर्द्धयामम्
पक्वं कदुष्णञ्च ततोऽर्द्धकालात् त्रयः सुपीतस्य जलस्य पाके ९१
पित्तमद्यविषार्त्तेषु तिक्तकैः शृतशीतलम् ९२
मुस्तपर्पटकोदीच्यच्छत्राऽख्योशीरचन्दनैः
शृतं शीतं जलं दद्यात्तृड्दाहज्वरशान्तये ९३
दिवास्वापं न कुर्वीत यतोऽसौ स्यात्कफावहः
ग्रींष्मवर्ज्येषु कालेषु दिवास्वापो निषिध्यते ९४
उचितो हि दिवास्वापो नित्यं येषां शरीरिणाम्
वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ९५
व्यायामप्रमदाऽध्ववाहनरतान् क्लान्तानतीसारिणः
शूलश्वासवमीतृषापरिगतान् हिक्कामरुत्पीडितान्
क्षीणान्क्षीणकफाञ्छिशून्मदहतान्वृद्धांस्तथाऽजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान्कामं दिवा स्वापयेत् ९६
वातिकः सप्तरात्रेण दशरात्रेण पैत्तिकः
श्लैष्मिको द्वादशाहेन ज्वरः पाकमुपैति हि ९७
आ सप्तरात्रात्तरुणं ज्वरमाहुर्मनीषिणः
द्वादशाहमभिव्याप्य मध्यं जीर्णं ततः परम् ९८
वातिके सप्तरात्रेण दशरात्रेण पैत्तिके
श्लैष्मिके द्वादशाहेन ज्वरे युञ्जीत भेषजम् ९९
ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम् १००
तत्राऽनुक्ते प्रभातं स्यात्कषायेषु विशेषतः
मुख्यभैषज्यसम्बन्धो निषिद्धस्तरुणज्वरे १०१
तोयपेयाऽदिसंस्कारैर्निर्दोषं तत्र भेषजम् १०२
दोषा वृद्धाः कषायेण स्तम्भितास्तरुणज्वरे
स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम् १०३
न च्यवन्ते न पच्यन्ते कषायैः स्तम्भिता मलाः

तिर्यग्विमार्गगा वाते घोरं कुर्युर्नवज्वरम् १०४
अनवस्थितदोषाणां वमनं तरुणज्वरे
हृद्रोगं श्वासमानाहं मोहं च कुरुते भृशम् १०५
सद्योभुक्तस्य वा जाते ज्वरे सन्तर्पणोत्थिते
वमनं वमनार्हस्य शस्तमित्याह वाग्भटः १०६
पाययेदातुरं सामं पाचनं सप्तमे दिने
शमनेनाथ वा दृष्ट्वा निरामं तमुपाचरेत् १०७
कृशं चैवाल्पदोषञ्च शमनीयैरुपाचरेत् १०८
नागरं देवकाष्ठञ्च ध्यामकं बृहतीद्वयम्
दद्यात्पाचनकं पूर्वं ज्वरितेभ्यो ज्वरापहम् १०९
अथ संशमनीयानि कषायाणि निबोध मे
सर्वज्वरेषु देयानि यानि वैद्येन जानता ११०
बृश्चीरो विश्ववर्षाभूः पयः सोदकमेव च
पचेत्क्षीरावशेषं तत्पेयं सर्वज्वरापहम्१११
उदकाद् द्विगुणं क्षीरं शिंशपोशीरमेव च
तत्क्षीरशेषं क्वथितं पेयं सर्वज्वरापहम् ११२
गुडूचीधान्यकारिष्टं पद्मकं रक्तचन्दनम्
एषां क्वाथः सुप्रसिद्धः सर्वज्वरहरः स्मृतः
दीपनो दाहहृल्लासतृष्णाच्छर्द्यरुचीर्हरेत् ११३
छर्दिमूर्च्छामदश्वासभ्रमतृड्विषमज्वरान्
संशोधनस्य पानेन प्राप्नोति तरुणज्वरी ११४
रोगे शोधनसाध्ये तु यं विद्याद् दोषदुर्बलम्
तं समीक्ष्य भिषक्कुर्याद् दोषप्रच्यावनं मृदु ११५
सद्योज्वरे विषेऽजीर्णे मन्देऽग्नावुदरे तथा
स्तन्यरोगे च हृद्रोगे कासश्वासेषुवामयेत् ११६
जीर्णज्वरगरच्छर्दिगुल्मप्लीहोदरेषु च
शूले शोथे मूत्रघाते कृमिरोगे विरेचयेत् ११७
चले दोषे मृदौ कोष्ठे नेक्षेत्तत्र बलं नृणाम्
अव्यापद् दुर्बलस्यापि शोधनं हि तदा भवेत् ११८
पक्वोऽप्यनिर्हृतो दोषो देहे तिष्ठन्महात्ययम्

विषमं वा ज्वरं कुर्याद् बलव्यापदमेव वा ११९
आरग्वधग्रन्थिकमुस्ततिक्ताहरीतकीभिः क्वथितः कषायः
सामे सशूले कफवातयुक्ते ज्वरे हितो दीपनपाचनश्च १२०
इत्यारग्वधादिः क्वाथः
पथ्याऽरग्वधतिक्तात्रिवृदामलकैः शृतं तोयम्
पाचनसारकमुक्तं मुनिभिर्जीर्णज्वरे सामे
इत्यारोग्यपञ्चकद्वयम् १२१
अनन्ता बालकं मुस्तं नागरं कटुरोहिणी
पिष्ट्वा सुखाम्बुना कल्कं पाययेदक्षसम्मितम् १२२
कल्कः स्वल्पेन कालेन हन्यात्सर्वज्वरामयान्
विदध्यात्कोष्ठसंशुद्धिं दीपयेच्च हुताशनम् १२३
पीताम्बुर्लङ्घनक्षीणो जीर्णो भुक्तः पिपासितः
न पिबेदौषधं जन्तुः संशोधनमथेतरत् १२४
त्रिफला रजनीयुग्मं कण्टकारीयुगं शटी
त्रिकटु ग्रन्थिकं मूर्वा गुडूची धन्वयासकः १२५
कटुका पर्पटो मुस्तं त्रायमाणा च बालकम्
निम्बः पुष्करमूलञ्च मधुयष्टी च वत्सकः १२६
यवानीन्द्रयवो भार्गी शिग्रुबीजं सुराष्ट्रजा
वचात्वक्पद्मकोशीरचन्दनातिविषाबलाः १२७
शालिपर्णी पृश्निपर्णी विडङ्गं तगरं तथा
चित्रकं देवकाष्ठञ्च चव्यं पत्रं पटोलजम् १२८
जीवकर्षभकौ चैव लवङ्गं वंशलोचनम्
पुण्डरीकञ्च काकोली पत्रकं जातिपत्रकम् १२९
तालीसपत्रमेतानि समभागानि चूर्णयेत्
अर्द्धांशं सर्वचूर्णस्य किरातं प्रक्षिपेत्सुधीः १३०
एतत्सुदर्शनं नाम चूर्णं दोषत्रयापहम्
ज्वरांश्च निखिलान् हन्ति नात्र कार्या विचारणा १३१
दोषजागन्तुकांश्चापि धातुस्थान्विषमज्वरान्
सन्निपातोद्भवांश्चापि मानसानपि नाशयेत् १३२
शीतादीनपि दाहादीन्मेहं तन्द्रां भ्रमं तृषाम्

कासं श्वासञ्च पाराडुञ्च हृद्रोगं कामलामपि १३३
त्रिकपृष्ठकटीजानुपार्श्वशूलं निवारयेत्
शीताम्बुना पिबेदेतत्सर्वज्वरनिवृत्तये १३४
सुदर्शनं यथा चक्रं दानवानां विनाशनम्
तथा ज्वराणां सर्वेषां चूर्णमेतत्प्रणाशनम् १३५
निम्बपत्रवराव्योषयवानी लवणत्रयम्
क्षारो दिग्वह्निरामेषुत्रिनेत्रान् क्रमतोंऽशकान् १३६
सर्वमेकीकृतं चूर्णं प्रत्यूषे भक्षयेन्नरः
एकाहिकं द्व्याहिकञ्च तथा त्रिदिवसज्वरम् १३७
चातुर्थिकं महाघोरं सततं सन्ततं दिवा
धातुस्थं च त्रिदोषोत्थं ज्वरं हन्ति नसंशयम् १३८
इति निम्बादिचूर्णम्
शटी निशाद्वयं शुराठी दारु पुष्करमूलकम्
एला गुडूची कटुका पर्पटश्च यवासकः
शृङ्गी किराततिक्तञ्च दशमूली तथैव च १३९
क्वाथमेषां पिबेत्कोष्णं सिन्धुचूर्णयुतं नरः
ज्वरान्सर्वान्द्रुतं हन्ति नात्र कार्या विचारणा १४०
हरीतकीत्रिवृद्वृद्धदारकाणां पृथग्भवेत्
पलद्वयं कणा शुराठी गुडूची गोक्षुरो वरी १४१
सहदेवी विडङ्गञ्च प्रत्येकं पलसम्मितम्
मधुना वटिकां कृत्वा खादञ्ज्वरमपोहति १४२
कासं श्वासं मलस्तम्भं वह्निमान्द्यं नियच्छति १४३
लाक्षा दशाक्षा त्वरुणा षडक्षा सचन्दनं लोहितचन्दनञ्च
त्वक्पत्रकं वारि मुरा समुस्ता प्रत्येकमेतानि पलोन्मितानि १४४
किराततिक्तात्रिवृतासतिक्ताऽमृताकणापर्पटकराटकार्यः
विडङ्गविश्वाऽमलकानि वासारसानिशावीरणसिन्दुवाराः १४५
एतानि देयानि पृथक्पलार्द्धमानानिसर्वाणि च भेषजानि
कल्कानमीषां विदधीत गव्यदुग्धेन वै सार्द्धतुलामितेन १४६
तैलं तिलानां तु तुलाऽनुमानं तेनैव कल्केन शनैः पचेच्च
हन्याज्ज्वरांस्तैलमिदं समस्तान् कुर्याद् बलं वीर्यमतीव पुष्टिम् १४७

६७३
काञ्जिकार्द्रपटेनावगुराठनं दाहनाशनम्
अथ गोतक्रसंस्विन्न शीतलीकृतवाससा ६७४
दाहवम्यर्दितं ज्ञामं निरन्नं तृष्णयाऽन्वितम्
शर्करामधुसंयुक्तं पाययेल्लाजतर्पणम् ६७५
वाप्यःकमलहासिन्यो जलयन्त्रगृहाः शुभाः
नार्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः ६७६
मुक्तावलीचन्दनशीतलानां सुगन्धपुष्पाम्बरभूषितानाम्
नितम्बिनीनां सुपयोधराणामालिङ्गनान्याशु हरन्ति दाहम् ६७७
प्रह्लादश्चास्य विज्ञाय ताः स्त्रीरपनयेत्पुनः
हितञ्च भोजयेदन्नं येनाप्नोति सुखं महत् ६७८
कणोषणोग्रालवणोत्तमानि करञ्जबीजं प्रमदामलानि
पथ्याऽज्ञसिद्धार्थकहिङ्गुशुराठी युतानि बस्ताम्बुविमिश्रितानि ६७९
पिष्ट्वा गुटीयं नयने विधेया प्रचेतनेऽतिप्रथिताऽन्विताार्था
चित्तभ्रमापस्मृतिभूतदोष शिरोऽक्षिरोगभ्रमनाशहेतुः ६८०
कुम्भोद्भवतरोरम्भो गुडं विश्वकणाऽन्वितम्
निहितं नसि नूनं स्याच्चित्तभ्रमविनाशनम् ६८१
मुरामूर्द्धजमेघाह्व मधूकमलयोद्भवैः
मरुत्तरुमधून्मिश्रैः पुरपाणिजपांशुभिः ६८२
लोहलामज्ञकैला भिर्धूपश्चित्तभ्रमापहः
ग्रहदोषहरः श्रीदः सौभाग्यकर उत्तमः ६८३
मृद्वीकाऽमरदारुमत्स्यशकलामुस्तामलक्योऽमृता
पथ्याऽरेवतरामसेनकरजोराजीफलैः संयुताः
हन्युश्चित्तरुजोऽथ दर्दुरदलापाठापटोलीपयः
पथ्यापर्पटराजवृक्षकटुकाशम्बूकपुष्प्यः शृताः ६८४
प्रलेपस्तमस्तं नयत्यल्पमेकः समुद्रिक्तशोथञ्च रक्तावशेषः
पक्वे च शस्त्रक्रिया पूयजित्सा व्रणत्वं गते चोचिता तच्चिकित्सा ६८५
निशाविशालाऽमयमाणिमन्थ दार्वीङ्गुदीमूलकृतः प्रलेपः
प्रभाकरक्षीरयुतः प्रभावाद् व्यस्तः समस्तोऽप्यथ कर्णिकघ्नः ६८६
कुलत्थः कट्फलं शुराठी कारवी च समांशकैः

सुखोष्णैर्लेपनं कार्यं कर्णमूले मुहुर्मुहुः ६८७
गैरिकं कठिनी शुराठी कट्फलारग्वधैः समैः
उष्णैः काञ्जिकसम्पिष्टैर्लेपः कर्णकमूलनुत् ६८८
शिग्रुराजिकयोः कल्कं कर्णमूले प्रलेपयेत्
कर्णमूलभवः शोथस्तेन लेपेन शाम्यति ६८६
अशिशिरजलपरिमृदितं मरिचकणाजीरसिन्धुजं त्वरितम्
नस्यविधिसेवितं ननु कर्णकरूङ्नाशकृद् गदितम् ६६०
भार्गीजयापौष्करकराटकारी कटुत्रिकोग्राघनकुराडलीभिः
कुलीरशृङ्गीकटुकारसाभिः कृतः कषायः किल कर्णिकघ्नः ६६१
दशमूलमत्स्यशकला चपलात्रिफलामहौषधकिरातैः
मरिचं चाशु क्वथितं बलादपहन्ति कर्णरुजः सकलाः६६२
फलत्रिकत्र्यूषणमुस्तकट्वी कलिङ्गसिंहाननशर्वरीभिः
क्वाथः कृतः कृन्तति कराठकुब्जं कराठीरवः कुञ्जरमाशु तद्वत् ६६३
किरातकटुकाकणाकुटजकराटकारीशटी
कलिद्रुकिलिमाभयाकटुककट्फलाम्भोधरः
विषाऽमलकपुष्करानलकुलीरशृङ्गीवृषैर्महौषधसखैरयं जयति कराठकुब्जं गणः ६६४
अभिघाताभिषङ्गाभ्याम भिचाराभिशापतः
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ६६५
ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवाः
रागद्वेषभयाद्यैश्च ते स्युरागन्तवो गदाः ६६६
कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः
भूताभिषङ्गात्कुप्यन्ति भूतसामान्यलक्षणाः ६६७
श्यावास्यता विषकृते तथाऽतीसार एव च
भक्तारूचिः पिपासा च तोदश्च सह मूर्च्छया ६६८
ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुस्तथा
कामजे चित्तविभ्रंशस्तन्द्राऽलस्यमभोजनम्
हृदये वेदना चास्य गात्रञ्च परिशुष्यति ६६६
मूर्च्छाङ्गमर्दस्तृरानेत्रचापल्यं कुचवक्त्रयोः
स्वेदः स्याद्धृदि दाहश्च स्त्रीणां कामज्वरे भवेत् ७००

बालकं शतपत्राणि गन्धसारमुशीरकम्
चोचधान्येयकं मांसी क्वाथः कामज्वरापहः ७०१
सन्ध्यायां संस्तरः कार्यः सुगन्धैः कुसुमैर्भृशम्
क्रीडनीयं स्वकान्तेन सह रात्रौ तथा स्त्रिया ७०२
भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ७०३
भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम्
केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ७०४
अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ७०५
आगन्तुजे ज्वरे नैव नरः कुर्वीत लङ्घनम् ७०६
लङ्घनं न हितं कामशोकचिन्ताप्रहारजे
भयभूतश्रमक्रोधलङ्घनैश्च कृते ज्वरे ७०७
किन्त्वग्नौ दीपिते तत्र दद्यान्मांसरसौदनम्
अभिघातज्वरे युञ्ज्यात् क्रियामुष्णविवर्जिताम्
कषाय मधुरं स्निग्धं यथादोषमथापि च
अभिघातज्वरो नश्येत् पानाभ्यङ्गेन सर्पिषः
रक्तावसेकैर्मेध्यैश्च तथा मांसरसौदनैः ७०८
व्यधबन्धश्रमात्यध्वभङ्गभ्रंशसमुद्भवान्
ज्वरानुपाचरेत्पूर्वं क्षीरमांसरसौदनैः ७०९
अध्वश्रान्तेषु वाऽभ्यङ्गं दिवा निद्राञ्च कारयेत् ७१०
ओषधीगन्धविषजौ विषपित्तप्रबाधनैः
जयेत्कषायैर्मतिमान् सर्वगन्धकृतैर्भिषक् ७११
चातुर्जातककर्पूरकङ्को लागुरुकुङ्कुमम्
लवङ्गसहितञ्चैव सर्वगन्धं विनिर्दिशेत् ७१२
क्रोधजे पित्तजित्कार्यं धार्यं सद्वाक्यमेव च
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च
हर्षणैश्च शमं यान्ति कामक्रोधभयज्वराः ७१३
कामैरथ मनोघ्नैश्च पित्तघ्नैश्चाप्युपक्रमैः
सद्वाक्यैश्च शमं याति ज्वरः क्रोधसमुत्थितः ७१४
कामात्क्रोधज्वरो नश्येत् क्रोधात्कामज्वरस्तथा
घातिताभ्यामुभाभ्याञ्च कामक्रोधज्वरक्षयः ७१५

भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः
जयेद् भूताभिषङ्गोत्थं मनः शान्त्या च मानसम् ७१६
सहदेवाया मूलं विधिना कराठे निबद्धमपहरति
एकद्वित्रिचतुर्भिर्दिवसैर्भूतज्वरं पुंसाम् ७१७
अभिचाराभिशापोत्थौ ज्वरौ होमादिभिर्जयेत्
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहदुष्टिजौ ७१८
इत्यागन्तुज्वराधिकारः
दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ७१९
सन्ततं रस रक्तस्थः सततं रक्तधातुगः
दोषः क्रुद्धो ज्वरं पुंसां सोऽन्येद्युः पिशिताश्रितः ७२०
मेदोगतस्तृतीयेऽह्नि अस्थिमज्जगतः पुनः
कुर्य्याच्चातुर्थिकं घोरमन्तकं रोगसङ्करम् ७२१
यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च
वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः ७२२
सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ७२३
सप्ताहं वा दशाहं द्वादशाहमथापि वा
सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते ७२४
अहोरात्रे सततको द्वौ कालावनुर्त्तते ७२५
अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते ७२६
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ७२७
कफस्थानविभागेन यथासंख्यं करोति हि
सततान्येद्युस्तृतीय चतुर्थकप्रलेपकान्
अहोरात्रादहोरात्रात् स्थानात्स्थानं प्रपद्यते
दोष आमाशयं प्राप्य करोति विषमज्वरम् ७२८
निवृत्तः पुनरायाति विषमो नियते दिने
स्वभावं कारणं तत्र मन्यन्ते मुनिपुङ्गवाः ७२९
अधिशेते यथा भूमिं बीजं काले प्ररोहति
अधिशेते तथा धातून् दोषः काले प्रकुप्यति ७३०
स चापि विषमो देहं न कदाचित्प्रमुञ्चति

ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते ७३१
वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते
धात्वन्तरेषु लीनत्वात् सौक्ष्म्यान्नैवोपलभ्यते ७३२
कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ७३३
चतुर्थको दर्शयति स्वभावं द्विविधं ज्वरः
जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरसोऽनिलसम्भवः ७३४
मध्यकायन्तु गृह्णाति पूर्वं यस्तु स पित्तजः
विषमज्वर एवान्यश्चतुर्थकविपर्ययः ७३५
अस्थिमज्जगतो दोषश्चतुर्थकविपर्ययः
जायते भिषजा ज्ञेयो विषमज्वर एव सः ७३६
स मध्ये ज्वरयत्यह्नी आद्यन्ते च विमुञ्चति ७३७
त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरम्
तयोः प्रशान्तयोः पित्तमन्तर्दाहं करोति च ७३८
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च
तस्मिन्प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ७३९
द्वावेतौ दाहशीतादौ ज्वरौ संसर्गजौ स्मृतौ
दाहपूर्वस्तयोः कष्टः सुखसाध्यतमोऽपरः ७४०
विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते
तेनार्द्धं शीतलं देहमर्द्धमुष्णं प्रजायते ७४१
काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितम्
तेनोष्णत्वं शरीरस्य शीतत्वं हस्त पादयोः ७४२
काये श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम्
शीतत्वं तेन गात्रे स्यादुष्णत्वं हस्तपादयोः ७४३
प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च
मन्दज्वरविलेपी च स शीतः स्यात्प्रलेपकः ७४४
ज्वराश्च विषमाः सर्वे सन्निपातसमुद्भवाः
यथोल्वणस्य दोषस्य तेषु कार्यं चिकित्सितम् ७४५
विषमेष्वपि कर्त्तव्यमूर्ध्वञ्चाधश्च शोधनम्
स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम् ७४६

कालिङ्गकः पटोलस्य पत्रं कटुकरोहिणी
पटोलं सारिवा मुस्तं पाठा कटुकरोहिणी ७४७
निम्बः पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ
किराततिक्तममृता चन्दनं विश्वभेषजम् ७४८
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः
कषायाः शमयन्त्याशु पञ्च पञ्चविधं ज्वरम् ७४९
महाबलामूलमहौषधाभ्यां क्वाथो निहन्याद्विषमज्वरं हि
शीतं सकम्पं परिदाहयुक्तं विनाशयेद् द्वित्रिदिनप्रयोगात् ७५०
मुस्ताऽमलकगुडूची विश्वौषधकण्टकारिकाक्वाथः
पीतः सकणाचूर्णः समधुर्विषमं ज्वरं हन्ति ७५१
तिलतैललवणयुक्तः कल्को लशुनस्य सेवितः प्रातः
विषज्वरमपहरते वातव्याधीनशेषांश्च ७५२
कालजाजी तु सगुडा विषमज्वरनाशिनी
मधुना चाभया लीढा हन्त्याशु विषमज्वरान् ७५३
पीतो मरिचचूर्णेन तुलसीपत्रजो रसः
द्रोणपुष्पीरसो वाऽपि निहन्ति विषमज्वरान् ७५४
समगुडमसितं जीरकमीषन्मरिचेन भक्षितं सद्यः
एकाहिकंप्रशमयेत् समरेष्विव दानवानिन्द्रः ७५५
शुण्ठ्यजाजी गुडं पिष्टं पीतमुष्णेन वारिणा
जीर्णमद्येन तक्रेण तीव्रं शीतज्वरं जयेत् ७५६
अथ सन्ततादिज्वराणां सामान्यचिकित्सा
अमृतायाः शतं चूर्णं वाससा परिशोधितम्
पृथक षोडश भागाः स्युर्गुडमाक्षिकसर्पिषाम् ७५७
यथाऽग्नि भक्षयेदेतन्नरो हितमिताशनः
नास्य कश्चिद्भवेद्व्याधिर्न जरा पलितं न च ७५८
न ज्वरा विषमा नैव मोहो नानिलरक्तकम्
न च नेत्रगता रोगाः परमेतद्रसायनम् ७५९
मेधाकरं त्रिदोषघ्नं प्रयोगादस्य बुद्धिमान्
जीवेद्वर्षशतं साग्रं यथैवादितिजस्तथा ७६०
तक्रमांसं पयोमांसं दधिमांसमथापि वा

माषमांसञ्च भुञ्जानो मुच्यते विषमज्वरात् ७६१
अग्निवेशेनोक्तम्
सुरा समराडा पानार्थे भोजने चरणायुधाः
तित्तिरा विष्किराः पथ्याः कुक्कुटा विषमज्वरे ७६२
त्रायन्तीकटुकाऽनन्तासारिवाभिः शृतं जलम्
पटोलाब्दवृषातिक्तासारिवाभिः शृतं जलम्
सन्तताख्ये ज्वरे देयं वातादीनां निवृत्तये ७६३
पटोलेन्द्रयवानन्तापथ्याऽरिष्टामृताजलम्
क्वथितं तज्जलं पीतं ज्वरं सततकं जयेत् ७६४
द्राक्षापटोलनिम्बाब्दशक्राह्वत्रिफलाशृतम्
जलं जन्तुः पिबेच्छीघ्रमन्येद्युर्ज्वरशान्तये ७६५
कर्म साधारणं जह्यात् तृतीयकचतुर्थकौ
भिषजा प्रतिकर्त्तव्यौ विशेषोक्तचिकित्सितैः ७६६
उशीरं चन्दनं मुस्तं गुडूची धान्यनागरम्
अम्भसा क्वथितं पेयं शर्करामधुयोजितम् ७६७
ज्वरे तृतीयके पुंसां तृष्णादाहसमन्विते ७६८
अपामार्गजटां कट्यां लोहितैः सप्ततन्तुभिः
बद्ध्वा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ७६९
स्थिरातामलकीदारु शिवावृषमहौषधैः
सितामधुयुतः क्वाथश्चतुर्थकहरः परः ७७०
अगस्तिपत्रस्य रसेन नस्यं निहन्ति चातुर्थकमुग्रवीर्यम्
शिरीषपुष्पस्य निशाद्वयस्य कल्केन वा तद् घृतसंयुतेन ७७१
ज्वरस्य वेगकालञ्च चिन्तयञ्ज्वर्यते तु यः
तस्येष्टैरद्भुतैर्वाऽपि विषमैर्नाशयेत्स्मृतम् ७७२
सन्ततं विषमं चापि सततं सुचिरोत्थितम्
ज्वरं सुभोजनैः पथ्यैरिष्टैश्च समुपाचरेत् ७७३
शीताभिभूते पुरुषे कुर्य्याच्छीतहरीं क्रियाम्
दाहाभिभूते तु विधिं विदध्याद्दाहनाशनम् ७७४
आच्छादनैर्बहुतरैर्गुरुभिः कम्बलादिभिः
तूलवत्या महाशीतं शीतादिज्वरिणो हरेत् ७७५

तं स्तनाभ्यां सुपीनाभ्यां पीवरोरुर्नितम्बिनी
युवतिर्गाढमालिङ्गेत् तेन शीतं प्रशाम्यति ७७६
कान्ताऽङ्गसङ्गसञ्जाते तद्वच्छीते निवारिते
प्रह्लादं चास्य विज्ञाय पृथक् तां कारयेत्स्त्रियम् ७७७
ततो दाहे तु सञ्जाते पत्रैरेरराडसम्भवैः
शीतलैर्धारितैरङ्गे दाहं तस्यापनोदयेत् ७७८
तालकं शुक्तिकाचूर्णे दत्तं तत्रोभयोरपि
नवमांशञ्च तुत्थं स्यान्मर्दयेत्कन्यकाद्रवैः ७७९
तत्तु संशुष्कमुपलैर्वन्यैर्गजपुटे पचेत्
शीतं तच्चूर्णयेच्चूर्णं गुञ्जामात्रं सितायुतम् ७८०
प्रभाते भक्षयेत्तेन याति शीतज्वरः क्षयम्
वान्तिर्भवति कस्यापि कस्यचिन्न भवत्यपि ७८१
एकेन दिवसेनैव शीतज्वरहरं परम्
मध्याह्नसमये पथ्यं शिखरिरायोदनं तथा ७८२
कायस्थानाकुलीतिक्तावयः स्थापुरचोरकैः
सहदेवावचाकुष्ठैः शीतघ्नैर्धूपलेपनैः७८३
साम्लैर्विपाचितं तैलमभ्यङ्गाच्छीतनाशनम् ७८४
एरराडस्य तु पत्राणि लिप्तभूमौ निधापयेत्
दाहादिज्वरिणो देहे तानि पत्राणि धारयेत् ७८५
तेन नश्यति दाहोऽस्य ज्वरश्चैवोपशाम्यति
दाहे शान्ते यदा शैत्यं तच्च युक्त्यानिवारयेत् ७८६
जघनचक्रचलन्मणिमेखला सरसचन्दनचन्द्रविलेपना
वनलतेव तनुं परिवेष्टयेत् प्रबलदाहनिपीडितमङ्गना ७८७
तदङ्गसङ्गसञ्जाते शैत्ये दाहे निवारिते
प्रह्लादञ्चास्य विज्ञाय तां स्त्रीमपनयेत्पुनः ७८८
सुवर्चिकानागरकुष्ठमूर्वालाक्षानिशालोहितयष्टिकाभिः
सिद्धं हरेत्षड्गुणतक्रपक्वं तैलं ज्वरं दाहसमन्वितं च ७८९
रास्नानागरकुष्ठचन्दननिशायष्ट्याह्वकृष्णाबला
लाक्षासैन्धवसारिवामधुरसादेवाह्वरोहीतकैः
सोशीराम्बुधिफेनरोहिषजलैस्तैलंपचेत्षड्गुणे

तक्रे तच्च जयेज्ज्वरं दृढतरं दाहादिशीतादिकम् ७९०
पद्मकोत्पलकह्लार मृणालबिसपौष्करैः
कुमुदोशीरमञ्जिष्ठा पद्मगैरिककट्फलैः ७९१
सारिवाद्वयलोध्रा ह्रीवेरीखर्जूरमस्तकैः
धात्रीशतावरीयुक्तैः क्वाथे कल्के प्रयोजितैः ७९२
लाक्षारसपयःशुक्त मस्तुभिः सह काञ्जिकैः
पक्वं तैलमिदं त्वच्यं दाहज्वरहरं परम् ७९३
प्रलेपके प्रयुञ्जीत श्लेष्मज्वरहरीं क्रियाम् ७९४
रूद्रजटा गोशृङ्गं विडालविष्ठोरगस्य निर्मोकः
मदनफलभूतकेश्यौ वंशत्वग्गृद्रनिर्माल्यम् ७९५
घृतयवमयूरपुच्छच्छगलकलोमानि सर्षपाःसवचाः
हिङ्गुगवास्थिमरीचाः समभागाश्छागमूत्रसंपिष्टाः ७९६
धूपनविधिना शमयन्त्येते सर्वाञ्ज्वरान्नियतम्
ग्रहडाकिनीपिशाचप्रेतविकारानयं धूपः ७९७
सोमं सानुचरं देवं समातृगणमीश्वरम्
पूजयन्प्रयतः शीघ्रं मुच्यते विषमज्वरात् ७९८
विष्णुं सहस्त्रमूर्द्धानं चराचरपतिं विभुम्
स्तुवन्नामसहस्त्रेण ज्वरान्सर्वान्व्यपोहति ७९९
तीर्थायतनदेवाग्निगुरुवृद्धोपसर्पणैः
श्रद्धया पूजनैश्चापि सहसा शाम्यति ज्वरः ८००
इति विषमज्वराधिकारः समाप्तः
गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ
रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ८०१
रसस्थे तु ज्वरे तस्मिन् कुर्याद्वमनलङ्घने ८०२
रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ
प्रलापः पिडिका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ८०३
सेकः संशमनो लेपो रक्तमोक्षमसृग्गते ८०४
पिण्डकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता
ऊष्माऽन्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ८०५
तीक्ष्णं विरेकञ्च तथा कुर्यान्मांसगते ज्वरे ८०६

भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ८०७
मेदःस्थे मेदसो नाशं विदधीत चिकित्सकः ८०८
भेदोऽस्थ्ना कूजनं श्वासो विरेकश्छर्दिरेव च
विक्षेपणञ्च गात्राणां विद्यादस्थिगते ज्वरे ८०९
अस्थिस्थे तु ज्वरे कुर्याद् वातनाशनकं विधिम्
वस्तिकर्म प्रयोक्तव्यमभ्यङ्गोन्मर्दनं तथा ८१०
तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा
अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ८११
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ८१२
इति सप्तधातुगतज्वराधिकार समाप्तः
अथ जीर्णज्वराधिकारः
यो द्वादशेभ्यो दिवसेभ्य ऊद्ध्र्वं दोषत्रयेभ्यो द्विगुणेभ्य ऊद्ध्र्वम्
नृणां तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वर एष जीर्णः ८१३
नित्यं मन्दज्वरो रूक्षः शूनः कृच्छ्रेणसिद्ध्यति
स्तब्धाङ्गःश्लेष्मभूयिष्ठो नरो वातबलासकी ८१४
जीर्णज्वरी नरः कुर्यान्नोपवासं कदाचन
लङ्घनात्स भवेत्क्षीणो ज्वरस्तु स्याद्बली यतः
पुराणेऽपि ज्वरे दोषा यद्यपथ्यैः पुनस्तथा
लङ्घयेत्तत्र तत्पश्चात् पूर्वामेवाचरेत्क्रियाम् ८१५
निदिग्धकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्
जीर्णज्वरारोचककासशूल श्वासाग्निमान्द्यार्दितपीनसेषु ८१६
हन्त्यूद्ध्र्वजामयं प्रायः सायन्तेनोपयुज्यते ८१७
पिप्पलीमधुसंयुक्तः क्वाथश्छिन्नोद्भवोद्भवः
जीर्णज्वरकफध्वंसी पञ्चमूलकृतोऽथ वा
अमृतायाः कषायन्तु शीतलीकृतमीरितम्
मधुपादयुतं पीतं जीर्णज्वरहरं परम्
पिप्पलीमधुसम्मिश्रं गुडूचीस्वरसं पिबेत्
जीर्णज्वरकफप्लीह कासारोचकनाशनम् ८१८

जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली
कासाजीर्णारुचिश्वासहृत्पाण्डु कृमिरोगनुत्
द्विगुणः पिप्पलीचूर्णाद् गुडोऽत्र भिषजां मतः ८१९
पिप्पली मधुसंयुक्ता मेदः कफविनाशिनी
श्वासकासज्वरहरी पाण्डुप्लीहोदरापहा ८२०
आमलं चित्रकं पथ्या पिप्पली सैन्धवं तथा ८२१
चूर्णितोऽय गणो ज्ञेयः सर्वज्वरहरः परः
भेदी रुचिकरः श्लेष्महन्ता दीपनपाचनः ८२२
द्राक्षाऽमृता शटी शृङ्गी मुस्तकं रक्तचन्दनम्
नागरं कटुका पाठा भूनिम्बः सदुरालभः ८२३
उशीरं धान्यकं पद्मं बालकं कण्टकारिका
पुष्करं पिचुमन्दश्च दशाष्टाङ्गमिदं स्मृतम्
जीर्णज्वरारुचिश्वास कासश्वयथुनाशनम् ८२४
त्रिवृद्ध्या पञ्चवृद्ध्या वा सप्तवृद्ध्याऽथवाऽपि वा
गव्यक्षीरेण सम्पिष्टाः पिबेद्दशदिनानि  हि ८२५
तथैवापनयेदेता एवं विंशतिवासरान्
पिबतां ज्वरशान्तिः स्यात् पाण्डुरोगश्च शाम्यति ८२६
कासः श्वासोऽग्निमान्द्यञ्च कफाधिक्यञ्च नश्यति ८२७
वातश्लेष्मज्वरोक्ता स्यात् क्रियावातबलासके
जीर्णज्वरे कफे क्षीणे दाहे तृष्णासमन्विते ८२८
पयः पीयूषसदृशं तन्नवे तु विषोपमम्
चन्दनाद्यं हितं तैलं शोषाधिकारकीर्त्तितम्
तथा नारायणं तैलं जीर्णज्वरहरं परम् ८२९
इति जीर्णज्वराधिकारः समाप्तः
हरीतकी निम्बपत्रं नागरं सैन्धवोऽनलः
एषां चूर्णं सदा खादेद् दुर्जलज्वरशान्तये ८३०
अरुचिमनलमान्द्यं पीनसश्वासकासानुदरमुदकदोषानाशु हन्यादशेषान्
जनयति तनुकान्तिं चित्तनेत्रप्रसादं पलपरिमितशुण्ठीक्षौद्रसिद्धः कषायः
८३१
विषं भागद्वयं दग्धं कपर्दं पञ्चभागकम्

मरिचं नागरञ्चैव चूर्णं वस्त्रेण शोधयेत् ८३२
आर्द्रकस्य रसेनास्य कुर्यान्मुद्गनिभां वटीम्
वारिणा वटिकायुग्मं प्रातः सायञ्च भक्षयेत् ८३३
अयं रसो ज्वरे योज्यः सामे दुर्जलजेऽपि च
अजीर्णाध्मानविष्टम्भ शूलेषु श्वासकासयोः ८३४
पटोलमुस्ताऽमृतवल्लिवासकं सनागरं धान्यकिराततिक्तकम्
कषायमेषां मधुना पिबेन्नरो निवारयेद् दुर्जलदोषमुल्बणम् ८३५
किराततिक्तात्रिबृदम्बुपिप्पली विडङ्गविश्वाकटुरोहिणीरजः
निहन्ति लीढं मधुनाऽतिसत्वरं सुदुस्तरं दुर्जलदोषजं ज्वरम् ८३६
भोजनाग्रे नरैर्भुक्तं शुराठ्यजाज्यभयोत्थितम्
कल्कन्तु सेवितं नित्यं नानादेशोद्भवं जलम् ८३७
सहार्द्रकयवक्षारौ पीत्वा कोष्णेन वारिणा
नानादेशसमुद्भूतं वारिदोषमपोहति ८३८
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ८३९
श्वासो मूर्च्छाऽरुचिश्छर्दिस्तृष्णाऽतीसारविड्ग्रहाः
हिक्काकासाङ्गदाहाश्च ज्वरस्योपद्रवा दश ८४०
सञ्जातोपद्रवो व्याधिस्त्याज्यो न स्याच्चिकित्सकैः
व्याधौ शान्ते प्रणश्यन्ति सद्यःसर्वेऽप्युपद्रवाः ८४१
अतो व्याधिं जयेद्यत्नात् पूर्वं पश्चादुपद्रवान्
भिषग् यःकुशलः सोऽत्र जयेत्पूर्वमुपद्रवम् ८४२
तेष्वपि प्रचुरेषु प्राङ् नाशयेदाशुकारिणाम्
मूलव्याधिं जयेत्पूर्वं यत्र यो वा भवेद्बली
अविरोधेन कार्या तदुभयोरपि च क्रिया ८४३
सिंही व्याघ्री ताम्रमूली पटोली शृङ्गी पद्मा पुष्करं रोहिणी च
शाकं शठ्याः शैलमल्ल्याश्च बीजं श्वासं हन्यात्सन्निपातं दशाङ्गः ८४४
भार्गीनिम्बघनाभयाऽमृतलताभूनिम्बवासाविषात्रातयन्ती
कटुकावचात्रिकटुकश्योनाकशक्रद्रुमैः ८४५
रास्नायासपटोलपाटलशटीदार्वीविशालत्रिवृद्ब्राह्मीपुष्करसिंहिकाद्वयनिशा
धात्र्यक्षदेवद्रुमैः
क्वाथोऽय खलु सन्निपातनिवहान्द्वात्रिंशतां पानतो

दुर्द्धर्षान्निजतेजसा विजयते सर्पान्गरुत्मानिव
किञ्च श्वासवलासकासगुदरुग्घृद्रोगहिक्कामरुन्
मन्यास्तम्भगलामयार्दितमलावष्टम्भब्रध्नानपि ८४६
मधुना कृष्णाकट्फलकर्कटशृङ्गीभवं चूर्णम्
श्वासामये महोग्रे लीढ्वा लोकः सुखी भवति ८४७
वन्योपलाग्नितापितदात्रस्याग्रेण पञ्जरे दाहः
अपहरति श्वासामयमसंशयं भाषितं मुनिभिः ८४८
आर्द्रकस्य रसैर्नस्यं मूर्च्छायामाचरेन्नरः
अञ्जनञ्च प्रयुञ्जीत मधुसिन्धुशिलोषणैः ८४९
शीताम्भसाऽक्षिसेकः सुरभिर्धूपः सुगन्धि पुष्पञ्च
मृदुतालवृन्तवातः कोमलकदली दल स्पर्शः ८५०
अरुचौ तु शृङ्गबेरजरसकैः सोष्णैः ससिन्धुजैः कवलः
सिन्धूत्थमातुलुङ्गीफलकेसरधारणं वक्त्रे ८५१
क्वाथो गुडूच्याः समधुः सुशीतः पीतः प्रशान्तिं वमनस्य कुर्यात्
विरमक्षिकाणां मधुनाऽवलीढा सचन्दना शर्करयाऽन्विता वा ८५२
दन्तशठबीजपूरकदाडिमबदरैः सचुक्रकैर्वदने
लेपो जयति पिपासामथ रजतगुटी मुखान्तःस्था ८५३
शीतं पयः क्षौद्रयुतं निपीतमाकण्ठमाश्वेव तदुद्वमेच्च
तर्षं महान्तं शमयेद्धि वक्त्रे धृत्वाऽथवा क्षौद्रवटाग्रलाजान् ८५४
लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः
समुदीर्णदोषनिचयं शमयति तत्पाचयेदपि च ८५५
वत्सादनीवत्सकवारिवाह विश्वम्भरानिम्बविषाः सविश्वाः
ज्वरेऽतिसारं त्वरितं जयन्ति विश्वाऽमृतावत्सकवारिवाहाः ८५६
पाठाऽमृतापर्पटमुस्तविश्व किराततिक्तेन्द्रयवान्विपाच्य
पिबन्हरत्येव हठेन सर्वाञ्ज्वरातिसारानपि दुर्निवारान् ८५७
विड्ग्रहे वातजित्कर्म कुर्यादत्रानुलोमनम्
मलं प्रवर्त्तयेदाशु तीक्ष्णाभिः फलवर्त्तिभिः ८५८
पथ्याऽरग्वधतिक्तात्रिवृदामलकैः शृतं तोयम्
जीर्णज्वरे विबंधे दद्यादश्वेव विड्ग्रहः शाम्येत् ८५९
नीरेण सिन्धूत्थरजोऽतिसूक्ष्मं नस्येन नूनं विनिहन्ति हिक्काम्

शुराठी हठाद्वा सितया समेता धूपोऽथवा हिङ्गुसमुद्भवश्च ८६०
कासे करणा करणामूलं कलिङ्गद्रुफलं रजः
सविश्वभेषजं लिह्यान्मधुना वा वृषाद्रसम् ८६१
पुष्करमूलकटुत्रिकशृङ्गी कट्फलयासककारविकाभिः
मधुलुलिताभिरयं खलु लेहः कासरिपुः कफरोगहरश्च ८६२
दाहाधिकारे लिखितं दाहे कुर्याच्चिकित्सितम्
परं ज्वरे विरुद्धं यन्नोचितं तच्चिकित्सितम् ८६३
सन्तापोऽभ्यधिको बाह्यस्तृष्णाऽदीनां च मार्दवम्
बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ८६४
वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्
प्राकृतः सुखसाध्यस्तु ज्वरः सुरभिसम्भवः ८६५
वैकृतोऽन्य स दुःसाध्यः प्राकृतश्चानिलोद्भवः ८६६
वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्
कुर्यात्पित्तञ्चशरदि तस्य चानुबलः कफः ८६७
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम्
कफो वसन्ते तमपि वातपित्तं भवेदनु ८६८
अन्तर्दाहोऽधिका तृष्णा प्रलापः श्वसनं भ्रमः
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः
अन्तर्वेगस्य लिङ्गानि कष्टसाध्यत्वमेव च ८६९
ज्वरः क्षीणस्य शूनस्य गम्भीरो दीर्घरात्रिकः
असाध्यो बलवान्यश्च  केशसीमन्तकृज्ज्वरः ८७०
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया
आनद्धत्वेन चात्यर्थं कासश्वासोद्गमेन च ८७१
ज्वरस्य पूर्वं ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोथः
क्रमादसाध्यः खलु कृच्छ्रसाध्यः सुखेन साध्यो मुनिभिः प्रदिष्टः ८७२
रोगिणो मरणं यस्मादवश्यम्भावि लक्ष्यते
तल्लक्षणमरिष्टं स्याद् रिष्टमप्यभिधीयते ८७३
हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः
ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ८७४
विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा

शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः८७५
यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान्
वक्त्रेण चवोच्छ्वसिति तं ज्वरो हन्ति मानवम् ८७६
हिक्काश्वासतृषायुक्तं मूढं विभ्रान्तलोचनम्
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ८७७
हतप्रभेन्द्रियं क्षाममरोचकनिपीडितम्
गम्भीरतीक्ष्णवेगार्त्तं ज्वरितं परिवर्जयेत् ८७८
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ८७९
आरम्भाद्विषमो यस्य यस्य वा दीर्घरात्रिकः
क्षीणस्य चातिरूक्षस्य गम्भीरो यस्य हन्ति तम् ८८०

इति प्रथमो ज्वराधिकारः समाप्तः

अथ द्वितीयोऽतिसाराधिकारः २

गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः
विरूद्धाध्यशनाजीर्णैर्विषमैश्चापि भोजनैः १
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः
शोकदुष्टाम्बुमद्यातिपानैः सात्म्यर्त्तुपर्ययैः २
जलाभिरमणैर्वेगविघातैः कृमिदोषतः
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ३
हृन्नाभिपार्श्वोदरकुक्षितोदगात्रावसादा निलसन्निरोधाः
विट्सङ्गआध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि ४
संशम्यापां धातुरग्निं प्रवृद्धो वर्चोमिश्रो वायुनाऽध प्रणुन्नः
सरत्यतीवातिसारं तमाहुर्व्याधिं घोरं षड्विधं तं वदन्ति ५
एकैकशः सर्वशश्चापि दोषैः शोकेनान्यःषष्ठ आमेन चोक्तः ६
आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः
अतोऽतिसारे सर्वस्मिन्नामं पक्वञ्च लक्षयेत् ७
संसृष्टमामैर्दोषैस्तु न्यस्तमप्सु निमज्जति
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितम् ८
एतान्येव तु लिङ्गानि विपरीतानि यस्य वै
लाघवञ्च विशेषेण तं तु पक्वं विनिर्दिशेत् ९

न च संग्राहकं दद्यात्पूर्वमामातिसारिणे
अकाले संगृहीतस्तु विकारान्कुरुते बहून् १०
दरडकालसकाध्मानग्रहरयर्शोभगन्दरान्
शोथपारड्वामयप्लीहगुल्ममेहोदरज्वरान् ११
डिम्भस्थः स्थविरस्थश्च वातपित्तात्मकश्च यः
क्षीणधातुबलश्चापि बहुदोषोऽतिनिस्रुतः
आमोऽपि स्तम्भनीयः स्यात्पाचनान्मरणं भवेत् १२
लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः
समुदीर्णदोषनिचयं तत्पाचयेत्तथा च शमयेत् १३
धान्याम्बुभ्यां शृतं तोयं तृष्णादाहातिसारिणे
ह्रीबेरशृङ्गबेराभ्यां मुस्तपर्पटकेन वा
मुस्तोदीच्यशृतं शीतं प्रदातव्यं पिपासवे १४
हितं लङ्घनमेवादौ पूर्वरूपेऽतिसारिणे
कार्यं वाऽनशनस्यान्ते प्रद्रवं लघु भोजनम् १५
पथ्यादारुवचामुस्तैर्नागरातिविषाऽन्वितैः
आमातिसारनाशाय क्वाथमेभिः पिबेन्नरः १६
पाठाहिङ्ग्वजमोदोग्रापञ्चकोलाह्वजं रजः
उष्णाम्बुपीतं सरुजं जयत्यामं ससैन्धवम् १७
हरीतकी सातिविषा हिङ्गु सौवर्चलं वचा
सैन्धवञ्चापि संपिष्य पाययेदुष्णवारिणा १८
आमातिसारयोगोऽय पाचयित्वा चिकित्सति
आमातिसारो योगेन यस्त्वेतेन न शाम्यति १९
न तं योगशतेनापि चिकित्सति चिकित्सकः २०
वत्सकातिविषाबिल्वं मुस्तकं बालकं शटी
अतीसारं जयेत्सामं चिरजं रक्तशूलजित् २१
एररडरससम्पिष्टं पक्वमामञ्च नागरम्
आमातिसारशूलघ्नं पाचनं दीपनं परम् २२
धान्यबालकबिल्वाब्दनागरैः पाचितं जलम्
आमशूलविबन्धघ्नं पाचनं दीपनं परम् २३
पित्ते धान्यचतुष्कन्तु शुरठीत्यागाद्वदन्ति हि

रक्तेऽपि पित्तसाधर्म्याद्देयं धान्यचतुष्टयम् २४
इत्यामातिसारचिकित्सा
अथ पक्वातीसारचिकित्सा
सलोध्रं धातकीबिल्वमुस्ताऽम्रास्थिकलिङ्गकम्
पिबेन्माहिषतक्रेण पक्वातीसारनाशनम् २५
समङ्गा धातकीपुष्पं मञ्जिष्ठा लोध्र एव च
शाल्मलीवेष्टको लोध्रो दाडिमद्रुफलत्वचौ २६
आम्रास्थिमध्यं लोध्रश्च विल्वमध्यं प्रियङ्गु च
मधुकं शृङ्गबेरञ्च दीर्घवृन्तत्वगेव च २७
चत्वार एते योगाः स्युः पक्वातीसारनाशनाः
ते योगा उपयोज्याःस्युः सक्षौद्रास्तण्डुलाम्बुना २८
कञ्चटदाडिमजम्बू शृङ्गाटकपत्रबिल्वबर्हिष्ठम्
जलधरनागरसहितं गङ्गामपि वेगवाहिनीं रुन्ध्यात् २९
मोचरसमुस्तनागर पाठाऽरलुधातकीकुसुमैः
चूर्ण मथितसमेतं रुणद्धि गङ्गाप्रवाहमपि सद्यं ३०
मुस्ता वत्सकबीजं मोचरसो बिल्वधातकीलोध्रम्
गुडमथितसंप्रयुक्तं गङ्गामपि वेगवाहिनीं रुन्ध्यात् ३१
मुस्ताऽरलुकशुण्ठीभिर्धातकीलोध्रबालकैः
बिल्वमोचरसाभ्यां च पाठेन्द्रयववत्सकैः ३२
आम्रबीजसमङ्गाऽतिविषायुक्तैश्च चूर्णितैः
मधु तण्डुलपानीयं पीतं हन्ति प्रवाहिकाम् ३३
हन्ति सर्वानतीसारान् ग्रहणीं हन्ति वेगतः
वृद्धगङ्गाधरं चूर्णरुन्ध्याद्गीर्वाणवाहिनीम् ३४
अङ्कोलमूलकल्कस्तण्डुलपयसा समाक्षिकः पीतः
सेतुरिववारिवेगं झटिति निरुन्ध्यादतीसारम् ३५
कुटजत्वक्तुलामार्द्रां द्रोणनीरे पचेद्भिषक्
पादशेषं शृतं नीत्वा वस्त्रपूतं पुनः पचेत् ३६
लज्जालुर्धातकी बिल्वं पाठा मोचरसस्तथा
मुस्ता चातिविषा चैव चूर्णमेषां पलं पलम् ३७
निक्षिप्य विपचेत्तावद् यावद्दर्वी प्रलिप्यते

जलेन च्छागदुग्धेन पीतो मगडेन वा जयेत् ३८
घोरान्सर्वानतीसारान्नाना वर्णान्सवेदनान्
असृग्दरं समस्तञ्च तथाऽशासि प्रवाहिकाम् ३९
कृत्वाऽलवालं सुदृढं पिष्टैरामलकैर्भिषक्
आर्द्रकस्य रसेनाशु पूरयेन्नाभिमगडलम् ४०
नदीवेगोपमं घोरं प्रवृद्धं दुर्द्धरं नृणाम्
सद्योऽतीसारमजयं नाशयत्येष योगराट् ४१
पाठा पिष्टा च गोदध्ना तथा मध्यत्वगाम्रजा
अतीसारं व्यथादाहं हन्त्येवाशु न संशयः ४२
अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः
शकृदामं सरुक्शब्दं मारुतेनातिसार्यते ४३
वचा चातिविषा मुस्तं बीजानि कुटजस्य च
श्रेष्ठः कषाय एतेषां वातातीसारशान्तये ४४
पित्तात्पीतं शकृद्रक्तं दुर्गन्धि हरितं द्रुतम्
गुदपाकतृषामूर्च्छादाहयुक्तं प्रवर्त्तते ४५
बिल्वशक्रयवाम्भोदबालकातिविषाकृतः
कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ४६
रसाञ्जनं सातिविषं कुटजस्य फलत्वचम्
धातकी शृङ्गबेरञ्च पाययेत्तगडुलाम्बुना ४७
निहन्ति मधुना पीतं पित्तातीसारमुल्वगाम्
अग्निं सन्दीपयेदेतच्छूलमाशु निवारयेत् ४८
पित्तकृन्ति यदाऽत्यर्थं द्रव्यागयश्नाति पैत्तिके
तदाऽस्य जायतेऽभीक्ष्णं रक्तातीसार उल्वगः ४९
वत्सत्वग्दाडिमतरु शलाटुफलसम्भवां त्वक् च
त्वग्युगलं पलमानं विपचेदष्टांशसंमिते तोये अं५०
अष्टमभागं शेषं क्वाथं मधुना पिबेत्पुरुषः
रक्तातिसारमुल्वगमतिशयितं नाशयेन्नियतम् ५१
कुटजातिविषामुस्ताबालकं लोध्रचन्दनम्
धातकी दाडिमं पाठा क्वाथमेषां समाक्षिकम् ५२
पिबद्रक्तातिसारे तु दाहशूलप्रशान्तये

कुटजादिकषायोऽय सर्वातीसारनाशनः ५३
कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः
आजेन पयसा पीतः सद्योऽतीसारनाशनः ५४
सवत्सकः सातिविषः सबिल्वः सोदीच्यमुस्तश्च कृतः कषायः
सामे सशूले सहशोणिते च चिरप्रवृत्तेऽपि हितोऽतिसारे ५५
कृष्णामृन्मधुकं लोध्रं कौटजं तण्डुलाम्बुना
पीतमेकत्र सक्षौद्रं रक्तसंग्रहणं परम् ५६
गुडेन भक्षयेद्बिल्वं रक्तातीसारनाशनम्
आमशूलविबन्धघ्नं कुक्षिरोगहरं परम् ५७
जम्ब्वाम्रामलकीनान्तु कुट्टयेत्पल्लवान्नवान्
तत्पीतं मधुना युक्तं रक्तातीसारनाशनम् ५८
निक्वाथ्य मूलममलं गिरिमल्लिकायाःसम्यक् पलद्वितयमम्बुचतुःशरावे
तत्पादशेषसलिलं खलु शोषणीयं क्षीरे पलद्वयमिते कुशलैरजप्याः ५९
प्रक्षिप्य माषकानष्टौ मधुनस्तत्र शीतले
रक्तातिसारी तत्पीत्वा नैरुज्यंक्षिप्रमाप्नुयात् ६०
पीत्वा शतावरीकल्कं पयसा क्षीरभुग् जयेत्
रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः ६१
गोदुग्धनवनीतं च मधुना सितया सह
लीढं रक्तातिसारे तु ग्राहकं परमं मतम् ६२
पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना
रक्तातीसारजिद्रक्तपित्ततृड्दाहमेहनुत् ६३
विरेकैर्बहुभिर्यस्य गुदं पित्तेन दह्यते
पच्यते वा तयोः कार्यं सेकप्रक्षालनादिकम् ६४
पटोलयष्टिमधुकक्वाथेन शिशिरेण हि
गुदप्रक्षालनं कार्यं तेनैव गुदसेचनम् ६५
दाहे पाके हितं छागीदुग्धं सक्षौद्रशर्करम्
गुदस्य क्षालने सेके युक्तं पाने च भोजने ६६
अतिप्रवृत्त्या महती भवेद्यदि गुदव्यथा
स्विन्नमूषकमांसेन तदा संस्वेदयेद् गुदम् ६७
अथ गोधूमचूर्णस्य संशृतस्य तु वारिणा

साज्यस्य गोलकं कृत्वा मृदु संस्वेदयेद् गुदम् ६८
गुदनिःसरणे प्रोक्तं चाङ्गेरीघृतमुत्तमम्
गुदभ्रंशे गुदं स्नेहैरभ्यज्यान्तःप्रवेशयेत् ६९
प्रविष्टं स्वेदयेन्मन्दं मूषकस्यामिषेण हि ७०
शम्बूकमांसं सुस्विन्नंसतैललवणान्वितम्
ईषद् घृतेन चाभ्यज्य स्वेदयेत्तेन यत्नतः ७१
गुदभ्रंशमशेषेण नाशयेत्क्षिप्रमेव च
मूषकस्याथ वसया पायुं सम्यक्प्रलेपयेत्
गुदभ्रंशाभिधो व्याधिः प्रणश्यति  न संशयः ७२
चाङ्गेरीकोलदध्यम्लक्षारनागरसंयुतम्
घृतं विपक्वं पातव्यं गुदभ्रंशगदापहम् ७३
कोमलं पद्मिनीपत्रं यः खादेच्छर्कराऽन्वितम्
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ७४
श्वेतं स्निग्धं घनं बद्धं शीतलं मन्दवेदनम्
गौरवारुचिसंयुक्तं श्लेष्मणा सार्यते शकृत् ७५
श्लेष्मातिसारे प्रथमं हितंलङ्घनपाचनम्
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः ७६
चव्यं सातिविषामुस्तं बालबिल्वं सनागरम्
वत्सकत्वक्फलं पथ्या च्छर्दिश्लेष्मातिसारनुत् ७७
हिङ्गु सौवर्चलंव्योषमभयाऽतिविषा वचा
पीतमुष्णाम्बुना चूर्णमेषां श्लेष्मातिसारनुत् ७८
अथ द्विदोषजातीसारस्य सामान्यचिकित्सा
तत्र कृमिशत्र्वादिक्वाथः
कृमिशत्रुवचाबिल्वपाठाधान्याककट्फलम्
एषां क्वाथं भिषग्दद्यादतीसारे द्विदोषजे ७९
तेषां चिकित्सा प्रोक्तैव विशिष्टा च निगद्यते ८०
अथ वातश्लेष्मातिसारस्य चिकित्सा
तत्र कट्फलादिक्वाथः
कट्फलं मधुकं लोध्रं त्वग्दाडिमफलस्य च
सतण्डुलजलं चूर्णं वातश्लेष्मातिसारनुत् ८१

अथ वातपित्तातिसारस्य चिकित्सा
तत्र चित्रकादिक्वाथः
चित्रकातिविषामुस्तं वालबिल्वं सनागरम्
वत्सकत्वक्फलं पथ्या वातपित्तातिसारनुत् ८२
अथ पित्तकफातीसारस्य चिकित्सा
तत्र मुस्तादिक्वाथः
मुस्ता सातिविषा मूर्वा वचा च कुटजः समाः
एषां कषायः सक्षौद्रः पित्तश्लेष्मातिसारनुत् ८३
तन्द्रायुक्तो मोहसादास्यशोषी वर्चः कुर्यान्नैकरूपं तृषाऽत्त
सर्वोद्भूते सर्वलिङ्गोपपत्तिः कृच्छ्रः साध्योबालवृद्धाबलानाम्८४
अथ सन्निपातातीसारस्य चिकित्सा
पञ्चमूलीबलाबिल्वगुडूची मुस्तनागरैः
पाठाभूनिम्बबर्हिष्ठकुटजत्वक्फलैः शृतम् ८५
सर्वजं हन्त्यतीसारं ज्वरञ्चापि तथा वमिम्
सशूलोपद्रवं श्वासं कासं चापि सुदुस्तरम् ८६
पञ्चमूली च सामान्या पित्ते योज्या कनीयसी
वाते पुनर्बलासे च सा योज्या महती मता ८७
अभया नागरं मुस्तं गुडेन सह योजितम्
चतुःसमेयं गुटिका सर्वातीसारनाशनी ८८
आमातीसारमानाहं सविबन्धं विसूचिकाम्
कृमीनरोचकं हन्याद्दीपयत्याशु चानलम् ८९
तत्कालाकृष्टकुटजत्वचं तण्डुलवारिणा
पिष्ट्वा चतुःपलमितां जम्बूपत्रेण वेष्टिताम् ९०
सूत्रेण बद्ध्वा गोधूमपिष्टेन परिवेष्टिताम्
लिप्ताञ्च घनपङ्केन निर्दहेद् गोमयाग्निना ९१
अङ्गारवर्णाञ्च मृदं दृष्ट्वा वह्नेः समुद्धरेत्
ततो रसं समादाय शीतं क्षौद्रयुतं पिबेत् ९२
उक्तः कृष्णात्रिपुत्रेण पुटपाकस्तु कौटजः
जयेत्सर्वानतीसारान् रक्तजान्सुचिरोत्थितान् ९३
कुटजत्वक्कृतः क्वाथो वस्त्रपूतो हिमीकृतः

स लीढोऽतिविषायुक्तः स्यात् त्रिदोषातिसारनुत् ९४
इच्छन्त्यत्राष्टमांशेन क्वाथादतिविषारजः
प्रक्षेपयेच्चतुर्थांशमिति केचिद्वदन्ति हि ९५
पलमङ्कोटमूलस्य पाठां दार्वीञ्च तत्समाम्
पिष्ट्वा तराडुलतोयेन वटकानक्षसम्मितान् ९६
छायाशुष्कांश्च तान्कुर्यात्तेष्वेकं तराडुलाम्बुना
पेषयित्वा प्रदद्यात्तं पानाय गदिने भिषक् ९७
वातपित्तकफोद्भूतान्द्वन्द्वजान्सान्निपातिकान्
हन्यात्सर्वानतीसारान्वटकोऽय प्रयोजितः ९८
तैस्तैर्भावैः शोचतोऽल्पाशनस्य बाष्पोष्मा वै वह्निमाविश्य जन्तोः
कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं तच्चाधस्तात्काकरान्तीप्रकाशम् ९९
निर्गच्छेद् वै विड्विमिश्रं ह्यविड् वा निर्गन्धं वा गन्धवद्वाऽतिसारः
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं रोगो वैद्यैः कष्ट एष प्रदिष्टः १००
भयेन क्षोभिता दोषा दूषयन्ति मलं यदा
तदाऽतिसार्यते जन्तुः क्षिप्रमुष्णं जलप्लवम् १०१
वातपित्तातिसारस्य प्रायो लिङ्गैः समन्वितम्
अभयोपशमाच्छर्म यस्मिन्स्यात्स भयात्स्मृतः १०२
भयशोकसमुद्भूतौ ज्ञेयौ वातातिसारवत्
तयोर्वातहरी कार्या हर्षणाश्वासनैः क्रिया १०३
अन्नाजीर्णात्प्रद्रुताः क्षोभयन्तो दोषाः कोष्ठे धातुसंघान्मलांश्च
नानावर्णान्नैकशः सारयन्ति शूलोपेतं षष्ठमेनं वदन्ति १०४
अथामातीसारस्य चिकित्सा
तत्र वत्सकादिक्वाथः
वत्सकातिविषाशुराठीबिल्वहिङ्गुयवाम्बुदाः
चित्रकेण युतः क्वाथ आमातीसारनाशनः १०५
अथ शोथातीसारस्य चिकित्सा
तत्र शोथघ्न्यादिक्वाथः
शोथघ्नीन्द्रयवौ पाठा श्रीफलातिविषाघनः
क्वथिताः सोषणाः पीताः शोथातीसारनाशनाः १०६
अथ छर्द्यतीसारस्य चिकित्सा

तत्राम्रास्थ्यादिक्वाथः
आम्रास्थिमध्यमालूरफलक्वाथः समाक्षिकः
शर्करासहितो हन्याच्छर्द्यतीसारमुल्वणम् १०७
कषायो भृष्टमुद्गस्य सलाजमधुशर्करः
निहन्याच्छर्द्यतीसारं तृष्णां दाहं ज्वरं भ्रमम् १०८
दध्ना ससारेण समाक्षिकेण भुञ्जीत निःसारकपीडितस्तु
सुतप्तकुप्यक्वथितेन वाऽपि क्षीरेण शीतेन मधुप्लुतेन १०९
दीप्ताग्निर्निष्पुरीषो यः सार्यते फेनिलं शकृत्
स पिबेत्फाणितं शुण्ठीं दधि तैलं पयो घृतम्
बलाविश्वाशृतं क्षीरं गुडतैलानुयोजितम्
दीप्ताग्निं पाययेत्प्रातः सुखदं वर्चसः क्षये १११
तुलां संकुटय बिल्वस्य पचेत्पादावशेषितम्
सक्षीरं साधयेत्तैलं श्लक्ष्णपिष्टैरिमैः समैः ११२
बिल्वं सधातकीकुष्ठं शुण्ठीरास्नापुनर्नवाः
देवदारुवचामुस्तं लोध्रमोचरसान्वितम् ११३
एभिर्मृद्वग्निना पक्वं ग्रहण्यर्शोऽतिसारनुत्
बिल्वतैलमितिख्यातमत्रिपुत्रेण भाषितम् ११४
ग्रहण्यर्शोऽधिकारे ये स्नेहाः समुपदर्शिताः
योज्यास्ते ह्यतिसारेऽपि त्रयाणां तुल्यहेतुना ११५
वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य
प्रवाहतोऽल्प बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः ११६
प्रवाहिका वातकृता सशूला पित्तात्सदाहा सकफा कफाच्च
सशोणिता शोणितसम्भवा च ताः स्नेहरूक्षप्रभवा मतास्तु ११७
तासामतीसारवदादिशेच्च लिङ्गं क्रमं चामविपक्वतां च ११८
अथ प्रवाहिकाचिकित्सा
बिल्वपेषी गुडं लोध्रं तैलं मरिचसंयुतम्
लीढ्वा प्रवाहिकाऽक्रान्तः सत्वरं सुखमाप्नुयात् ११९
धातकी बदरीपत्रं कपित्थं रसमाक्षिकम्
सलोध्रमेकतो दध्ना पिबेन्निर्वाहिकाऽदितः १२०
पक्वजाम्बवसङ्काशं यकृत्खण्डनिभं तनु

घृततैलवसामज्ञवेसवारपयोदधि १२१
मांसधावनतोयाभं कृष्णं नीलारुणप्रभम्
कर्वुरं मेचकं स्निग्धं चन्द्रकोपगतं घनम् १२२
कुणपं मस्तुलुङ्गाभं सगन्धं कुथितं बहु
तृष्णादाहारुचिश्वासहिक्वापार्श्वास्थिशूलिनम् १२३
संमूर्च्छाऽरतिसंमोहयुक्तं पक्ववलीगुदम्
प्रलापयुक्तञ्च भिषग्वर्जयेदतिसारिणम् १२४
असंवृतगुदं क्षीणं शूलाध्मानैरुपद्रुतम्
गुदे पक्वे गतोष्माणमतिसारिणमुत्सृजेत् १२५
श्वासशूलपिपासाऽत्त क्षीणंज्वरनिपीडितम्
विशेषेण नरं वृद्धमतिसारो विनाशयेत् १२६
शोथं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम्
छर्दिं मूर्च्छां च हिक्काञ्च दृष्ट्वाऽतीसारिणं त्यजेत् १२७
हस्तपादाङ्गुलीसन्धिप्रपाको मूत्रनिग्रहः
पुरीषस्योष्णताऽतीव मरणायातिसारिणः१२८
अतिसारी राजरोगी ग्रहणीरोगवानपि
मांसाग्निबलहीनो यो दुर्लभं तस्य जीवनम् १२९
बाले वृद्धे त्वसाध्योऽय लिङ्गैरेतैरुपद्रुतः
अपि यूनामसाध्यं स्यादतिदुष्टेपु धातुषु १३०
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः १३१
स्नानावगहावभ्यङ्गं गुरुस्निग्धादिभोजनम्
व्यायाममग्निसन्तापमतिसारी विवर्जयेत् १३२
प्रत्येकं दश गद्याणाः शुद्धसूतकगन्धयोः
विंशतिस्त्रिदिनं खल्वे पिष्ट्वा तां कज्जलद्यं त्र्यहम् १३३
ततो वज्रस्य दुग्धेन पिष्ट्वा तां कज्जलद्यं त्र्यहम्
आर्द्रकं चित्रकं श्वेतं निःसहायञ्च मर्दयेत् १३४
पेषयेत्तद्रसैरेवं कज्जलद्यं तां दिनत्रयम्
पीतानाञ्च कपर्दीनां चूर्णं गद्याणविंशतिः १३५
विशतिः शङ्खचूर्णस्य चत्वारिंशच्च मिश्रितम्

त्रिदिनं मर्दयेत्खल्वे पूर्वोक्तेन क्रमेण च १३६
त्र्यहमर्कस्य दुग्धेन वज्रीदुग्धेन च त्र्यहम्
तन्मध्ये कज्जलद्यं क्षिप्त्वा चित्रकार्द्ररसेन तु १३७
खल्वे पिष्ट्वा द्वयोः कार्या गुट्यो बदरसम्मिताः
लिप्त्वा दग्ध्वाऽशु चूर्णेन पक्वकुह्लरिकांतरम् १३८
प्रक्षिप्य गुटिकास्तत्र चूर्णलिप्तपिधानकम्
दत्त्वा वस्त्रं मृदा लिप्त्वा गर्त्तं हस्तप्रमाणकम् १३९
तद्गर्भे कुह्लरीं मुक्त्वा पुटो देयश्च शाणकैः
पश्चाच्चित्रकनीरेण स्वाङ्गशीतञ्च पेषयेत् १४०
गुटिकां पूर्वरीत्यैव कृत्वा देयः पुनः पुटः
दग्धानां गुटिकानाञ्च चूर्णं कृत्वाऽथ कूपके १४१
क्षेप्यं चैव हि निष्पन्नो रसोऽय शङ्खपोटली
आमज्वरातिसारे च श्वासे कासे तथैव च १४२
श्लेष्मपित्तामवातेषु मन्दाग्नौ ग्रहणीषु च
अष्टादशप्रमेहेषु जीर्णे जीर्णबलेषु च १४३
द्वात्रिंशन्मरिचैः साकं सघृतं वल्लपञ्चकम्
सर्वरोगेषु दातव्यं मरिचाज्यं विना ज्वरे १४४
शालयो दधि दुग्धादि भोजनं मधुरं हितम्
कट्वम्लक्षारतैलाद्यान्दूरतः परिवर्जयेत् १४५
विधिनाऽनेनकर्त्तव्यो रसोऽसौ शङ्खपोटली
क्रमेण विनिवर्त्तन्ते प्रोक्तरोगा न संशयः १४६
त्रैलोक्यविजयाजातीफले तुल्ये कलिङ्गकम्
गृहीत्वा द्विगुणं श्रेष्ठो लेहः सर्वातिसारनुत् १४७
बिल्वमोचरसलोध्रधातकीपुष्पचूतफलबीजसंयुता
नाशयेदतिविषाऽवलेहिका सिन्धुवेगमपि दुर्धरं ध्रुवम् १४८
इति द्वितीयोऽतीसाराधिकारः समाप्तः २

अथ तृतीयो ज्वरातिसाराधिकारः ३

ज्वरातिसारयोरुक्तं निदानं यत्पृथक्पृथक्

तस्माज्ज्वरातिसारस्य निदानं नोदितं पुनः १
ज्वरातिसारयोरुक्तं भेषजं यत्पृथक्पृथक्
न तन्मिलितयोः कार्यमन्योऽन्य वर्धयेद्यतः २
अतस्तौ प्रतिकुर्वीत विशेषोक्तचिकित्सितैः ३
लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजंबलिनः
समुदीर्णदोषनिचयं तत्पाचयेत्तथा शमयेत् ४
लङ्घनमुभयोरुक्तं मिलिते कार्यं विशेषतस्तदनु
उत्पलषष्ठकसिद्धं लाजामराडादिकं सकलम् ५
पृश्निपर्णीबला बिल्वधनिकानागरोत्पलैः
ज्वरातिसारयोर्वाऽपि पिबेत्साम्लं शृतं नरः ६
कणाकरिकणालाजक्वाथो मधुसितायुतः
पीतो ज्वरातिसारस्य तृष्णामाशु विनाशयेत् ७
नागरातिविषामुस्ताऽमृताभूनिम्बवत्सकैः
क्वाथः सर्वज्वरान्हन्ति चातिसारं सुदारुणम् ८
गुडूच्यतिविषाधान्यशुराठीबिल्वाब्दबालकैः
पाठाभूनिम्बकुटजचन्दनोशीरपर्पटैः ९
पिबेत्कषायं सक्षौद्रं ज्वरातीसारनाशनम्
हृल्लासारुचितृड्दाहवमीनाञ्च निवृत्तये १०
उत्पलं दाडिमत्वक्च पद्मकेशरमेव च
पीतं तराडुलतोयेन ज्वरातीसारनाशनम् ११
बिल्वबालकभूनिम्बगुडूचीमुस्तवत्सकैः
कषायःपाचनःशोथज्वरातीसारनाशनः १२
नागरातिविषाबिल्वगुडूचीमुस्तवत्सकैः
कषायः पाचनः शोथज्वरातीसारनाशनः १३
दशमूलीकषायेण विश्वमद्मसमां पिबेत्
ज्वरे चैवातिसारे च सशोथे ग्रहणी गदे १४
इति तृतीयाज्वरातिसारः समाप्तः ३

अथ चतुर्थो ग्रहणीरोगाधिकारः ४

अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः

भूयः सन्दूषितो वह्निर्ग्रहणीमपि दूषयेत् १
अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता
अपक्वं धारयत्यन्नं पक्वं त्यजति चाप्यधः २
षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता
आमपक्वाशयान्तःस्था ग्रहणी साऽभिधीयते ३
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीबलः
तस्मादग्नौ प्रदुष्टे तु ग्रहण्यपि विदुष्यति
तस्मात्कार्यः परीहारो ह्यतिसारे विरिक्तवत् ४
एकैकशः सर्वशश्च दोषैरत्यन्तमूर्च्छितैः
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ५
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम्
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ६
कटुतिक्तकषायाति रुक्षशीतलभोजनैः
प्रमितानशनात्यध्ववेग निग्रहमैथुनैः ७
मारुतः कुपितो वह्निं संछाद्य कुरुते गदम्
तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ८
कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः
पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णं विसूचिका ९
हृत्पीडाकार्श्यदौर्बल्यं वैरस्यं परिकर्त्तिका
गृद्धिः सर्वरसानाञ्च मनसः सदनं तथा १०
जीर्णेजीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च
स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः ११
चिराद् दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत्
पुनः पुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् १२
कटुतिक्तविदाह्यम्लक्षाराद्यैः पित्तमुल्वणम्
आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम् १३
सोऽजीर्णं पीतनीलाभं पीताभः सार्यते द्रवम्
अत्यम्लोद्गारहृत्कण्ठदाहारुचितृषाऽदितः १४
गुर्वतिस्निग्धशीतादि भोजनादतिभोजनात्
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितःकफः १५

तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः
आस्योपदेहमाधुर्यकासष्ठी वनपीनसाः १६
हृदयं मन्यते स्तब्धमुदरं स्तिमितं गुरु
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् १७
भिन्नामश्लेष्मसंश्लिष्टगुरुवर्चः प्रवर्त्तनम्
अकृशस्यापि दौर्बल्यमालस्यञ्च कफात्मके १८
पृथग्वातादिनिर्दिष्टहेतु लिङ्गसमागमे
त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि भेषजम् १९
द्रवं घनं सितं स्निग्धं सकटीवेदनं शकृत्
आमं बहु सपैच्छिल्यं सशब्दं मन्दवेदनम् २०
पक्षान्मासाद्दशाहाद्वा नित्यञ्चापि विमुञ्चति
अन्त्रकूजनमालस्यं दौर्बल्यं सदनं भवेत् २१
दिवा प्रकोपो भवति रात्रौ शान्तिं च गच्छति
दुर्विज्ञेया दुर्निवारा चिरकालानुबन्धिनी २२
सा भवेदामवातेन सङ्ग्रहग्रहणी मता २३
प्रसुप्तिः पार्श्वयोःशूलं तथा जलघटीध्वनिः
तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् २४
ग्रहणीमाश्रितं रोगमजीर्णवदुपाचरेत्
लङ्घनैर्दीपनीयैश्च सदाऽतीसारभेषजैः २५
दोषं सामं निरामञ्च विद्यादत्रातिसारवत्
अतिसारोक्तविधिना तस्यामञ्च विपाचयेत् २६
पेयाऽदि पटु लघ्वन्नं पञ्चकोलादिभिर्युतम्
दीपनानि च तक्रं च ग्रहगयां योजयेद्भिषक् २७
कपित्थबिल्वचाङ्गेरीत क्रदाडिमसाधिता
यवागूः पाचयत्यामं शकृत्संवर्त्तयत्यपि २८
गव्यं दध्युत्तमं बल्यं पाके स्वादु रुचिप्रदम्
पवित्रं दीपनं स्निग्धं पुष्टिकृत्पवनापहम्
उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम् २९
माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत्
स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्त्रदूषणम् ३०

आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम्
शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम् ३१
तक्रन्तु घोलं मथितोदश्वित्तक्रप्रभेदतः
सुश्रुताद्यैर्मुनिश्रेष्ठैश्चतुर्द्धा परिकीर्त्तितम् ३२
ससरं निर्जलं घोलं मथितं त्वसरोदकम्
तक्रं पादजलं प्रोक्तमुदश्विच्चार्द्धवारिकम् ३३
वातपित्तहरं घोलं मथितं कफपित्तनुत्
उदश्वित्कफदं बल्यं श्रमघ्नं परमं मतम् ३४
तक्रं ग्राहि कषायाम्लं मधुरं दीपनं लघु
वीर्योष्णं बलदं वृष्यं प्रीणनं वातनाशनम् ३५
यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत्
ग्रहण्यादिमतां तक्रं पथ्यं संग्राहि लाघवात् ३६
वातघ्नमम्लसान्द्रत्वात्सद्यस्कं त्वविदाहि च
किञ्च स्वादुविपाकं च अन्ते पित्तप्रकोपणम् ३७
कषायोष्णविकासित्वाद्रौक्ष्याच्चैव कफे हितम् ३८
समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः
स्तोकोद्धृतघृतं तस्माद् गुरु वृष्यं कफावहम्
अनुद्धृतघृतं सान्द्रं गुरु पुष्टिवलप्रदम् ३९
वातेऽम्ल सैन्धवोपेतं पित्ते स्वादु सशर्करम्
पिबेत्तक्रं कफे चापि क्षारत्रिकटुसंयुतम् ४०
हिङ्गुजीरयुतं घोलं सैन्धवेनावधूलितम्
ग्रहण्यर्शोऽतिसारघ्नं भवेद्वातहरं परम् ४१
रोचनं पुष्टिदं बल्यं बस्तिशूलविनाशनम् ४२
तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च
पीनसश्वासकासादौ पक्वमेव विशिष्यते ४३
नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ४४
न तक्रसेवी व्यथते कदाचिन्न तक्रदग्धाः प्रभवन्ति रोगाः
यथा सुराणाममृतं सुखाय तथा नराणां भुवि तक्रमाहुः ४५
मुद्गयूषं रसं तक्रंधान्यजीरकसंयुतम्

सैन्धवेनान्वितं दद्यात्षड्यूषणमितीरितम् ४६
कर्षं गन्धकमर्द्धपारदमुभे कुर्याच्छुभां कज्जलद्यं
द्व्यत्तं त्र्यूषणतश्च पञ्चलवणं सार्द्धञ्च कर्षं पृथक्
भृष्टं हिङ्गु च जीरकद्वययुतं सर्वार्द्धभङ्गाऽन्वितं
खादेट्टङ्कमितं प्रवृत्तिगदवांस्तक्रेण बिल्वेन वा ४७
जातीफललवङ्गैला पत्रत्वङ्नागकेशरैः
कर्पूरचन्दनतिलत्वक्क्षीरीतगरामलैः ४८
तालीसपिप्लीपथ्यास्थूलजीरकचित्रकैः
शुराठीविडङ्गमरिचैः समभागं विचूर्णितैः ४६
यावन्त्येतानि सर्वाणि दद्याद्भङ्गाञ्च तावतीम्
सर्वचूर्णसमं कृत्वा प्रदेया शुभ्रशर्करा ५०
कर्षमात्रमिदं खादेन्मधुना प्लावितं जनः
नाशयेद ग्रहणीं कासं त्तयकासमरोचकम् ५१
चित्रकं पिप्पलीमूलं त्तारो लवणपञ्चकम्
व्योषं हिङ्ग्वजमोदा च चव्यं चैकत्र चूर्णयेत् ५२
वटिका मातुलुङ्गस्य रसैर्वा दाडिमस्य च
कृता विपाचयत्यामं दीपयत्याशु चानलम् ५३
श्रीफलशलाटुमज्जा नागरचूर्णेन मिश्रितः सगुडः
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ५४
चतुष्पलं सुधाकाराडं त्रिपलं लवणत्रयम्
वार्ताकोः कुडवं चार्कमूलाद्बिल्वं तथाऽनलात् ५५
दग्ध्वा द्रवेण वार्त्ताकोर्गुटिका भोजनान्तरे
भुक्ता भुक्तं पचत्याशु नाशयेद् ग्रहणीगदम्
कासं श्वासं तथाऽशासि विसूचीञ्च हृदामयम् ५६
मुस्तकातिविषाबिल्वकौटजं सूद्मचूर्णितम्
मधुना च समालीढं ग्रहणीं सर्वजां जयेत् ५७
श्वेतो वा यदि वा रक्तः सुपक्वो ग्रहणीगदः
गुडेनाधिकसर्जेन भद्मितेनाशु नश्यति ५८
बिल्वाब्दशक्रयवबालकमोचसिद्धमाजं पयः पिबति यो दिवसत्रयं ना
सोऽतिप्रवृद्धचिरजं ग्रहणीविकारं सामं सशोणितमसाध्यमपि त्तिणोति ५६

प्रस्थत्रयं त्वामलकीरसस्य शुद्धस्य दत्वाऽद्धतुलां गुडस्य
चूर्णीकृतैर्ग्रन्थिकजीरचव्यव्योषैः सकृष्णाहपुषाऽजमोदैः ६०
विडङ्गसिन्धुत्रिफलायवानीपाठाऽग्निधान्यैश्च पलप्रमाणैः
दत्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत् ६१
तं भक्षयेदक्षपलप्रमाणं यथेष्टचेष्टस्त्रिसुगन्धियुक्तम्
अनेन सर्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोथाः ६२
शाम्यन्ति चायं चिरमन्तरग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः
स्त्रीणान्तु वन्ध्याऽमयनाशनः स्यात् कल्याणको नाम गुडः प्रसिद्धः ६३
तैले मनाक् त्रिवृद् भृष्ट्वा त्रिफलायाः पलत्रयम्
सिद्धे निधेयमत्रैव गुडे कल्याणपूर्वके ६४
पिप्पली पिप्पलीमूलं चित्रकं गजपिप्पली
धान्यकञ्च विडङ्गानि यवानी मरिचानि च ६५
त्रिफला चाजमोदा च नीलिनी जीरकस्तथा
सैन्धवं रोमकञ्चापि सामुद्रं रुचकं विडम् ६६
आरग्वधश्च त्वक्पत्रं सूक्ष्मैला चोपकुञ्चिका
शुण्ठी शक्रयवाश्चैव प्रत्येकं कर्षसम्मिताः ६७
मृद्वीकायाः पलान्यत्र चत्वारि कथितानि हि
त्रिवृतायाःपलान्यष्टौ गुडस्यार्द्धतुलां तथा ६८
तिलतैलपलान्यष्टावामलक्या रसस्य तु
प्रस्थत्रयमिदं सर्वं शनैर्मृद्वग्निना पचेत् ६९
औदुम्बरं चामलकं बादरञ्च यथाबलम्
तावन्मात्रमिदं खादेद् भक्षयेद्वा यथाऽनलम् ७०
निखिलान्ग्रहणीरोगान्प्रमेहांश्चैव  विंशतिम्
उरोघातं प्रतिश्यायं दौर्बल्यं वह्निसंक्षयम् ७१
ज्वरानपि हरेत्सर्वान्कुर्यात्कान्तिं मतिं बलम्
पाण्डुरोगाञ्चवाद्धन्ति रक्तपित्तञ्च विड्ग्रहम् ७२
धातुक्षीणो वयः क्षीणः स्त्रीषु क्षीणः क्षयी च यः
तेभ्योहितश्च वन्ध्यायै महाकल्याणको गुडः ७३
कूष्माण्डानां सुपक्वानां स्विन्नानां निष्कुलत्वचाम्
सर्पिःप्रस्थं पलशतं ताम्रपात्रे शनैः पचेत् ७४

पिप्पली पिप्पलीमूलं चित्रकं गजपिप्पली
धान्यकानि विडङ्गानिनागरं मरिचानि च ७५
त्रिफला चाजमोदा च कलिङ्गाजाजिसैन्धवम्
एकैकस्य पलञ्चैकं त्रिवृतोऽष्टौ पलानि च ७६
तैलस्य च पलान्यष्टौ गुडात्पञ्चाशदेव तु
ग्रामलक्या रसस्यात्र प्रस्थत्रयमुदीरितम् ७७
तावत्पाकं प्रकुर्वीत मृदुना वह्निना भिषक्
यावद्दर्व्याः प्रलेपः स्यात्तदैनमवतारयेत् ७८
ग्रौदुम्बरं चामलकं बादरं वा यथाबलम्
तावन्मात्रमिदं खादेद् भक्षयेद्वा यथाऽनलम् ७९
ग्रनेनैव विधानेन प्रयुक्तश्च दिने दिने
निहन्ति ग्रहणीरोगान्कुष्ठानर्शोभगन्दरान् ८०
ज्वरमानाहहृद्रोगं गुल्मोदरविसूचिकाः
कामलां पाराडुरोगञ्च प्रमेहांश्चैव विंशतिम् ८१
वातशोणितवी सर्पदद्रुयक्ष्महलीमकान्
वातपित्तकफान्सर्वान्दुष्टाञ्छुद्धान्समाचरेत् ८२
व्याधिक्षीणा वयः क्षीणाः स्त्रीषुक्षीणाश्च ये नराः
तेभ्यो हितो गुडोऽय स्याद्वन्ध्यानामपि पुत्रदः
वृष्यो बल्यो बृंहणश्च वयसः स्थापनं तथा ८३
ग्रतीसाराधिकार लिखितं बिल्वतैलञ्चात्र हितम्
इति चतुर्थोग्रहणीरोगाधिकारः समाप्तः ४

ग्रथ मध्यखराडम्
तत्र द्वितीयो भागः
ग्रथ पञ्चमोऽशोऽधिकारः ५

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च
ग्रर्शांसि षट् प्रकाराणि विद्याद् गुद्वलित्रये १
कषायकटुतिक्तानि रुक्षशीतलघूनि च
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम् २
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च

शोको वातातपस्पर्शो हेतुर्वातार्शसां ततः ३
कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ४
विदाहि तीक्ष्णमुष्णञ्च सर्वं पानान्नभोजनम्
पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ५
मधुरस्निग्धशीतानि लवणाम्लगुरूणि च
अव्यायामदिवास्वप्नशय्याऽसनसुखे रतिः ६
प्राग्वातसेवाशीतौ च देशकालावचिन्तनम्
श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ७
हेतुलक्षणसंसर्गाद्विद्याद् द्वन्द्वोल्वणानि च
सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणं समम् ८
विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ९
ग्रहणीदोषपाण्ड्वर्त्ति प्रशङ्का चोदरस्य च
पूर्वरूपं विनिर्दिष्टमर्शसामभिवृद्धये १०
दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन्
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि ताञ्जगुः ११
गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः
म्लानाः श्यावारुणाः स्तब्धा विशदाः परुषाः खराः १२
मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः
बिम्बीकर्कन्धुखर्जूरकर्कोटीफलसन्निभाः १३
केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः
शिरःपार्श्वांसकटयूरुवङ्क्षणाभ्यधिकव्यथाः १४
क्षवथूद्गारविष्टम्भहृद्रोगा रोचकप्रदाः
कासश्वासाग्निवैषम्य कर्णनादभ्रमावहाः १५
तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम्
रुक्फेनपिच्छाऽनुगतं विड्बद्धमुपवेश्यते १६
कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते
गुल्मप्लीहोदराष्ठीलासम्भवस्तत एव च १७
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः

तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः १८
शुकजिह्वा यकृत्खराडजलौकोवक्त्रसन्निभाः
दाहपाकज्वरस्वेदतृरामूर्च्छाऽरतिमोहदाः १६
सोष्मारगो द्रवनीलोष्णपीतरक्तामवर्चसः
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः २०
रक्तोल्वरणा गुदे कीलाः पित्ताकृतिसमन्विताः
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः २१
तेऽत्यर्थं दुष्टमुष्णं च गाढविट्कप्रपीडिताः
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः २२
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः २३
विट् श्यावं कठिनं रुक्षमधोवायुर्न वर्त्तते
तनु चारुणबर्णं च फेनिलं चासृगर्शसाम् २४
कट्यूरुगुदशूलञ्च दौर्बल्यं यदि चाधिकम्
तत्रानुबन्धो वातस्य हेतुर्यदि च रुक्षणम् २५
शिथिलं श्वेतपीतं च विट् स्निग्धं गुरुशीतलम्
यद्यर्शसां घनं चासृक् तन्तुमत्पाराडुपिच्छिलम् २६
गुदं सपिच्छं स्तिमितं गुरु स्निग्धं च कारणम्
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः २७
श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः
उत्सन्नपचिताः स्निग्धाःस्तब्धवृत्तगुरुस्थिराः २८
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कराड्वाढ्याः स्पर्शनप्रियाः
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः २६
वङ्क्षणानाहिनः पायुबस्तिनाभिविकर्षिणः
सकासश्वासहृल्लासप्रसेकारुचिपीनसाः ३०
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः
क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ३१
वसाभसकफप्राज्यपुरीषाः सप्रवाहिकाः
न स्रवन्ति न भिद्यन्ते पाराडुस्निग्धत्वगादयः ३२
हेतुलक्षणसंसर्गाद्विद्याद् द्वन्द्वोल्वणानि च ३३

सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ३४
अर्शांसि सहजातानि दारुणानि भवन्ति हि
दुर्दर्शनानि पाण्डूनि परुषाण्यरुणानि च ३५
अन्तर्मुखाणि तैरार्त्तः क्षीणः क्षीणस्वरो भवेत्
क्षीणानलः क्षीणरेताः शिरासन्नतविग्रहः
अल्पप्रजः क्रोधशीलो भग्नकांस्यस्वनान्वितः
शिरोदृक्कर्णनासासु रोगो हृल्लेपसेकवान् ३६
बाह्यायां तु वलौ जातान्येकदोषोल्वणानि च
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ३७
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च
कृच्छ्रसाध्यानि तान्याहुःपरिसंवत्सराणि च ३८
सहजानि त्रिदोषाणि यानि चाभ्यन्तरां बलिम्
जायन्तेऽशासि संश्रित्य तान्यसाध्यानि निर्दिशेत् ३९
शेषत्वादायुषस्तानि चतुष्पादसमन्वये
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ४०
हस्ते पादे मुखे नाभ्यां गुदे बृषणयोस्तथा
शोथो हृत्पार्श्वशूलं च यस्यासाध्योऽशसो हि सः ४१
हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग्ज्वरः
तृष्णा गुदाऽस्यपाकश्च निहन्युर्गुदजातुरम् ४२
तृष्णाऽरोचकशूलार्त्तमतिप्रस्नुतशोणितम्
शोथातीसारसंयुक्तमर्शांसि क्षपयन्ति हि ४३
मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि च
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ४४
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः
कीलोपमं स्थिरखरं चर्मकीलं तु तद्विदुः ४५
वातेन तोदपारुष्यं पित्तादतिसरक्तता
श्लेष्मणा स्निग्धता तस्य ग्रन्थितत्वं सवर्णता ४६
यद्वातस्यानुलोम्याय यदग्निबलवृद्धये
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमर्शसैः ४७
शालिषष्टिकगोधूमयवान्नानि घृतैः सह

अजाक्षीरेण वा निम्बपटोलानां रसेन वा ४८
वार्त्ताकुमूलजैः कान्दै रसैर्मांसरसेन वा
जीवन्त्युपोदिकाशाकैस्तण्डुलीयकवास्तुकैः४९
अन्यैश्च सृष्टविण्मूत्रमरुद्भिर्वह्निदीपनैः
अर्शांसि भिन्नवर्चांसि हन्याद्वातातिसारवत् ५०
सतक्रं लवणं दद्याद्वातवर्चोऽनुलोमनम्
न प्ररोहन्ति गुदजाः पुनस्तक्रसमाहताः ५१
तक्राभ्यासोऽशसैः कार्यो बलवर्णाग्निवृद्धये
स्रोतःसु तक्रशुद्धेषु सम्यक् सरति तद्रसः ५२
तेन पुष्टिस्तथा तुष्टिर्बलं वर्णश्च जायते
वातश्लेष्मविकाराणां शतञ्च विनिवर्त्तते ५३
चिरबिल्वाग्निसिन्धूत्थनागरेन्द्रयवारलु
तक्रेण पिबतोऽशासि निपतन्त्यसृजा सह ५४
लेपं रजनिचूर्णेन सुधादुग्धयुतेन च
अर्शोरोगनिवृत्त्यर्थं कारयेत्तु चिकित्सकः ५५
पिप्पली सैन्धवं कुष्ठं शिरीषस्य फलं तथा
सुधादुग्धार्कदुग्धं वा लेपोऽय गुदजान् हरेत् ५६
हरिद्राजालिनीचूर्णं कटुतैलसमन्वितम्
एष लेपो वरः प्रोक्तो ह्यर्शसामन्तकारकः ५७
असितानां तिलानान्तु पलं शीतजलेन च
खादतोऽशासिशाम्यन्ति दृढा दन्ता भवन्ति च ५८
शस्त्रैर्वाऽथ जलौकाभिः प्रोच्छूनकठिनार्शसः
शोणितं सञ्चितं दृष्ट्वा हरेत्प्राज्ञः पुनः पुनः ५९
काशीसं सैन्धवं कृष्णा शुण्ठी कुष्ठञ्च लाङ्गली
शिलाभिदश्वमारश्च दन्तीजन्तुघ्नचित्रकम् ६०
तालकं कुनटी स्वर्णक्षीरी चैतैः पचेद्भिषक्
तैलं स्नुह्यर्कपयसा गवां मूत्रं चतुर्गुणम् ६१
एतदभ्यङ्गतोऽशासि क्षारेणेव पतन्ति हि
क्षारकर्मकरं ह्येतन्न च सन्दूषयेद्वलिम् ६२
शुण्ठीकणामरिचनागदलत्वगेलं चूर्णीकृतं क्रमविवर्द्धितमूर्ध्वमन्त्यात्

खादेदिदं समसितं गुदजाग्निमान्द्यगुल्मारुचिश्वसनकराठहृदामयेषु ६३
त्रिकत्रयं वचा हिङ्गु पाठाद्धारौ निशाद्वयम्
चव्यतिक्ताकलिङ्गानि शक्राह्वा लवणानि च ६४
ग्रन्थिबिल्वाजमोदाश्च गणोऽष्टाविंशतिर्मतः
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ६५
चूर्णं विडालपदकं पिबेदुष्णेन वारिणा
एरराडतैलयुक्तं वा लिह्याच्चूर्णमिदं नरः ६६
हन्यादर्शांसि सर्वाणि श्वासशोषभगन्दरान्
हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरम् ६७
हिक्कां कासं प्रमेहांश्च पाराडुरोगं सकामलम्
आमवातमुदावर्त्तमन्त्रवृद्धिं गुदाकृमीन् ६८
अन्ये च ग्रहणीदोषा भिषग्भिर्ये प्रकीर्त्तिताः
विजयो नाम चूर्णोऽय तान्सर्वानाशु नाशयेत् ६९
महाज्वरोपसृष्टानां भूतोपहतचेतसाम्
अप्रजानाञ्च नारीणां हितमेतद्धि भेषजम् ७०
मरिचमहौषधचित्रकशूरणभागा यथोत्तरं द्विगुणाः
सर्वसमो गुडभागः सेव्योऽय मोदकः प्रसिद्धफलः ७१
ज्वलनं ज्वलयति जाठरमुन्मूलयतीह शूलगुल्मगदान्
निःशेषयति श्लीपदमर्शांसि विनाशयत्याशु ७२
षोडश शूरणभागा वह्नेरष्टौ महौषधस्यातः
अर्द्धेन भागयुक्तिर्मरिचस्य ततोऽपि चार्द्धेन ७३
त्रिफला कणा समूला तालीसारुष्करकृमिघ्नानाम्
भागा महौषधसमा दहनांशा तालमूली च ७४
भागाः शूरणतुल्या दातव्या वृद्धदारकस्यापि
भृङ्गैले मरिचांशे सर्वाणयेकत्र कारयेच्चूर्णम् ७५
द्विगुणेन गुडेन युतः सेव्योऽय मोदकः प्रकामधनैः
गुरुवृष्यभोजनरतैरितरेषूपद्रवं कुर्यात् ७६
भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन
भीमस्य मारुतेरपि महाशनौ तेन तौ यातौ ७७
अग्निबलवर्णहेतुर्न केवलं शूरणो महावीर्यः

हन्ता शस्त्रक्षारानलैर्विनाऽप्यर्शसामेषः ७८
श्वयथुश्लीपदमदहृद् ग्रहणीं च कफानिलोद्भूताम्
नाशयति बलीपलितं मेधांकुरुतेजराञ्चहरेत् ७९
हिक्कां कासं श्वासं च राजरोगं प्रमेहांश्च
प्लीहानं च तथोग्रं हन्त्याशु रसायनं पुंसाम् ८०
त्रिवृत्तेजोवती दन्ती श्वदंष्ट्रा चित्रकं शटी
गवाक्षी मुस्तविश्वाह्वविडङ्गानि हरीतकी ८१
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात्
बृद्धदारात् पलान्यष्टौ शूरणस्य तु षोडश ८२
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम्
पूतन्तु तं रसं भूयः क्वाथ्येभ्यस्त्रिगुणं गुडम् ८३
मेलयित्वा पचेत्तावद्यावद्दर्वीप्रलेपनम्
अवतार्य ततः पश्चाच्चूर्णानीमानि दापयेत् ८४
त्रिवृत्तेजोवतीकन्दचित्रकान्द्विपलांशिकान्
एलात्वङ्मरिचं चापि नागाह्वाञ्चापि षट्पलम्८५
द्वात्रिंशच्च पलान्यत्र चूर्णयित्वा निधापयेत्
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशिनः ८६
हन्यादर्शांसि सर्वाणि तथा सर्वोदराणयपि
गुल्मानपि प्रमेहांश्च पाणडुरोगं हलीमकम् ८७
दीपयेदनलं मन्दं यक्ष्माणं चापकर्षति
आढ्यवाते प्रतिश्याये पीनसे च हितो मतः ८८
भवन्त्यनेन पुरुषाः शतं वर्षाणयनामयाः
दीर्घायुषः प्रजनना वलीपलितवर्जिताः ८९
गुडः श्रीबाहुशालोऽय रसायनवरो मतः
दुर्नामान्तकरो ह्येष दृष्टो वारसहस्रशः ९०
यावद्दर्वीप्रलेपः स्याद् गुडो वा तन्तुमान् भवेत्
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः ९१
क्षिप्तस्तु निश्चलस्तिष्ठेत्पतितस्तु न शीर्यति
एष पाकः समस्तानां गुडानां परिकीर्त्तितः ९२
सार्द्धं पलं पलं चार्द्धं भक्षयेद् गुडखणडयोः

एतच्चूर्णीकृतं युञ्ज्यादष्टकर्षगुडेन हि
शाणप्रमाणां गुटिकां कृत्वा वक्त्रे विधारयेत्
अस्याः प्रभावात्सर्वेऽपि कासा यान्त्येव सङ्क्षयम् ४२
समूलवल्कच्छदकण्टकार्यास्तुलां ततो द्रोणमितं जलञ्च
हरीतकीनां शतमेकपात्रे विपाच्य कुर्याच्चरणाम्बुशेषम् ४३
तस्मिन्कषाये तनुवस्त्रपूते हरीतकीभिः सहिते गुडस्य
तुलां विनिक्षिप्य पचेत्सुपक्वमेतत्समुत्तार्य सुशीतलञ्च ४४
पलं पलञ्चापि कटुत्रयञ्च तथा चतुर्जातपलं विचूर्ण्य
पलानि षट् पुष्परसस्य चापि विनिक्षिपेत्तत्र विमिश्रयेच्च ४५
प्रयुज्यमानो विधिनैष लेहो यथाबलञ्चापियथाऽनलञ्च
वातात्मकं पित्तकृतं कफोत्थं त्रिदोषजातानपि च त्रिदोषम् ४६
क्षतोद्भवञ्च क्षयजञ्च कासं श्वासञ्च हन्यात्सह पीनसेन
यक्ष्माणमेकादशरूपमुग्रं हरीतकी या भृगुणोपदिष्टा ४७
कण्टकारीतुलां नीरद्रोणे पक्त्वा कषायकम्
पादशेषं गृहीत्वा च तत्र चूर्णानि दापयेत् ४८
पृथक्पलांशान्येतानि गुडूची चव्यचित्रकौ
मुस्तं कर्कटशृङ्गी च त्र्यूषणं धन्वयासकः ४९
भार्गी रास्नाशटी चैव शर्करापलविंशतिः
प्रत्येकञ्च पलान्यष्टौ प्रदद्याद् घृततैलयोः ५०
पक्त्वा लेहत्वमानीय शीते मधु पलाष्टकम्
चतुर्भागं तुगाक्षीर्याः पिप्पल्याश्च चतुःपलम् ५१
क्षिप्त्वा निदध्यात्सुदृढे मृण्मये भाजने शुभं
लेहोऽय हन्ति हिक्काऽतिकासश्वासानशेषतः ५२
इति द्वादश कासाधिकारः समाप्तः

अथ त्रयोदशो हिक्काऽधिकारः १३

विदाहिगुरुविष्टम्भि रुक्षाभिष्यन्दिभोजनैः
शीतपानाशनस्नानरजो धूमात्तथाऽनिलैः १
व्ययामकर्मभाराध्व वेगाघातापतर्पणैः
हिक्का श्वासश्च कासश्च नृणां समुपजायते २

वायुःकफेनानुगतः पञ्च हिक्काःकरोति हि
अन्नजां यमलां क्षुद्रं गम्भीरां महतीं तथा ३
मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन्
स दोषवानाशु हिनस्त्यसून्यतस्ततस्तु हिक्केत्यभिधीयते बुधैः ४
कराठोरसोर्गुरुत्वञ्च वदनस्य कषायता
हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ५
पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः
हिक्कयेदूर्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ६
चिरेण यमलैर्वेगैर्या हिक्कासम्प्रवर्त्तते
कम्पयन्ती शिरो ग्रीवां यमलां तां विनिर्दिशेत् ७
विकृष्टकालैर्या बेगैर्मन्दैः समभिवर्त्तते
क्षुद्रिका नाम सा हिक्का जत्रुमूलं प्रधाविता ८
नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी
अनेकोपद्रववती गम्भीरा नाम सा स्मृता ९
मर्माणि पीडयन्तीव सततं या प्रवर्त्तते
महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी १०
आकम्पते हिक्कतो यस्य देहो दृष्टिश्चोर्ध्वं ताम्यते नित्यमेव
क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं तौ चान्त्यौ वर्जयेद्धिक्कमानौ ११
अतिसञ्चितदोषस्य भक्तद्वेषकृशस्य च
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः १२
आयासाच्च समुत्पन्ना हिक्का हन्त्याशु जीवितम्
यमिका च प्रलापार्त्तिमोहतृष्णासमन्विता १३
अक्षीणस्याप्यदीनस्य स्थिरधात्विन्द्रियस्य च
तस्यसाधयितुं शक्या यमिका हन्त्यतोन्यथा १४
यत्किञ्चित्कफवातघ्नमुष्णं वातानुलोमनम्
भेषजं पानमन्नं वा हिक्काश्वासेषु तद्धितम् १५
हिक्काश्वासातुरे पूर्वं तैलाक्ते स्वेद इष्यते
ऊर्ध्वाधः शोधनं शस्तं दुर्बले शमनं मतम् १६
प्राणावरोधतर्जनविस्मापनशीतवारिपरिषेकैः
चित्रैः कथाप्रयोगैः शमयेद्धिक्कां मनोभिघातैश्च १७

हिक्कार्त्तस्य पयश्छागं हितं नागरसाधितम्
मधुसौवर्चलोपेतं मातुलुङ्गरसं पिबेत् १८
मधुकं मधुसंयुक्तं पिप्पली शर्करान्विता
नागरं गुडसंयुक्तं हिक्काघ्नं नावनत्रयम् १९
प्रवालशङ्खत्रिफलाचूर्णं मधुघृतप्लुतम्
पिप्पली गैरिकञ्चेति लेहो हिक्कानिवारणः २०
नैपाल्या गोविषाणाद्वा कुष्ठात्सर्जरसस्य वा
धूपं कुशस्य वा कार्यं पिबेद्धिक्कोपशान्तये २१
निर्धूमाङ्गारनिक्षिप्त हिङ्गुमाषरजोभवः
हिक्काः पञ्चापि हन्त्याशु धूमः पीतो न संशयः २२
हरेणुककणानाञ्च क्वाथो हिङ्गुसमन्वितः
हिक्काप्रशमनश्रेष्ठो धन्वन्तरिवचो यथा २३
चन्द्रशूरस्य बीजानि क्षिपेदष्टगुणे जले
यदा मृदूनि मृद्नीयात्ततो वाससि गालयेत् २४
हिक्कातिवेगविकलस्तज्जलं पलमात्रया
पिबेत्पिबेत्पुनश्चापि हिक्कावश्यं प्रशाम्यति २५
इति त्रयोदशो हिक्काऽधिकारः समाप्तः १३

अथ चतुर्दशः श्वासरोगाधिकारः १४

यैरेव कारणैर्हिक्का देहिनां सम्प्रवर्त्तते
तैरेव बहुभिः श्वासो व्याधिर्घोरः प्रजायते १
महोर्ध्वच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा
भिद्यते स महाव्याधिः श्वास एको विशेषतः २
प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च
आनाहोवक्त्रवैरस्यं शङ्खनिस्तोद एव च ३
यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः
विष्वग्व्रजति संरुद्धस्तदा श्वासान् करोति सः ४
उद्धूयमानवातो यःशब्द वद् दुःखितो नरः
उच्चैः श्वसिति सन्नद्धो मत्तर्षभ इवानिशम् ५
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः

विवृताद्ययाननो बद्धमूत्रवर्चा विशीर्णवाक् ६
दीनस्य श्वसितञ्चास्य दूराद्विज्ञायते भृशम्
महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते ७
ऊर्ध्वं श्वसिति योऽत्यर्थं न च प्रत्याहरत्यधः
श्लेष्मावृतमुखस्त्रोतः क्रुद्धगन्धवहार्दितः ८
ऊर्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष इतस्ततः
प्रमुह्यन्वेदनाऽऽर्त्तश्च शुष्कास्योऽरतिपीडितः ९
ऊर्ध्वश्वासे प्रकुपिते ह्यधःश्वासो निरुद्ध्यते
मुह्यतस्ताम्यतश्चोर्ध्वश्वासस्तस्य निहन्त्यसून् १०
यस्तु श्वसिति विच्छिनं सर्वप्राणेन पीडितः
न वा श्वसिति दुःखार्त्तो मर्मच्छेदरुजाऽदितः ११
आनाहस्वेदमूर्च्छाऽऽर्त्तो दह्यमानेन वस्तिना
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः १२
विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः
छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून् १३
प्रतिलोमो यदा वायुः स्त्रोतांसि प्रतिपद्यते
ग्रीवां शिरश्च सङ्गृह्य श्लेष्माणं समुदीर्य च १४
करोति पीनसं तेन कराठे घुर्घुरकं तथा
अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीडकम् १५
प्रताम्यति स वेगेन तृष्यते सन्निरुध्यते
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः १६
श्लेष्मरायमुच्यमाने तु भृशं भवति दुःखितः
तस्यैव च विमोक्षान्ते मुहूर्त्तं लभते सुखम् १७
तथाऽस्योद्ध्वंसते कराठः कृच्छ्राच्छक्नोति भषितुम्
न चापि लभते निद्रां शयानः श्वासपीडितः १८
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः
आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति १९
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्त्तिमान्
विशुष्कास्यो मुहुःश्वासो मुहुश्चैवावधम्यते २०
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते

स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः २१
ज्वरमूर्च्छापरीतश्च विद्यात्प्रतमकं तु तम् २२
उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधजः
तमसा वर्द्धतेऽत्यर्थं शीतलैश्च प्रशाम्यति
मज्जतस्तमसीवास्य विद्यात्प्रतमकन्तु तम् २३
रुक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन्
क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः २४
हिनस्ति न च गात्राणि न च दुःखो यथेतरे
न च भोजनपानानां निरुणद्ध्युचितां गतिम् २५
नेन्द्रियाणां व्यथाञ्चापिकाञ्चिदुत्पादयेद्रुजम्
स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः २६
क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते
त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च २७
कामं प्राणहरा रोगा बहवो न तु ते तथा
यथा श्वासश्च हिक्का च हरतः प्राणमाशु वै २८
श्वासहिक्कातुरं प्रायः स्निग्धैः स्वेदैरुपाचरेत्
युक्तैर्लवणतैलाभ्यां तैरस्य ग्रन्थितः कफः २९
श्वासो विलयमायाति मारुतश्चोपशाम्यति
स्विन्नं ज्ञात्वा ततश्चैनं भोजयेच्च रसौदनम् ३०
स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम्
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ३१
प्रस्थं बिभीतकानामस्थि विना साधयेदजामूत्रे
अयमवलेहो लीढो मधुसहितः श्वासकासघ्नः ३२
देवदारुबलामांसीः पिष्ट्वा वर्त्तिं प्रकल्पयेत्
तां घृताक्तां पिबेद्धूमं श्वासं हन्ति सुदारुणम् ३३
दशमूलीशटीरास्नापिप्पलीविश्वपौष्करैः
शृङ्गीतामलकीभार्गीगुडूचीनागराग्निभिः ३४
यवागूं विधिना सिद्धां कषायं वा पिबेन्नरः
श्वासहृद्ग्रहपार्श्वार्त्तिहिक्काकासप्रशान्तये ३५
दशमूलस्य वा क्वाथः षौष्करेणावचूर्णितः

श्वासकासप्रशमनः पार्श्वशूलनिवारणः ३६
रम्भाकुन्दशिरीषाणां कुसुमं पिप्पलीयुतम्
पिष्ट्वा तराडुलतोयेन पीत्वा श्वासमपोहति ३७
शृङ्गीमहौषधकणाघनपौष्कराणां चूर्णं शटीमरिचयोश्च सिताविमिश्रम्
क्वाथेन पीतममृतावृषपञ्चमूल्याः श्वासं त्र्यहेण विनिहन्ति हि घोररूपम् ३८
पञ्चमूली तु सामान्या पित्ते योज्या कनीयसी
महती मारुते देया सैव देया कफाधिके ३९
कूष्माराडकशिफाचूर्णं पीतं कोष्णेन वारिणा
शीघ्रं शमयति श्वासं कासञ्चापि सुदारुणम् ४०
हरिद्रां मरिचं द्राक्षां कणां रास्नां शटीं गुडम्
कटुतैलं लिहन्हन्याच्छ्वासान् प्राणहरानपि ४१
शतं सङ्गृह्य भार्ग्यास्तु दशमूल्यास्तथा शतम्
शतं हरीतकीनाञ्च पचेत्तोये चतुर्गुणे ४२
पादावशेषे तस्मिंस्तु रसे वस्त्रनिपीडिते
आलोड्य च तुलां पूतां गुडस्य त्वभयास्ततः ४३
पुनः पचेत्तु मृद्वग्नौ यावल्लेहत्वमेति तत्
शीते च मधुनस्तत्र षट्पलानि विनिक्षिपेत् ४४
त्रिकटुं त्रिसुगन्धञ्च पलमात्रं पृथक् पृथक्
यवक्षारं कर्षयुग्मं सञ्चूर्ण्य प्रक्षिपेत्ततः ४५
भक्षयेदभयामेकां लेहस्यार्द्धपलं तथा
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा ४६
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा
स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपनः
नाम्ना भार्गीगुडः ख्यातो भिषग्भिः सकलैर्मतः ४७
अष्टाङ्गचूर्णसंयुक्तं छागक्षीरं प्रयोजयेत्
श्वासं कासान्वितं घोरं हन्यादेतन्न संशयः ४८
दशमूलरसो देयः श्वासनिर्मूलशान्तये
अवश्यंमरणीयो यो जीवेद्वर्षशतं नरः४९
रसो गन्धो विषञ्चापि टङ्कणञ्च मनः शिला
एतानिकर्षमात्राणि मरिचं चाष्टकर्षकम् ५०

कटुत्रयं कर्षयुग्मं पृथगत्र विनिक्षिपेत्
रसः श्वासकुठारोऽय सर्वश्वासनिवारणः ५१
इति चतुर्दशः श्वासाधिकारः समाप्तः १४

पञ्चदशः स्वरभेदाधिकारः १५

अत्युच्चभाषणविषाध्ययनाभिघातसन्दुषणैः प्रकुपिताः पवनादयस्तु
स्त्रोतःसु ते स्वरवहेषु गताः प्रतिष्ठां हन्युः
स्वरं भवति चापि हि षड्विधः सः १
वातेन कृष्णनयनाननमूत्रवर्चा भिन्नं शनैर्वदति गर्दभवत्स्वरञ्च २
पित्तेन पीतनयनाननमूत्रवर्चा ब्रूयाद्गलेन स च दाहसमन्वितेन ३
ब्रूयात्कफेन सततं कफरुद्धकण्ठः स्वल्पं शनैर्वदति चापि दिवा विशेषात्४
सर्वात्मके भवति सर्वविकारसम्पत्तं चाप्यसाध्यमृषयः स्वरभेदमाहुः ५
धूम्येत वाक्क्षयकृते क्षयमाप्नुयाच्च स्यादेव चापि गतवाक्परिर्जनीयः ६
अन्तर्गलं स्वरमलक्ष्यपदं चिरेण मेदोऽन्वयाद्वदति दिग्धगलस्तृषार्त्तः ७
क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजातः
मेदस्विनः सर्वसमुद्भश्च स्वरामयो नैव स सिद्धिमेति ८
वातादिजनितश्वासकासघ्ना ये प्रकीर्त्तिताः
योगास्तानत्र युञ्जीत यथादोषं चिकित्सकः
वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम्
कफे सक्षारकटुकं क्षौद्रं कवल इष्यते
गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः
तेन निष्कृष्यते श्लेष्मा स्वरश्चाशु प्रसीदति
आद्ये कोष्णं जलं पेयं भुक्त्वा घृतरसौदनम्
क्षीराम्बुपानं पित्तोत्थे पिबेत्सर्पिरतन्द्रितः ९
पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम्
पिबेन्मूत्रेण मतिमान्कफजे स्वरसङ्क्षये १०
निदिग्धिकातुला ग्राह्या तदर्द्धं ग्रन्थिकस्य तु
तदर्द्धं चित्रकस्यापि दशमूलञ्च तत्समम् ११
जले द्रोणद्वये क्वाथ्यं गृह्णीयादाढकं ततः
पूते क्षिपेत्तदर्द्धन्तु पुराणस्य गुडस्य च १२

सर्वमेकत्र कृत्वा तु लेहवत्साधु साधयेत्
अष्टौ पलानि पिप्पल्यास्त्रिजातकपलं तथा १३
मरिचस्य पलं चैकं सर्वमेकत्र चूर्णितम्
मधुनः कुडवं दत्वा तदश्नीयाद्यथाऽनलम् १४
निदिग्धिकाऽवलेहोऽय भिषग्भिर्मुनिभिर्मतः
स्वरभेदहरो मुख्यः प्रतिश्यायहरस्तथा १५
कासश्वासाग्निमान्द्यादीन्गुल्ममेहगलामयान्
आनाहमूत्रकृच्छ्राणि हन्याद् ग्रन्थ्यर्बुदानिच १६
मृगनाभिः ससूक्ष्मैला लवङ्गकुसुमानि च
त्वक्क्षीरी चेति लेहोऽय मधुसर्पिः समायुतः
वाक्स्तम्भमुग्रंजयतिस्वरभ्रंशसमन्वितम् १७
ब्राह्मी वचाऽभया वासा पिप्पली मधुसंयुता
अस्य प्रयोगात्सप्ताहात्किन्नरैः सह गीयते १८
इति पञ्चदशः स्वरभेदाधिकारः १५

षोडशोऽरोचकाधिकारः १६
वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः
अरोचकाः स्युः परिहृष्टदन्तः कषायवक्त्रश्च मतोऽनिलेन १
कट्वम्लमुष्णं विरसञ्च पूति पित्तेन विद्याल्लवणञ्च वक्त्रम्
माधुर्यपैच्छिल्यगुरुत्वशैत्यस्निग्धत्वदौर्गन्ध्ययुतं कफेन २
अरोचकं शोकभयातिलोभक्रोधाद्यहृद्याशुचिगन्धजे स्यात्
स्वाभाविकञ्चास्यमथारुचिश्च त्रिदोषजे नैकरसं भवेच्च ३
हृच्छूलपीडनयुतं पवनेन पित्तात्तृड्दाहचोषबहुलं सकफप्रसेकम्
श्लेष्मात्मकं बहुरुजं बहुभिश्च विद्याद् वैगुण्यमोहजडताभिरथापरञ्च ४
प्रक्षिप्तन्तु मुखे चान्नं  यत्र नास्वाद्यते नरः
अरोचकः स विज्ञेयो भक्तद्वेषमतः शृणु ५
चिन्तयित्वा तु मनसा दृष्ट्वा स्पृष्ट्वा तु भोजनम्
द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते ६
कुपितस्य भयार्त्तस्य तथा भक्तविरोधिनः
यत्र नान्नेभवेच्छ्रद्धा सोऽभक्तच्छन्द उच्यते ७

भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम्
रोचनं दीपनं वह्नेर्जिह्वाकण्ठविशोधनम् ८
शृङ्गबेररसंवाऽपि मधुना सह योजयेत्
अरुचिश्वासकासघ्नं प्रतिश्यायकफापहम् ९
पक्वाम्लीका सिता शीतवारिणा वस्त्रगालिता
एलालवङ्गकर्पूरमरिचैरवधूलिता १०
पानकस्यास्य गण्डूषं धारयित्वा मुखे मुहुः
अरुचिं नाशयत्येव पित्तं प्रशमयेत्तथा ११
राजिकाजीरकौ भृष्टौ भृष्टं हिङ्गु सनागरम्
सैन्धवं दधि गोः सर्वं वस्त्रपूतं प्रकल्पयेत् १२
तावन्मात्रं क्षिपेत्तत्र यथा स्याद्रुचिरुत्तमा
तक्रमेतद्भवेत्सद्यो रोचनं वह्निवर्द्धनम् १३
सम्यगावर्त्तितं दुग्धं निबद्धं दधि माहिषम्
एकीकृत्य पटे घृष्टं शुभ्रशर्करया समम् १४
एलालवङ्गकर्पूरमरिचैश्च समन्वितम्
नाम्ना शिखरिणी कुर्याद्रुचिं सकलवल्लभाम् १५
द्वे पले दाडिमाम्लस्य खण्डं दद्यात्पलत्रयम्
त्रिसुगन्धि पलं चैकं चूर्णमेकत्र कारयेत् १६
तच्चूर्णं मात्रया भुक्तमरोचकहरं परम्
दीपनं पाचनं च स्यात् पीनसज्वरकासजित् १७
लवङ्गकङ्कोलमुशीरचन्दनं नतं सनीलोत्पलकृष्णजीरकम्
जलं सकृष्णागुरुभृङ्गकेशरं कणा च विश्वा नलदं सहेलया १८
तुषारजातीफलवंशरोचनाः सिताऽर्द्धभागाः सकलं विचूर्णितम्
सुरोचनं तर्पणमग्निदीपनं बलप्रदं वश्यतमं त्रिदोषजित् १९
उरोविबन्धं तमकं गलग्रहं सकासहिक्काऽरुचियक्ष्मपीनसम्
ग्रहण्यतीसारमुरःक्षतं नृणां तथा प्रमेहान्निखिलान्निहन्ति च २०
यवानी दाडिमं शुण्ठी तिन्तिडीकाम्लवेतसैः
बदराम्लञ्च कुर्वीत चतुःशाणमितानि च
सार्द्धद्विशाणं मरिचं पिप्पली दशशाणिका २१
त्वक्सौवर्चलधान्याकजीरकं द्विद्विशाणिकम्

चतुःषष्टिमितैः शाणैः शर्करामत्र योजयेत् २२
चूर्णितं सर्वमेकत्र यवानीखाराडवाभिधम्
चूर्णं जयेत्पाराडुरोगं हृद्रोगं ग्रहणीज्वरम् २३
छर्दिशोषातिसारांश्च प्लीहानाहविबद्धताम्
अरुचिं शूलमन्दाग्निमर्शोजिह्वागलामयान् २४
इति षोडशोऽरोचकाधिकारः समाप्तः १६

अथ सप्तदशश्छर्द्यधिकारः १७

अतिद्रवैरतिस्निग्धै रहृद्यैर्लवणैरपि
अकाले चातिमात्रैश्च तथासात्म्यैश्च भोजनैः १
आमाद्भयात्तथोद्वेगाद जीर्णात्क्रिमिदोषतः
नार्याश्चापन्नसत्त्वाया स्तथाऽतिद्रुतमश्नतः
बीभत्सैर्हेतुभिश्चान्यैर्भुक्तमुत्क्लिश्यते बलात् २
दुष्टदोषैः पृथक्सर्वैर्विभत्सालोकनादिभिः
छर्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ३
हृल्लासोद्गारसंरोधौ प्रसेको लवणास्यता
द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम् ४
छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः
निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः ५
हृत्पार्श्वपीडामुखशोष शीर्षनाभ्यर्त्तिकासस्वरभेदतोदः
उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ६
कृच्छ्रेण चाल्पं महता च वेगेनार्त्तोऽनिलाच्छर्दयतीव दुःखम् ७
मूर्च्छापिपासामुखशोष मूर्द्धताल्वक्षिसन्तापतमोभ्रमार्त्तः
पीतं भृशोष्णं हरितञ्च तिक्तं धूम्रञ्च पित्तेन वमेत्सदाहम् ८
तन्द्राऽस्यमाधुर्यकफप्रसेक सन्तोषनिद्राऽरुचिगौरवार्त्तः
स्निग्धं घनं स्वादु कफाद्धि शुक्लं सलोमहर्षोऽल्परुजं वमेत्तु ९
असात्म्यजा च कम्जाऽमजा च बीभत्सजा दौर्हृदजा च या हि
सा पञ्चमी ताञ्च विभावयेच्च दोषोच्छ्रयेणैव यथोक्तमादौ ११
शूलहृल्लासबहुला कृमिजा च विशेषतः
कृमिहृद्रोगतुल्येन लक्षणेन च लक्षिता १२

कासः श्वासो ज्वरस्तृष्णाहिक्कावैचित्त्यमेव च
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्देरुपद्रवाः१३
क्षीणस्य या छर्दिरतिप्रसक्ता सोपद्रवा शोणितपूययुक्ता
सचन्द्रिकां तां प्रवदन्त्यसाध्यां साध्यां चिकित्सेन्निरुपद्रवां च १४
आमाशयोत्क्लेशभवा हि सर्वाश्छर्द्यो मता लङ्घनमेव तस्मात्
विधीयते मारुतजां विना तु संशोधनं वा कफपित्तहारि १५
हन्यात्क्षीरोदकं पीतं छर्दिं पवनसम्भवाम्
मुद्गामलकयूषो वा ससर्पिष्कः स सैन्धवः १६
गुडूचीत्रिफलानिम्बपटोलैः क्वथितं जलम्
पिबेन्मधुयुतं तेन छर्दिर्नश्यति पित्तजा १७
हरीतकीनां चूर्णन्तुलिह्यान्माक्षिकसंयुतम्
अधोमार्गीकृते दोषे छर्दिः शीघ्रं निवर्त्तते १८
विडङ्गत्रिफलाविश्वा चूर्णं मधुयुतं जयेत्
विडङ्गप्लवशुण्ठीनां चूर्णं वा कफजां वमिम् १९
पिष्ट्वा धात्रीफलं लाजाञ्छर्कराञ्च पलोन्मिताम्
दत्वा मधुपलञ्चापि कुडवं सलिलस्य च
वाससा गालितं पीतं हन्ति च्छर्दिं त्रिदोषजाम् २०
गुडूच्या रचितं हन्ति हिमं मधु समन्वितम्
दुर्निवारामपि च्छर्दिं त्रिदोषजनितां बलात् २१
एलालवङ्गगजकेशरकोलमज्जालाजाप्रियङ्गुघनचन्दनपिप्पलीनाम्
चूर्णानि माक्षिकसितासहितानि लीढ्वा छर्दिं
निहन्ति कफमारुतपित्तजाताम् २२
अश्वत्थवल्कलं शुष्कं दग्धं निर्वापितं जले
तज्जलं पानमात्रेण छर्दिं जयति दुर्जयाम् २३
पथ्यात्रिकटुधान्याक जीरकाणां रजो लिहन्
मधुना नाशयेच्छर्दिमरुचिञ्च त्रिदोषजाम् २४
बिल्वत्वचो गुडूच्या वा क्वाथः क्षौद्रेण संयुतः
छर्दिं त्रिदोषजां हन्ति पर्पटः पित्तजां तथा २५
आम्रास्थिबिल्वनिर्यूहः पीतः समधुशर्करः
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् २६

जम्ब्वाम्रपल्लवशृतं लाजरजः संयुतं शीतम्
शमयति मधुना युक्तं वमिमतिसारं तृषामुग्राम् २७
बीभत्सजां हृद्यतमैरिष्टैर्दौर्हृदजां फलैः
लङ्घनैरामजां छर्दिं जयेत्सात्म्यैरसात्म्यजाम् २८
कृमिहृद्रोगवद्धन्याच्छर्दिं कृमिसमुद्भवाम्
तत्र तत्र यथादोषं क्रियां कुर्याच्चिकित्सकः २९
सोद्गारायां भृशं छर्द्यां मूर्वाया धान्यमुस्तयोः
समधुकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ३०
सौवर्चलमजाजी च शर्करा मरिचानि च
क्षौद्रेण सहितं लीढं सद्यश्छर्दिनिवारणम् ३१
इति सप्तदशश्छर्द्यधिकारः सम्पूर्णः १७

अष्टादशस्तृष्णाऽधिकारः १८

भयश्रमाभ्यां बलसङ्क्षयाद्वाऽप्यूर्ध्वं चितं पित्तविवर्द्धनैश्च
पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम् १
स्त्रोतःस्वपां वाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः
तिस्त्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथाऽन्याऽमसमुद्भवा च
भक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्वशस्तु २
ताल्वोष्ठकण्ठास्यविशोषदाहाः सन्तापमोहभ्रमविप्रलापाः
सर्वाणि रूपाणि भवन्ति तस्यामुत्पत्तिकाले तु विशेषतो हि ३
क्षामास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरःसु चापि
स्त्रोतोनिरोधो विरसश्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति ४
मूर्च्छाऽन्नविद्वेषविलापदाहा रक्तेक्षणत्वं प्रततश्च शोषः
शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां परिधूपनञ्च ५
वाष्पावरोधात् कफसंवृतेऽग्नौ तृष्णा बलासेन भवेन्नरस्य
निद्रा गुरुत्वं मधुरास्यता च तयाऽदितः शुष्यति चातिमात्रम् ६
क्षतस्य रुक्छोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु ७
रसक्षयाद्या क्षयसम्भवा सा तयाऽभिभूतस्तु निशादिनेषु
पेपीयतेऽम्भ स सुखं न याति तां सन्निपातादिति केचिदाहुः
रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत् ८

त्रिदोषलिङ्गाऽमसमुद्भवा च हृच्छूलनिष्ठीवनसादकर्त्री ९
स्निग्धं तथाऽम्ल लवणञ्च भुक्तं गुर्वन्नमेवाशु तृषां करोति १०
दीनस्वरः प्रताम्यन्दीनाननहृदयशुष्कगलतालुः
भवति खलु सोपसर्गा तृष्णा सा शोषिणी कष्टा ११
ज्वरमोहक्षयकासश्वासाद्युप सृष्टदेहानाम्
सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम्
घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः १२
वातघ्नमन्नपानं मृदु लघु शीतञ्च वाततृष्णायाम् १३
तृष्णायां पवनोत्थायां सगुडं दधि शस्यते
स्वादु तिक्तं द्रवं शीतं पित्ततृष्णाऽपहं परम् १४
मुस्तपर्पटकोदीच्यच्छत्राख्यो शीरचन्दनैः
शृतं शीतं जलं दद्यात्तृड्दाहज्वरशान्तये १५
लाजोदकं मधुयुतं शीतं गुडविमर्दितम्
काश्मरीशर्करायुक्तं पिबेत्तृष्णाऽदितो नरः १६
आस्तरणमार्द्रवासः प्रावरणं चार्द्रवासः स्यात्
तेन पिपासा शाम्यति दाहश्चोग्रोऽपि देहिनां नियतम् १७
गोस्तनीक्षुरसक्षीरयष्टी मधुमधूत्पलैः
नियतं नासिकापीते तृष्णा शाम्यति दारुणा १८
वैशद्यं जनयत्यास्ये सन्दधाति मुखे जलम्
तृष्णादाहप्रशमनं मधुगण्डूषधारणम् १९
जिह्वातालुगलक्लोमशोषे मूर्ध्नि निधापयेत्
केशरं मातुलुङ्गस्य घृतसैन्धवसंयुतम् २०
दाडिमं बदरं लोध्रं कपित्थं बीजपूरकम्
पिष्ट्वा मूर्द्धनि लेपस्तु पिपासादाहनाशनः २१
वारि शीतं मधुयुतमाकण्ठाद्वा पिपासितम्
पाययेद्वामयेच्चाथ तेन तृष्णा प्रशाम्यति २२
प्रातः शर्करयोपेतः क्वाथो धान्याकसम्भवः
जयेत्तृष्णां तथा दाहं भवेत्स्रोतोविशोधनम् २३
आमलं कमलं कुष्ठं लाजाश्च वटरोहकम्
एतच्चूर्णस्य मधुना गुटिकां धारयेन्मुखे

तृष्णां प्रवृद्धां हन्त्येषा मुखशोषञ्च दारुणम् २४
क्षतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः
क्षयोत्थितां क्षीरजलं निहन्यान्मांसोदकं वा मधुरोदकं वा २५
आमोद्भवां बिल्ववचायुतानां जयेत्कषायैरथ दीपनानाम्
गुर्वान्नजामुल्लिखनैर्जयेच्च क्षयं विना सर्वकृताञ्च तृष्णाम् २६
स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुडाम्बुना शमयेत्
अतिरोगदुर्बलानां तृष्णां शमयेन्नृणामिहाशु पयः २७
मूर्च्छाच्छर्दितृषानाह स्त्रीमद्यभृशकर्षिताः
पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये २८
सात्म्यान्नपानभेषज्यैस्तृष्णां तस्य जयेत्पुनः
तस्यां जितायामन्योऽपि व्याधिःशक्यश्चिकित्सितुम् २९
तृष्यन् पूर्वामयक्षीणो न लभेत जलं यदि
मरणं दीर्घरोगं वा प्राप्नुयात्त्वरितं नरः ३०
तृषितो मोहमायाति मोहात्प्राणान्विमुञ्चति
तस्मात्सर्वास्ववस्थासु न क्वचिद्वारि वारयेत् ३१
अन्नेनापि विना जन्तुः प्राणान्धारयते चिरम्
तोयाभावात्पिपासार्त्तः क्षणात्प्राणैर्विमुच्यते ३२
इत्यष्टादशस्तृष्णाऽधिकारः समाप्तः १८

अथैकोनविंशो मूर्च्छाभ्रमनिद्रातन्द्रासंन्यासाधिकारः १९

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः
वेगाघातादभीघाताद्धीनसत्त्वस्य वा पुनः १
करणायतनेषूग्रो बाह्येष्वाभ्यन्तरेषु च
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः २
संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ३
सुखदुःव्यपोहाच्च नरः पतति काष्ठवत्
मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्त्तिता ४
वातादिभिः शोणितेन मद्येन च विषेण च
षट्स्वप्येतासु पित्तन्तु प्रभुत्वेनावतिष्ठते ५

हृत्पीडा जृम्भणं ग्लानिः संज्ञानाशो बलक्षयः
सर्वासां पूर्वरूपाणि यथास्वं तां विभावयेत् ६
नीलं वा यदि वा कृष्णमाकाशमथ वाऽरुणम्
पश्यंस्तमः प्रविशति शीघ्रञ्च प्रतिबुध्यते ७
वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च
कार्श्यं श्यावारुणा च्छाया मूर्च्छाये वातसम्भवे ८
रक्तं हरितवर्णं वा वियत्पीतमथापि वा
पश्यंस्तमः प्रविशति सस्वेदः प्रतिबुध्यते ९
सपिपासः ससन्तापो रक्तपीताकुलेक्षणः
सम्भिन्नवर्चाः पीताभो मूर्च्छाये पित्तसम्भवे १०
मेघसङ्काशमाकाशं तमोभिर्वा घनैर्वृतम्
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ११
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा
सप्रसेकःसहृल्लासो मूर्च्छाये कफसम्भवे १२
सर्वाकृतिः सन्निपातादपस्मार इवागतः
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः १३
पृथिव्यम्भस्तमोरूपं रक्तगन्धस्तदन्वयः
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः
द्रव्यस्वभावमित्येके दृष्ट्वा यदभिमुह्यति १४
स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः १५
गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः
त एव तस्मात्ताभ्यान्तु मोहौ स्यातां यथेरितौ १६
मद्येन प्रलपञ्छेते नष्टविभ्रान्तमानसः
गात्राणि विक्षिपन्भूमौ जरां यावन्न याति तत् १७
वेपथुस्वप्नतृष्णाः स्युस्तमश्च विषमूर्च्छिते
वेदितव्यं तीव्रतरं ययास्वं विषलक्षणैः १८
मूर्च्छा पित्ततमःप्राया रजःपित्तानिलाद् भ्रमः
तमोवातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा १९
इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः
निद्राऽत्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् २०

योऽनायासः श्रमो देहे प्रवृद्धः श्वाससङ्गतः
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः २१
यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः
विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः २२
वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः
संन्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः २३
स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यः फलां क्रियाम् २४
दोषेषु मदमूर्च्छाया  गतवेगेषु देहिनः
स्वयमप्युपशाम्यन्ति संन्यासो नौषधैर्विना २५
सेकावगाहा मणयःसहाराः शीताः प्रदेहा व्यजनानिलाश्च
शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि २६
सिद्धानिवर्गे मधुरे पयांसि सदाडिमा जाङ्गलजा रसाश्च
तथा यवो लोहितशालयश्च मूर्च्छासु पथ्याः ससतीनमुद्राः २७
कोलमज्ञोषणोशीरकेसरं शीतवारिणा
पीतं मूर्च्छां जयेल्लीढ्वा कृष्णां वा मधुसंयुताम् २८
शीतेन तोयेन बिसं मृणालं कृष्णां च पथ्यां मधुनाऽवलिह्यात्
कुर्याच्च नासावदनावरोधं क्षीरं पिबेद्वाऽप्यथ मानुषीणाम् २९
द्राक्षासितादाडिमलाजवन्ति कह्लारनीलोत्पलपद्मवन्ति
पिबेत्कषायाणि च शीतलानि पिबेज्ज्वरं यानि शमं नयन्ति ३०
शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः
अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः ३१
अञ्जनं सम्यगारब्धं मधुसिन्धुशिलोषणैः
प्रमोहद्रोहि भवति भाषितं भिषजां वरैः ३२
मधूकसारसिन्धूत्थवचोषणकणाः समाः
श्लक्ष्णं पिष्ट्वाऽम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम् ३३
रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः
मद्यजायां पिवेन्मद्यं निद्रां सेवेत वा सुखम्
विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ३४
प्रभूतदोषस्तमसोऽतिरेकात्सम्मूर्छितो नैव विबुध्यते यः

संन्यस्तसंज्ञः स हि दुश्चिकित्स्यो नरो भिषग्भिः परिकीर्तितोऽसौ ३५
अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च
सूचीभिस्तोदनं शस्तं दाहः पीडा नखान्तरे ३६
लुञ्चनं केशलोम्नाञ्च दन्तैर्दशनमेव च
आत्मगुप्ताऽवघर्षश्च हितस्तस्य प्रबोधने ३७
कणामधुयुतं सूतं मूर्च्छायां प्राशयेद्भिषक्
शीतसेकावगाहादीन्सर्वाङ्गे पीडनं हठात् ३८
ताम्रचूर्णसमोशीरं केशरं शीतवारिणा
पीतं मूर्च्छां द्रुतं हन्याद् वृत्रमिन्द्राशनिर्यथा ३९
पिबेद् दुरालभाक्वाथं सघृतं भ्रमशान्तये
पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा ४०
ताम्रं दुरालभाक्वाथः पीतन्तु घृतसंयुतम्
निवारयेद् भ्रमं शीघ्रं तं यथा शम्भुभाषितम् ४१
तुरङ्गलालालवणोत्तमेन्दुमनः शिलामागधिकामधूनि ४२
नियोज्य तान्यद्दिण विमिश्रितानि तन्द्रां सनिद्रां विनिवारयन्ति ४३
सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठमेव च
बस्तमूत्रेण सम्पिष्टं नस्यं तन्द्रानिवारणम् ४४
शुराठीकणोग्रालवणोत्तमानि नस्येन तन्द्राविजयोल्वणानि
ज्ञुद्राऽमृतापौष्करनागराणि भार्गीशिवाभ्यां क्वथितानि पानात् ४५
इत्येकोनविंशो मूर्च्छाभ्रमनिद्रातन्द्रासन्यासाधिकारः समाप्तः १९

## अथ विंशो मदात्ययाधिकारः २०

मद्यं स्वभावतः प्राज्ञैर्यथैवान्नं तथा स्मृतम्
अयुक्तियुक्तं रोगाय युक्तियुक्तं रसायनम् १
प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून्
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् २
विधिना मात्रया काले हितैरन्नैर्यथाबलम्
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ३
अभ्यङ्गोत्सादनस्नानवासोधूपानुलेपनैः
स्निग्धोष्णैस्तादृशैरन्नैर्वातप्रकृतिकः पिबेत् ४

शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः
फलैरन्नैः सह नरः पित्तप्रकृतिकः पिबेत् ५
श्लैष्मिको जाङ्गलैर्मांसैर्मरिचैर्मदिरां पिबेत्
प्राक् पिबेच्छ्लैष्मिको मद्यं भुक्तस्योपरि पैत्तिकः ६
वातिकस्तु पिबेन्मध्ये समदोषो यथेच्छति
वातिकस्तु पिबेन्मद्यं प्रायो गौडिकपैष्टिकम् ७
कफपित्तात्मको यस्तु माध्वीकं माधवं पिबेत्
विधिर्वसुमतामेष कथितश्चरकादिभिः
यथोपपत्तिकं वाऽपि पिबेन्मद्यं हि मात्रया ८
रसवातादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम्
प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते ९
मद्यं हृदयमाविश्य स्वगुणैरोजसो गुणान्
दशभिर्दश सङ्क्षोभ्य चेतो नयति विक्रियाम् १०
लघूष्णतीक्ष्णसूक्ष्माम्लव्यवाय्याशुकरं तथा
रुक्षं विकासि विशदं मद्यं दशगुणं स्मृतम् ११
गुरु शीतं मृदु स्निग्धं सान्द्रं स्वादु स्थिरं तथा
प्रसन्नं पिच्छिलं सूक्ष्ममोजो दशगुणं स्मृतम् १२
गौरवं लाघवाच्छैत्यमौष्ण्यादम्लस्वभावतः
माधुर्यं मार्दवं तैक्ष्ण्यात्प्रसादञ्चाशु भावनात् १३
रौक्ष्यात्स्नेहं व्यवायित्वात् स्थिरत्वं सूक्ष्मतामपि
विकासिभावात्पैच्छिल्यं वैशद्यात्सान्द्रतां तथा १४
सौक्ष्म्यान्मद्यं निहन्त्येवमोजसः स्वगुणैर्गुणान्
सत्त्वं तदाश्रयं चाशु सङ्क्षोभ्यकुरुते मदम् १५
हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम् १६
विकाराश्च यथासत्त्वं चित्रा राजसतामसाः
जायन्ते मोहनिद्रान्ता इत्येतन्मदलक्षणम् १७
हर्षमोजो बलं पुष्टिमारोग्यं पौरुषं तथा
युक्त्या पीतं करोत्याशु मद्यं मदसुखप्रदम् १८
रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम्
प्रीणनं बृंहणं बल्यं भयशोकश्रमापहम् १९

स्वापनं नष्टनिद्राणां मूकानां वाग्विशोधनम्
नाशनं चातिनिद्राणां विबन्धानां विबन्धनुत् २०
वधबन्धपरिक्लेशदुःखानां चाप्यबोधनम्
अपि प्रवयसां मद्यमुत्सर्गान्मोदकारकम् २१
बहुदुःखक्षतस्यास्य शोकैरुपहतस्य च
विश्रामो जीवलोकस्य मद्यं युक्त्या निषेवितम् २२
बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्द्धनश्च
सम्पाठगीतस्वरवर्द्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि २३
अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाऽकृतिरप्रशान्तः
आलस्यनिद्राऽभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन २४
गच्छेदगम्यां न गुरुंश्च मन्येत्खादेदभक्ष्याणि च नष्टसञ्ज्ञः
ब्रूयाच्च गुह्यानि हृदि स्थितानिमदे तृतीये पुरुषोऽस्वतन्त्रः २५
चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः
कार्याकार्यविभागज्ञो मृतादपि परो मृतः २६
को मदं तादृशं गच्छेदुन्मादमिव चापरम्
बहुदोषमिवामूढः कान्तारं स्ववशः कृती २७
नातिमाद्यन्ति बलिनः कृताहारा महाशनाः
स्निग्धाः सत्त्ववयोयुक्ता मद्यनित्यास्तदन्वयाः २८
मेदःकफाधिका मन्दवातपित्तं दृढाग्नयः
विपर्ययेऽतिमाद्यन्ति विष्टब्धाः कुपिताश्च ये
मद्येन चाम्लरुक्षेण साजीर्णे बहुनाऽपि च २९
विषस्य ये गुणा दृष्टा सन्निपातप्रकोपणाः
त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः ३०
तस्मादविधिपीतेन तथा मात्राऽधिकेन च
युक्तेन चाहितैरन्नैरकालेसेवितेन च ३१
मद्येन खलु जायन्ते मदात्ययमुखा गदाः ३२
निर्भुक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम्
उत्पादयेत्कष्टतमान्विकारानुत्पादयेच्चापि शरीरभेदम् ३३
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ३४

अत्यम्लरुक्षावततोदरेण साजीर्णभुक्तेन तथाऽबलेन
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान् ३५
मद्योत्पन्नविकारान् विवृणोति
पानात्ययं परमदं पानाजीर्णमथापि च
पानविभ्रममत्युग्रं तेषां वक्ष्यामि लक्षणम् ३६
शरीरदुःखं बलवत्प्रमोहो हृदयव्यथा
अरुचिः प्रततं तृष्णा ज्वरः शीतोष्णलक्षणः ३७
शिरःपार्श्वास्थिसन्धीनां वेदना विद्यते यथा
जायतेऽतिबला जृम्भा स्फुरणं वेपनं श्रमः ३८
उरोविबन्धः कासश्च हिक्का श्वासः प्रजागरः
शरीरकम्पः कर्णाक्षिमुखरोगस्त्रिकग्रहः ३९
छर्दिर्विड्भेद उत्क्लेशो वातपित्तकफात्मकः
भ्रमः प्रलापो रूपाणामसताञ्चैव दर्शनम् ४०
तृणभस्मलतापर्णपांशुभिश्चावपूरणम्
प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते ४१
व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च
मदात्ययस्य रूपाणि सर्वाण्येतानि लक्षयेत् ४२
स्त्रीशोकभयभाराध्वकर्मभिर्योऽतिकर्षितः
रुक्षाल्पप्रमिताशी च यः पिवत्यतिमात्रया ४३
रूक्षं परिणतं मद्यं निशि निद्रां निहत्य च
करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम् ४४
हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः
विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ४५
तीक्ष्णोष्णमद्यमम्लं च योऽतिमात्रं निषेवते
अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽज्ञानवान्नरः
तस्योपजायते तीव्रः पित्तप्रायो मदात्ययः ४६
तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ४७
मधुरस्निग्धगुर्वाशी यः पिबत्यतिमात्रया ४८
अव्यायामदिवास्वप्नशय्यासनसुखे रतः

मदात्ययं कफप्रायं स नरो लभते ध्रुवम् ४९
छर्द्यरोचकहृंल्लासतन्द्रास्तैमित्यगौरवैः
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ५०
त्रिदोषो हेतुभिः सर्वैः सर्वैर्लिङ्गैर्मदात्ययः ५१
श्लेष्मक्षयोऽङ्गगुरुता विरसास्यता च विरमूत्रसक्तिरथ तन्द्रिररोचकश्च
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञास्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः
५२
आध्मानमुग्रमथवोद्गिरणं विदाहः पाने त्वजीर्णमुपगच्छति लक्षणानि
ज्ञेयानि तत्र भिषजा सुविनिश्चितानि पित्तप्रकोपजनितानि च कारणानि ५३
हृद्गात्रतोदकफसंस्त्रवकराठधूम मूर्च्छावमीमदशिरोरुजनप्रदेहाः
द्वेषः सुराऽन्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेषु धीराः ५४
हीनोत्तरौष्ठमतिशीतममन्ददाहं तैलप्रभाऽस्यमपि पानहतं त्यजेच्च
जिह्वौष्ठदन्तमसितन्त्वथ वाऽपि नीलम्पीते च यस्य नयने रुधिरप्रभे च
हिक्का ज्वरो वमथुवेपथुपार्श्वशूलाः कासभ्रमावपि च पानहतं त्यजेत्तम् ५५
मद्योत्थानाञ्च रोगाणां मद्यमेव हि भेषजम्
यथा दहनदग्धानां दहनं स्वेदनं हितम् ५६
मिथ्याऽतिहीनमद्येन यो व्याधिरुपजायते
समेनैव निपीतेन मद्येन स हि शाम्यति ५७
बीजपूरकवृक्षाम्लकोलदाडिमसंयुतम्
यवानीहपुषाजाजी शृङ्गबेरावचूर्णितम् ५८
सस्नेहैः शक्तुभिर्युक्तमुपदंशैश्चिरोत्थितम्
दद्यात्सलवणं मद्यं वातपैत्तिकशान्तये ५९
मद्यं सौवर्चलव्योषयुक्तं किञ्चिज्जलान्वितम्
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ६०
चव्यं सौवर्चलं हिङ्गु पूरकं विश्वदीपकम्
चूर्णं मद्येन पातव्यं पानात्ययरुजाऽपहम् ६१
लावतित्तिरदक्षाणां रसैश्च शिखिनामपि
पक्षिणां मृगमत्स्यानामानूपानां तथौदनैः ६२
स्निग्धोष्णलवणाम्लैश्च वेशवारैर्मुखप्रियैः
स्निग्धैर्गोधूमकैरन्नैर्वातप्रायं मदात्ययम् ६३

नारीणां यौवनोष्माणां निर्दयैरुपगूहनैः
श्रोणयूरुकुचभारैश्च संरोधोष्णसुखप्रदैः ६४
शयनाच्छादनैरुष्णैश्चान्तर्गेहैः सुखप्रदैः
मारुतैः प्रबलैः शीघ्रं प्रशाम्यति मदात्ययः ६५
पित्तपानात्यये योज्याः सर्वतश्च क्रिया हिमाः
सितामाक्षिकसंयुक्तं मद्यमर्द्धोदकं पिबेत् ६६
मद्यं खर्जूरमृद्वीकापरूषकरसैर्युतम्
सदाडिमरसं शीतं शक्तुभिश्चावचूर्णितम् ६७
सशर्करं वा माध्वीकं संयुक्तमथ वा परम्
दद्याद्बहूदकं काले पातुं पित्तमदात्यये ६८
शशान्कपिञ्जलानेणांल्लावानसितपुच्छकान्
मधुराम्लान्प्रयुञ्जीत भोजने शालिषष्टिकान् ६९
पटोलयवमिश्रं वा छागलं कल्पयेद्रसम्
सतीनमुद्गमिश्रं वा दाडिमामलकान्वितम् ७०
द्राक्षाऽमलकखर्जूरपरूषकरसेन च
कल्पयेत्तर्पणान्यूषान् रसांश्च विविधात्मकान् ७१
शीतानि चान्नपानानि शीतशय्यासनानि च
शीतवातजलस्पर्शाः शीतान्युपवनानि च ७२
क्षौमपद्मोत्पलानाञ्च मणीनां मौक्तिकस्य च
चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाः ७३
रुक्षतर्पणसंयुक्तं यवानीव्योषसंयुतम्
यवगोधूमकञ्चान्नं रुक्षयूषेण भोजयेत् ७४
कुलत्थकानां शुष्काणां मूलकानां रसेन वा
प्रभूतकटुसंयुक्तं यवान्नं वा प्रदापयेत् ७५
छागमांसरसं रुक्षमम्लं वा जाङ्गलं रसम्
व्योषयूषं मनागम्लं पिबेत् कफमदात्यये ७६
स्थाल्यामथ कपाले वा भृष्टं कृत्वा तु नीरसम्
कट्वम्ललवणं मांसं खादेत्कफमदात्यये ७७
वामकद्रव्ययुक्तेन मद्येनोल्लेखनं मतम्
मदात्यये कफोद्भूते लङ्घनञ्च यथाबलम् ७८

यदिदं कर्म्मनिर्दिष्टं वातपित्तकफान्प्रति
सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सकैः ७९
सगुडः कूष्माण्डरसः शमयति मदमाशु कोद्रवजम्
धत्तूरजञ्च दुग्धं सशर्करं चाशु पानेन ८०
सच्छर्दिमूर्च्छाऽतीसारं मदं पूगफलोद्भवम्
सद्यः प्रशमयेत्पीतमातृप्तेर्वारि शीतलम् ८१
वन्यकरीषघ्राणाञ्जलपानाल्लवणभक्षणादपि च
शाम्यति पूगफलोद्भवमदः सशूलः सशर्कराकवलात् ८२
तत्क्षणान्मृदितं चूर्णं समाघ्रातं प्रणाशयेत्
ताम्बूलोत्थं मदं पुंसामेकमेव स्वभावतः ८३
जातीफलमदं शीघ्रं हन्ति पथ्या निषेविता
शीततोयावगाहश्च शर्करा दधियोजिता
बिभीतमदशान्त्यर्थमियमेव मता पुनः ८४
मद्यं पीत्वा यदि ना तत्क्षणमवलेढि शर्करां सघृताम्
जातु न मदयति मद्यं मनागपि प्रथितवीर्यमपि ८५
इति विंशो मदात्ययाधिकारः समाप्तः २०

अथैकविंशो दाहाधिकारः २१

पित्तज्वरसमः पित्ताद् दाहः स्यात्तस्य संक्रमः १
कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ध्रुवम्
सन्धूप्यते चोष्यते च ताम्राभस्ताम्रलोचनः
लोहगन्धाङ्गवदनो वह्निनेवावकीर्यते २
असृजा पूर्णकोष्ठस्य दाहोऽन्य स्यात्सुदुस्तरः ३
त्वचं प्राप्तः स पानोष्मा पित्तरक्ताभिमूर्च्छितः
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ४
तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम्
स बाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः
संशुष्कगलताल्वोष्ठो जिह्वां निष्काश्य वेपते ५
धातुक्षयोत्थो यो दाहस्तत्र मूर्च्छातृषाऽन्वितः
क्षामस्वरः क्रियाहीनः स सीदेद् भृशपीडितः ६

मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः ७
सर्व एव च वर्ज्याः स्युः शीतगात्रस्य देहिनः ८
शतधौतघृताभ्यक्तं लेपं वा यवशक्तुभिः
कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान् ९
छादयेत्तस्य सर्वाङ्गमारनालार्द्रवाससा
लामञ्जकेन युक्तेन चन्दनेनानुलेपयेत्
चन्दनाम्वुकणास्यन्दितालवृन्तोपवीजनैः १०
सुप्याद् दाहार्दितोऽम्भोजकदलीदलसंस्तरे
परिषेकावगाहेषु व्यजनानाञ्च सेवने ११
शस्यते शिशिरं तोयं दाहतृष्णोपशान्तये
फलिनी लोध्रसेव्याम्बुहेमपत्रं कुटन्नटम्
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् १२
ह्रीबेरपद्मकोशीरचन्दनाम्बुजवारिणा
सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः १३
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः
नार्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः १४
पाययेत्कमलस्याम्भः शर्कराऽम्भ पयोऽपि च
क्षीरमिक्षुरसञ्चापि कारयेत्पित्तजिद्विधिम् १५
पटीरपर्पटोशीरनीर नीरदनीरजैः
मृणालमिसिधान्याकपद्मकामलकैः कृतः १६
अर्द्धशिष्टः सिताशीतः पीतः क्षौद्रसमन्वितः
क्वांथो व्यपोहयेद् दाहं नृणाञ्च परमोल्बणम् १७
तिलतैलं भवेत्प्रस्थं तत्षोडशगुणे शनैः
काञ्जिके विपचेत्तत्स्याद्दाहज्वरहरं परम् १८
इत्येकविंशोदाहाधिकारः समाप्तः २१

अथ द्वाविंश उन्मादाधिकारः २२

मदयन्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः
मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः १
स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्त्ति च २

विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्
उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमा च चेष्टा ३
एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः
मानसेन च दुःखेन स पञ्चविध उच्यते
विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजम् ४
तैरल्पसत्त्वस्य  मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य
स्त्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः ५
धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च
अबद्धवाक्यं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम् ६
रुक्षाल्पशीतान्नविरेकधातुक्ष योपवासैरनिलोऽतिवृद्धः
चिन्ताऽदिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ७
अस्थानहास्यस्मितनृत्यगीतवा गङ्गविक्षेपणरोदनानि
पारुष्यकार्श्यारुणवर्णताश्च जीर्णे बलञ्चानिलजस्य रूपम् ८
अजीर्णकट्वम्लविदाहशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम्
उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदाशु कुर्यात् ९
अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः
प्रच्छायशीतान्नजलाभिलाषा पीता च भा पित्तकृतस्य लिङ्गम् १०
सम्पूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्मणि सम्प्रवृद्धः
बुद्धिं स्मृतिञ्चाप्युपहन्ति चित्तं प्रमोहयन्सञ्जनयेद्विकारम् ११
वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा
छर्दिश्च लाला च बलञ्च भुक्ते नखादिशौक्ल्यञ्च कफात्मके स्यात् १२
यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स तु हेतुभिः स्यात्
सर्वाणि रूपाणि बिभर्त्ति तादृग्विरुद्धभैषज्यविधिर्विवर्ज्यः १३
चौरैर्नरेन्द्रपुरुषैररिभिस्तथाऽन्यैर्वित्रासितस्य धनबान्धवसंक्षयाद्वा
गाढं क्षते मनसि च प्रियया रिरंसोर्जायेत चोत्कटतरो मनसो विकारः १४
चित्रं ब्रवीति च मनोऽनुगतं विसंज्ञो गायत्यथो हसति रोदिति चातिमूढः
१५
रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः श्यावाननो विषकृते तु भवेत्परासुः १६
अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः
जागरूको ह्यसन्देहमुन्मादेन विनश्यति १७

अमत्तर्यवाग्विक्रमवीर्यचेष्टो ज्ञानादिविज्ञानबलादियुक्तः
प्रकोपकालो नियतश्च यस्य देवादिजन्मा मनसो विकारः १८
सन्तुष्टः शुचिरतिदिव्यमाल्यगन्धो निस्तन्द्रोऽप्यवितथसंस्कृतप्रभाषी
तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मरायो भवति नरः स देवजुष्टः १९
संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः
सन्तुष्टो भवति न चान्नपानजातैर्दुष्टात्मा भवति स देवशत्रुजुष्टः २०
हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः
नृत्यन्वै प्रहसति चारु चाल्पशब्दं गन्धर्वग्रहपरिपीडितो मनुष्यः २१
ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो द्रुतगतिरल्पवाक्सहिष्णुः
तेजस्वी वदति च किं ददामि कस्मै यो यक्षग्रहपरिपीडितो मनुष्यः २२
प्रेतानां स दिशति संस्तरेषु पिराडाञ् शान्तात्मा जलमपि चापसव्यवस्त्रः
मांसेप्सुस्तिलगुडपायसाभिलाषी तद्भक्तो भवति पितृग्रहाभिजुष्टः २३
यस्तूर्व्यां प्रसरति सर्पवत्कदाचित् सृक्किरायौ मुहुरपि जिह्वयाऽवलेढि
क्रोधालुर्घृतमधुदुग्धपायसेप्सुर्विज्ञेयः स खलु भुजङ्गमेन जुष्टः २४
मांसासृग्विविधसुराविकारलिप्सुर्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः
क्रोधालुर्विविधबलो निशाविहारी शौचद्विड् भवति स राक्षसैर्गृहीतः २५
देवविप्रगुरुद्वेषी वेदवेदाङ्गनिन्दकः
आत्मपीडाकरोऽहिंस्रो ब्रह्मराक्षससेवितः २६
उद्वस्त्रः कृशपरुषो विरुद्धभाषी दुर्गन्धो भृशमशुचिस्तथाऽतिलोलः
बह्वाशी विजनवनान्तरोपसेवी व्याचेष्टंस्त्रसति रुदन्पिशाचजुष्टः २७
स्थूलाक्षो द्रुतमटनः सफेनवामी निद्रालुः पतति च कम्पते च योऽति
यश्चाद्रिद्विरदनगादिविच्युतः स्यात्सोऽसाध्यो भवति तथा त्रयोदशेऽब्दे २८
देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि
गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ २९
पितरः कृष्णपक्षे च पञ्चम्यामपि चोरगाः
रक्षःपिशाचा रात्रौ च चतुर्दश्यां विशन्ति हि ३०
वातिके स्नेहपानं प्राग्विरेकः पित्तसम्भवे
कफजे वमनं कार्यं परो वस्त्यादिकः क्रम
यच्चोपद्रेक्ष्यते किञ्चिदपस्मारे चिकित्सितम्
उन्मादे तच्च कर्त्तव्यं सामान्याद् दोषदूष्ययोः ३१

जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा
रक्षेदुन्मादिनं यत्नात्सद्यः प्राणहरं हि तत् ३२
ब्राह्मीकूष्माण्डीफलषड्ग्रन्थाशङ्खपुष्पिकास्वरसाः
दृष्टा उन्मादहृतः पृथगेते कुष्ठमधुमिश्राः ३३
सिद्धार्थको हिङ्गु वचा करञ्जो देवदारु च
मञ्जिष्ठा त्रिफला श्वेता कटभी त्वक् कटुत्रयम् ३४
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्
बस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ३५
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा
अपस्मारविषोन्मादकृत्याऽलक्ष्मीज्वरापहम् ३६
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते
सर्पिरेतेन संसिद्धं सगोमूत्रं तदर्थकृत् ३७
ब्रूयादिष्टविनाशञ्च दर्शयेदद्भुतानि च
बद्धं सर्षपतैलाक्तं रक्षेदुत्तानमातपे ३८
कपिकच्छ्वाऽथ वा तप्तैर्लोहतैलजलैः स्पृशेत्
कशाभिस्ताडयेत्तं वा सुबद्धं विजने गृहे ३९
सर्पेणोद्धृतदंष्ट्रेण दशेत्सिंहैर्गजैश्च तम्
त्रासयेच्छस्त्रहस्तैश्च शत्रुभिस्तस्करैस्तथा ४०
अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम्
त्रासयेयुर्वधैरेनं तर्जयन्तो नृपाज्ञया ४१
देहदुःखभयेभ्यो हि यतः प्राणभयं भवेत्
ततस्तस्य शमं याति सर्वतो विप्लुतं मनः ४२
इष्टद्रव्यविनाशेन मनो यस्याभिहन्यते
तस्य तत्सदृशप्राप्त्या ज्ञात्वाऽश्वासैः शमं नयेत् ४३
त्र्यूषणं हिङ्गु लवणं वचा कटुकरोहिणी
शिरीषस्य करञ्जस्य बीजं गौराश्च सर्षपाः ४४
गोमूत्रपिष्टैरेभिस्तु वर्तिर्नेत्राञ्जने हिता
हन्त्युन्मादमपस्मारं तथा चातुर्थकं ज्वरम् ४५
कुष्ठाश्वगन्धे लवणाजमोदे द्वेजीरके त्रीणि कटूनि पाठा
मङ्गल्यपुष्पी च समान्यमूनि सर्वैः समानाञ्च वचां विचूर्ण्य ४६

ब्राह्मीरसेनाखिलमेव भाव्यं वारत्रयं शुष्कमिदं हि चूर्णम्
अन्नप्रमाणं मधुना घृतेन लिह्यान्नरः सप्त दिनानि चूर्णम् ४७
सारस्वतमिदं चूर्णं ब्रह्मणा निर्मितं पुरा
हिताय सर्वलोकानां दुर्मेधानां विचेतसाम् ४८
एतस्याभ्यासतः पुंसां बुद्धिर्मेधा धृतिः स्मृतिः
सम्पत्तिः कविताशक्तिः प्रवर्द्धेतोत्तरोत्तरम् ४९
विश्वाऽजमोदरजनीद्वयसैन्धवोग्रायष्ट्याह्वकुष्ठमगधोद्भवजीरकाणाम्
चूर्णं प्रभातसमये लिहतः ससर्पिर्वाग्देवता निवसति स्वयमेव वक्त्रे ५०
क्वाथे विचूर्णिते क्षिप्त्वा तत्षोडशगुणं जलम्
पादशेषं प्रकर्त्तव्यमेष क्वाथविधिः स्मृतः ५१
दशमूली तथा रास्ना वातारिस्त्रिवृता बला
मूर्वा शतावरी चेति क्वाथैस्तु कुडवैः पृथक् ५२
कृतैः क्वाथैर्घृतप्रस्थद्वयं मृद्वग्निना पचेत्
कल्कीकृतैर्वक्ष्यमाणद्रव्यैः सम्यक् पुनः पचेत् ५३
विशाला त्रिफला कौन्ती देवदार्वेलवालुकम्
स्थिराऽनन्ता रजन्यौ द्वे प्रियङ्गुः सारिवाद्वयम् ५४
नीलोत्पलैला मञ्जिष्ठा दन्ती दाडिमकेसरम्
विडङ्गं ह्यग्निपत्री च कुष्ठं चन्दनपद्मके ५५
तालीशपत्रं बृहती मालतीकुसुमं नवम्
अष्टाविंशतिभिः कल्कैरेतैः कर्षमितैः पृथक् ५६
चतुर्गुणं जलं दत्वा पिष्टैस्तद्विपचेद् घृतम्
महाचैतसनामेदं सर्वचेतोविकारनुत् ५७
अपस्मारे महोन्मादे मन्देऽग्नौ ज्वरकासयोः
वातरक्ते प्रतिश्याये शोषे कार्श्ये तृतीयके ५८
मूत्रकृच्छ्रे कटीशूले विसर्पाभिहतेषु च
पाण्ड्वामये तथा कण्ड्वां विषे मेहे गरेऽपि च ५९
देवादिहतचित्तानां गद्गदानामचेतसाम्
शस्तं स्त्रीणाञ्च वन्ध्यानां धन्यमायुर्बलप्रदम् ६०
अलक्ष्मी पापरक्षोघ्नं सर्वग्रहनिवारणम्
हन्ति भ्रमं मदं मूर्च्छां मेधास्मृतिमतिप्रदम् ६१

पूजाबल्युपहारेष्टिहोममन्त्राञ्जनादिभिः
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक् ६२
कृष्णामरिचसिन्धूत्थमधुगोरोचनाकृतम्
अञ्जनं सर्वदेवादिकृतोन्मादहरं परम्६३
ऋक्षजम्बुकलोमानि शल्लकी लशुनं तथा
हिङ्गु मूत्रञ्च बस्तस्य धूममस्य प्रयोजयेत्
एतेन शाम्यति क्षिप्रं बलवानपि यो ग्रहः ६४
कल्याणकञ्च युञ्जीत महद् वा चैतसं घृतम्
तैलं नारायणं वाऽथ महानारायणं तथा ६५
ऋते पिशाचादन्येषु प्रतिकूलं न वाऽचरेत्
रोगिणंभिषजं यत्ते क्रुद्धा हन्युर्महौजसः ६६

इति द्वाविंश उन्मादाधिकारः समाप्तः २२

अथ त्रयोविंशोऽपस्माराधिकारः २३

चिन्ताशोकादिभिर्दोषाः क्रुद्धा हृत्स्रोतसि स्थिताः
कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्वते १
वातात्पित्तात्कफात्सर्वैर्दोषैः स स्याच्चतुर्विधः २
तमःप्रवेशः संरम्भो दोषोद्रेकहतस्मृतेः
अपस्मार इति ज्ञेयो गदो घोरतरो हि सः ३
हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता
निद्रानाशश्च तस्मिंश्च भविष्यति भवत्यथ ४
कम्पते प्रदशेद्दन्तान्फेनोद्वामी श्वसित्यपि
अभितोऽरुणवर्णानि पश्येद्रूपाणि चानिलात् ५
पीतफेनाङ्गवक्त्राक्षः पीतासृगूपदर्शनः
सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिके ६
शुक्लफेनाङ्गवक्त्राक्षः शीतो हृष्टाङ्गजो गुरुः
पश्येच्छुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ७
समस्तैर्लक्षणैरेतैर्वि ज्ञातव्यस्त्रिदोषजः
अपस्मारः स चासाध्यो यः क्षीणस्यानवश्च यः ८
प्रस्फुरन्तञ्च बहुशः क्षीणं प्रचलितभ्रुवम्
नेत्राभ्याञ्च विकुर्वाणमपस्मारो विनाशयेत् ९

पत्ताद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः
अपस्मारं प्रकुर्वन्ति वेगं किञ्चिदथान्तरम् १०
तैलेन लशुनः सेव्यः पयसा च शतावरी
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम् ११
चूर्णः सिद्धार्थकादीनां भत्तितैरथवाऽपि तैः
गोमूत्रपिष्टैः सर्वाङ्गलेपैः शाम्यत्यपस्मृतिः १२
सिद्धार्थशिग्रुकट्वङ्गकिरिहीभिः प्रलेपनम्
चतुर्गुरो गवां मूत्रे तैलमभ्यञ्जने हितम् १३
निर्गुराडीभववन्दाकनावनस्य प्रयोगतः
उपैति सहसा नाशमपस्मारो महागदः १४
मनोह्वा तार्द्यविष्ठा च शकृत्पारावतस्य च
अञ्जनाद्धन्त्यपस्मारमुन्मादञ्च विशेषतः १५
यः खादेत् त्तीरभक्ताशी माद्तिकेरा वचारजः
अपस्मारं महाघोरं चिरोत्थं स जयेद् ध्रुवम् १६
कूष्माराडकफलोत्थेन रसेन परिपेषितम्
अपस्मारविनाशाय यष्ट्याह्वं स पिबेत्त्र्यहम् १७
ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीशृतं घृतम्
पुराणं स्यादपस्मारोन्मादग्रहहरं परम् १८
कूष्माराडकरसे सर्पिरष्टादशगुरो पचेत्
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनम् १९
हृत्कम्पोऽद्तिरुजा यस्य स्वेदो हस्तादिशीतता
दशमूलीजलं तस्य कल्यारााख्यं प्रयोजयेत् २०
पञ्चकोलं समरिचं त्रिफला विडसैन्धवम्
कृष्णाविडङ्गपूतीकयवानीधान्यजीरकम्
पीतमुष्णाम्बुना चूर्णं वातश्लेष्मामयापहम् २१
अपस्मारे तथोन्मादेऽप्यर्शसां ग्रहणीगदे
एतत्कल्याराकं चूर्णं नष्टस्याग्नेश्च दीपनम् २२
द्वौ कीटमेढ्रौ विधिवदानीय रविवासरे
कराठे भुजे वा सन्धार्य जयेदुग्रामपस्मृतिम् २३
शिग्रुकुष्ठजलाजाजीलशुनव्योषहिङ्गुभिः

बस्तमूत्रे शृतं तैलं नावनं स्यादपस्मृतौ २४
उन्मादेषु यदुद्दिष्टं पथ्यं नस्याञ्जनौषधम्
अपस्मारेऽपि तत्सर्वं प्रयोक्तव्यं भिषग्वरैः २५
मृतसूताभ्रलोहञ्च शिलागन्धञ्च तालकम्
रसाञ्जनञ्च तुल्यांशं नरमूत्रेण मर्दयेत् २६
तद्गोलद्विगुणं गन्धं लौहपात्रे क्षणं पचेत्
पञ्चगुञ्जोन्मितं भक्ष्यमपस्मारहरं परम् २७
व्योषं सौवर्चलं हिङ्गु नरमूत्रेऽजसर्पिषा
पिबेत्कर्षमितं पश्चाद्रसोऽय भूतभैरवः २८

इति त्रयोविंशोऽपस्माराधिकारः समाप्तः २३

अथ चतुर्विंशो वातव्याध्यधिकारः २४

कषायकटुतिक्तकप्रमितरुक्षलघ्वन्नतः पुरः पवनजागरप्रतरणाभिघातश्रमैः
हिमादनशनात्तथा निधुवनाच्च
धातुक्षयान्मलादिरयधारणान्मदनशोकचिन्ताभयैः १
अतिक्षतजमोक्षणाद्गदकृतातिमांसक्षयादतीववमनान्नृणामति विरेचनादामतः
पयोदसमये दिनक्षण दयोस्तृतीयांश योर्ज रामति गतेऽशिते
शिशिरसञ्ज्ञकालेऽपिच २
देहेस्त्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली
करोति विविधान् रोगान्सर्वाङ्गैकाङ्गसंश्रयान् ३
शिरोग्रहोऽल्पकृशता जृम्भाऽत्यर्थं हनुग्रहः
जिह्वास्तम्भो गद्गदत्वं मिन्मिनत्वञ्च मूकता ४
वाचालता प्रलापञ्च रसानामनभिज्ञता
बाधिर्यं कर्णनादश्च स्पर्शाज्ञत्वं तथाऽदितम् ५
मन्यास्तम्भोऽत्र गणितो बाहुशोषोऽपबाहुकः
वर्णिता चैव विश्वाची ऊद्ध्र्ववात उदीरितः ६
आध्मानञ्च प्रत्याध्मानं वाताष्ठीला प्रतिष्ठीला
तूनी च प्रतितूनी च वह्निवैषम्यमेव च ७
आटोपः पार्श्वशूलञ्च त्रिकशूलं तथैव च
मुहुश्च मूत्रणं मूत्रनिग्रहो मलगाढता ८
पुरीषस्याप्रवृत्तिश्च गृध्रसी च ततः परा

कलायखञ्जता चापि खञ्जता पङ्गुता तथा ९
क्रोष्टुशीर्षकखल्ल्यौ च वातकराटक एव च
पादहर्षः पाददाह ग्राक्षेपो दराडकाभिधः १०
वातपित्तकृताक्षेपस्तथा दराडापतानकः
ग्रभिघातकृताक्षेप ग्रायामो द्विविधः स्मृतः ११
ग्रान्तरश्च तथा बाह्यो धनुर्वातश्च कुब्जकः
ग्रपतन्त्रोऽपतानश्च पक्षाघातः खिलाङ्गकः १२
कम्पः स्तम्भो व्यथा तोदो भेदश्च स्फुरणं तथा
रौक्ष्यं कार्श्यञ्च कार्ष्यर्यञ्च शैत्यं लोम्नश्च हर्षणम् १३
ग्रङ्गमर्दोऽङ्गविभ्रंशः शिरासंकोच एव च
ग्रङ्गशोषश्च भीरुत्वं मोहश्च चलचित्तता १४
निद्रानाशः स्वेदनाशो बलहानिस्तथैव च
शुक्रक्षयो रजोनाशो गर्भनाशः परिभ्रमः १५
एत एवाशीतिसंख्या रोगा योगेन रूढितः
वातव्याधीतिनामानो मुनिभिःपरिकीर्त्तिताः १६
मधुरलवणसाम्लस्निग्धस्योष्णनिद्रागुरुविकरवस्तिस्वेदसन्तर्पणानि
दहनजलदशोषाभ्यङ्गसम्मर्दनानि प्रकुपितपवनानां शान्तिमेतानिकुर्युः १७
ग्रथ विशिष्टानां वातव्याधीनां  लक्षणानि चिकित्सा च
रक्तमाश्रित्य पवनः कुर्यान्मूर्द्धधराः शिराः
रुक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः १८
शिरोग्रहे तु कर्त्तव्या शिरोगतमरुत्क्रिया
दशमूलीकषायेण मातुलुङ्गरसेन च
शृतेन तैलेनाभ्याङ्गः शिरोबस्तिश्च युज्यते १९
पीत्वैकं श्वासमनिलः पुनस्त्यजति वेगवान्
ग्रालस्यनिद्रायुक्तश्च स जृम्भ इति कथ्यते २०
शुराठी पिप्पल्यूषणं दीप्यकञ्च सिन्धूद्भूतं चेति सर्वे पृथग्वा
तद्रूपं वा सूक्ष्मचूर्णीकृतं वा जृम्भाऽरम्भस्तम्भकृत्स्यात्तदेव २१
जृम्भावेगे समुत्पन्ने शोभने  शयने नरम्
स्वापयेत्तेन नियमाज्जृम्भावेगः प्रशाम्यति २२
जृम्भावेगःक्षयं याति कटुतैलेन मर्दनात्

भोजनात्स्वादुभोज्यानां तथा ताम्बूलभक्षणात् २३
जिह्वानिर्लेखनाच्छुष्क भक्षणादभिघाततः
कुपितो हनुमूलस्थः स्रंसयित्वानिलो हनुम् २४
करोति विवृतास्यत्वमथ वा संवृतास्यताम्
हनुग्रहः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् २५
संवृतं चिबुकं स्निग्धं स्विन्नमुन्नमयेद्भिषक्
विवृतं नमयित्वा तु कुर्यात्प्राप्तामिह क्रियाम् २६
पिप्पलीमार्द्रकञ्चापि सञ्चर्व्य च मुहुर्मुहुः
निष्ठीवेत्तप्ततोयेन शोधयेद्वदनान्तरम् २७
निष्कुष्य लशुनं सम्यक्संक्षुद्य तिलतैलवत्
सैन्धवेनान्वितं खादेद्धनुस्तम्भार्दितो नरः २८
रसोनगुटिकामाषविदलं परिपेष्य च
याजयेत्पिष्टिकां ताञ्च सैन्धवार्द्रकहिङ्गुभिः २९
ततस्तु वटकान्कृत्वा तिलतैले पचेच्छनैः
भक्षयेत्तान्यथावह्निं हनुस्तम्भात्सुखी भवेत् ३०
अभ्यज्य पक्वतैलेन स्वेदयेन्मृदुनाग्नि
वस्तिं विधारयेन्मूर्ध्नि तैलेन परिपूरितम् ३१
समूलपत्रशाखायाः प्रसारण्याः शतं पलैः
सम्यक्संक्षुद्य सलिले द्रोणमात्रे पचेद्भिषक् ३२
सलिलस्य चतुर्थांशं क्वाथं समवशेषयेत्
ततः पलशते तैले तं कषायं पुनः पचेत् ३३
पचेत्पलशतं मस्तु काञ्जिकं मस्तुनः समम्
ततः शुद्धं पचेद् दुग्धं गव्यं तैलाच्चतुर्गुणम् ३४
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचा
शतपुष्पा देवदारु रास्ना च गजपिप्पली ३५
प्रसारणीभवं मूलं मांसी रक्तञ्च चन्दनम्
तथा वातारिमूलञ्च बलामूलञ्च नागरम् ३६
तैलस्य चाष्टमांशेन सर्वकल्कानि साधयेत्
नाम्ना प्रसारणीतैलं विख्यातं तत्प्रयुज्यते ३७
पाने नस्ये शिरोवस्तौ मर्दने स्वेदने तथा

प्रयुक्तं वातजान् रोगान्सर्वानपि विनाशयेत् ३८
विशेषतो हनुस्तम्भं जिह्वास्तम्भं तथाऽदितम्
गद्गदत्वञ्च विश्वाचीं मन्यास्तम्भापबाहुकौ ३९
त्रिकशूलं गृध्रसीञ्च खञ्जतां पङ्गुतां तथा
कलायखञ्जतां खल्लीं स्तम्भं सङ्कोचमेव च ४०
आन्तरं बाह्यमायामं तथा दराडापतानकम्
धनुर्वातञ्च कुब्जत्वं व्यपोहति न संशयः ४१
क्षीणानां स्थविराणाञ्च वातसङ्कोचितात्मनाम्
प्रसारयेद्यतोऽङ्गानि तदुक्तैषा प्रसारणी ४२
वाग्वाहिनीशिरासंस्थो जिह्वां स्तम्भयतेऽनिलः
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ४३
जिह्वास्तम्भे यथाऽवस्थं वातव्याधिचिकित्सितम्
सामान्योक्ता क्रिया चात्रार्दितस्यापि हिता मता ४४
आघृत्य वायुः सकफो धमनीः शब्दवाहिनीः
नरान्करोत्यवचनान्मूकमिन्मिनगद्गदान् ४५
अथ गद्गदमिन्मिनमूकानां चिकित्सा
प्रस्थं घृतस्य पलिकैः शिग्रुवचालवणधातकीलोध्रैः
आजे पयसि सपाठैः सिद्धं सारस्वतं नाम्ना ४६
विधिवदुपयुज्यमानं जडगद्गदमूकतां क्षणाज्जित्वा
स्मृतिमतिमेधाप्रतिभाः कुर्यात्सुस्पष्टवाग्भवति ४७
सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजम्
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम् ४८
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्
तच्चूर्णं सर्पिषा लेह्यं प्रत्यहं भक्षयेन्नरः ४९
एकविशंतिरात्रेण भवेच्छुतिधरो नरः
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः ५०
स्वहेतुकुपिताद्वातादसम्बद्धं निरर्थकम्
वचनं यन्नरो ब्रूते स प्रलापः प्रकीर्त्तितः ५१
सतगरवरतिक्तारेवताम्भोदतिक्तानलदतुरगगन्धा भारतीहारहूराः
मलयजदशमूलीशङ्खपुष्प्यः सुपक्वाः प्रलपनमपहन्युः पानतो नातिदूरात् ५२

भुञ्जानस्य नरस्यान्नं मधुरप्रभृतीन् रसान्
रसज्ञा यन्न जानाति रसाज्ञानं तदुच्यते ५३
घर्षेज्जिह्वां जडां सिन्धुत्र्यूषणैः साम्लवेतसैः
अम्लवेतसकाभावे चुक्रं दातव्यमीरितम् ५४
किराततिक्तका कट्वी कुटजस्य फलं त्वचा
ब्राह्मी फलञ्च पालाशं सर्जिका कृष्णजीरकम् ५५
पिप्पली पिप्पलीमूलं चित्रं नागरमूषणम्
एषां कल्कैर्मुहुर्घर्षेज्जिह्विकामार्द्रिकारसैः ५६
तेन सम्यग्विजानाति रसना सकलान् रसान्
कल्कः किराततिक्तादिर्जिह्वायाःशून्यतां हरेत् ५७
स्पृश्यमाना त्वचा या तु शीतोष्णं मृदु कर्कशम्
न जानाति बुधैस्त्वक् सा शून्येति परिकीर्त्तिता ५८
सुप्तवाते त्वसृङ्मोक्षं कारयेद् बहुशो भिषक्
दद्याच्च लवणाङ्गारधूमैस्तैलसमन्वितैः ५९
उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च
हसतो जृम्भतो भाराद्विषमाच्छयनासनात् ६०
शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः
अर्दयत्यनिलो वक्त्रमर्दितं जनयेत्ततः ६१
वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते
शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् ६२
ग्रीवाचिबुकदन्तानां तस्मिन्पार्श्वे च वेदना
तमर्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः ६३
वातात्पित्तात्कफाच्च स्यात्त्रिविधं तत्समासतः
लालास्त्रावो व्यथा कम्पः स्फुरणं हनुवाग्ग्रहः ६४
ओष्ठयोः श्वयथुः शूलं चार्दिते वातजे भवेत् ६५
पीतमास्यं ज्वरस्तृष्णापित्तजे मोहधूपने
गण्डे गिरसि मन्यायां शोथः स्तम्भः कफात्मके ६६
क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः
न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च ६७
स्नेहपानानि नस्यश्च भोज्यान्यनिलहन्ति च

उपनाहाश्च शस्यन्ते नावनं वस्तयोऽर्दिते ६८
बलया पञ्चमूल्या वा क्षीरं वातात्मके हितम्
दशमूलकषायेण मातुलुङ्गरसेन वा ६९
पिष्टं मांसघृतं जग्ध्वा नवनीतेन सोऽर्दिती
क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ७०
अर्दिते पित्तजे शीतान्स्नेहांश्चैव विनिर्दिशेत्
घृतवस्तिप्रसेकञ्च क्षीरमेकं तथैव च ७१
जिह्मीभूताननो मूको दाहवान्योऽर्दिती भवेत्
कुर्यात्प्रतिक्रियां तस्य वातपित्तविनाशिनीम् ७२
श्लेष्मभागे क्षयं नीते बृंहणैः समुपाचरेत्
अर्दिते शोथसंयुक्ते वमनं च प्रशस्यते ७३
रसोनकल्कं तिलतैलमिश्रं खादेन्नरो योऽर्दितरोगयुक्तः
तस्यार्दितं नाशमुपैति शीघ्रं वृन्दं घनानामिव वायुवेगात् ७४
दिवास्वप्नासनस्थानविकृतोर्ध्वनिरीक्षणैः
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणाऽऽवृतः ७५
दशमूलीकृतं क्वाथं पञ्चमूल्याऽपि कल्पितम्
रुक्षं स्वेदं तथा नस्यं मन्यास्तम्भे प्रयोजयेत् ७६
तैलेनाज्येन वा ग्रीवामभ्यज्यार्कदलैरथ
एरण्डपत्रैराच्छाद्य स्वेदयेद् बहुशो भिषक् ७७
कुक्कुटाण्डद्रवैरुष्णैः सैन्धवाज्यसमन्वितैः
ग्रीवां सम्मर्दयेत्तेन मन्यास्तम्भः प्रशाम्यति ७८
अंसदेशे स्थितो वायुः शोषयेदंसबन्धनम्
अंसबन्धनशोषात्स्याद् बाहुशोषः सवेदनः ७९
बाहुशोषे पिबेद् भुक्त्वा सर्पिः कल्याणकं महत्
बलामूलशृतं तोयं सैन्धवेन समन्वितम्
बाहुशोषकरे वाते मन्यास्तम्भे च शस्यते ८०
शिराः सङ्कोच्य बाहुस्थः स कुर्यादपबाहुकम् ८१
परमौषधमपबाहु कमन्यास्तम्भोर्ध्वजत्रुगतरोगे
शीतलजलेन नस्यं तदुपशमं जिङ्गिनी च पुरः ८२
मूलं बलायास्त्वथ पारिभद्रजं तथाऽऽत्मगुप्तास्वरसं पिबेद्वा

युञ्जीत यो माषरसेन नस्यं भवेदसौ वज्रसमानबाहुः ८३
माषातसीयवकुरराटककराटकारी गोकराटटुराटुकजटाकपिकच्छतोयैः
कार्पासकास्थिशराबीजकुलत्थकोलक्वाथेन बस्तपिशितस्य रसेन चापि ८४
शुराठ्या समागधिकया शतपुष्पया च सैरराडमूलकपुनर्नवया सरराया
रास्नाबलाऽमृतलताकटुकैर्विपक्वं माषाख्यमेतदपबाहुहरं हि तैलम् ८५
तलं प्रत्यङ्गुलीनां याः कराडरा बाहुपृष्ठतः
बाह्वोः कर्मक्षयकरी विश्वाची सा निगद्यते ८६
दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम्
सायं भुक्त्वा पिबेन्नस्यं विश्वाच्यामपबाहुके ८७
माषसिन्धुबलारास्ना दशमूलकहिङ्गुभिः
वचाशिवजटाऽख्याभिः सिद्धं तैलं सनागरम् ८८
ऊर्ध्वं भक्ताशनाद्धन्याद् बाहुशोषापबाहुकौ
विश्वाचीमुद्धतां चापि पक्षाघातं तथाऽदितम् ८९
अधःप्रतिहतो वायुः श्लेष्मणा मारुतेन च
करोत्युद्गारबाहुल्यमूर्ध्ववातः स उच्यते ९०
भागा दश विश्वायास्तत्तुल्या वृद्धदारकस्यापि
त्रय एव च पथ्यायाश्चतुरंशं हिङ्गु सम्भृष्टम् ९१
एकः सैन्धवभागस्तत्तुल्यं चित्रकं चात्र
संवृद्धमूर्ध्ववातं हन्त्येतच्चूर्णितं भुक्तम् ९२
साटोपमत्युग्ररुजमाध्मातमुदरं भृशम्
आध्मानमिति जानीयाद्धोरं वातनिरोधजम् ९३
आध्माने लङ्घनं पूर्वं दीपनं पाचनं ततः
फलवर्तिक्रियां कुर्याद्वस्तिकर्म च शोधनम् ९४
कर्षमात्रा भवेत्कृष्णा त्रिवृता स्यात्पलोन्मिता
खराडादपि पलं ग्राह्यं चूर्णमेकत्र कारयेत्
मधुनाऽक्षमितं लिह्याच्चूर्णमाध्माननाशनम् ९५
दारुहैमवतीकुष्ठशताह्वा हिङ्गुसैन्धवैः
लिम्पेदुष्णैरम्लपिष्टैः शूलाध्मानयुतोदरम् ९६
अभयाऽरग्वधो धात्री दन्ती तिक्ता स्नुही त्रिवृत्
मुस्ता प्रत्येकमेतानि ग्राह्याणि पलमात्रया ९७

एतदायोजितं सर्पिः पारूषकमिति स्मृतम्
वातरक्ते क्षते क्षीणे वीसर्पे पैत्तिके ज्वरे ९२
शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे
क्षीरतुल्यं घृतं सिद्धं वातशोणितनाशनम् ९३
ऋषभक्षीरकाकोलीक्षीरिकाजीवकैः समैः
सिद्धं त्वार्षभकं सर्पिः सक्षीरं वातरक्तनुत् ९४
गुडूचीक्वाथकल्काभ्यां सपयस्कं घृतं शृतम्
हन्ति वातं तथारक्तं कुष्ठं जयति दुस्तरम् ९५
क्षीरं स्नेहसमं दद्याच्चतुर्भिश्च चतुर्गुणम्
एकद्वित्रिद्रवद्रव्यैः कुर्यात्स्नेहाच्चतुर्गुणम् ९६
अमृतायाः कषायेण कल्केन च महौषधात्
मृद्वग्निना घृतं सिद्धं वातरक्तहरं परम् ९७
आमवाताढ्यवातादीन्कृमिकुष्ठव्रणानपि
अर्शांसि गुल्मांश्च तथा नाशयेदाशु योजितम् ९८
अमृतास्वरसविपक्वं सर्पिस्तत्कल्कसाधितं पीतम्
अपहरति वातरक्तमुत्तानं चावगाढं च ९९
अमृतायाः पलशतं जलद्रोणावशेषितम्
घृतप्रस्थं विपक्तव्यं कल्कादष्टौ पलानि च १००
चतुर्गुणेन पयसा वातासृक्कुष्ठनाशनम्
कामलापाण्डुरोगघ्नं प्लीहकासज्वरापहम् १०१
अमृता मधुकं द्राक्षा त्रिफला नागरं बला
वासारग्वधवृश्चीरदेवदारुत्रिकण्टकम् १०२
कटुका रोहिणी कृष्णा काश्मर्यस्य फलानि च
रास्नाक्षुरकगन्धर्ववृद्धदारघनोत्पलैः १०३
कल्कैरेभिः समैः कृत्वा सर्पिः प्रस्थं विपाचयेत्
धात्रीरसः समो देयो वारित्रिगुणसंयुतः १०४
सम्यक्सिद्धं च विज्ञाय भोज्ये पाने च शस्यते
बहुदोषोत्थितं वातरक्तेन सह मूर्च्छितम् १०५
उत्तानं चापि गम्भीरं त्रिकजङ्घोरुजानुकम्
क्रोष्टुशीर्षे महामूले आमवाते सुदारुणे १०६

दाहरोगोपसृष्टस्य वेदनां चातिदुस्तराम्
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमज्वरान् १०७
एतान्सर्वान्निहन्त्याशु वातपित्तकफोत्थितान्
सर्वकालोपयोगेन वर्णायुर्बलबर्द्धनम्
अश्विभ्यां निर्मितं श्रेष्ठं घृतमेतदनुत्तमम् १०८
गुडूचीस्वरसे सर्पिर्जीवनीयैश्च साधितम्
कल्कैश्चतुर्गुणैः क्षीरैः सिद्धं वाप्यस्रवातनुत् १०९
अमृतायाः शतं प्राप्य जलद्रोणे विपाचयेत्
चतुर्भागावशिष्टन्तु घृतप्रस्थं विपाचयेत् ११०
क्षीरं चतुर्गुणं तत्र दापयेन्मतिमान् भिषक्
कल्कञ्चात्र प्रवक्ष्यामि यथावदनुपूर्वशः १११
काकोली क्षीरकाकोली जीवकर्षभकौ च यत्
शतावरी पयस्या च मधुकं नीलमुत्पलम् ११२
अश्वकन्दस्य मूलानि स्थिरां वा कटुरोहिणीम्
ऋद्धिं वृद्धिं तथा मेदे श्वदंष्ट्रां बृहतीद्वयम्११३
गुडूचीं पिप्पलद्यं रास्नां वासकं चापि संहरेत्
तदेकस्थं समैर्भागैः पाचयेन्मृदुनाग्निना ११४
पानाभ्यञ्जननस्येषु परिषेके च दापयेत्
वातरक्तं सशोषाढ्यं सदाहं क्रोष्टुशीर्षकम् ११५
खञ्जोरुस्तम्भवातञ्च वातरक्तं सुदारुणम्
बहूदितं वातकृच्छ्रं गृध्रसीं वातकण्टकम् ११६
नाशयेद्योजितं सर्पिर्धन्वन्तरिवचो यथा ११७
क्वाथेन शतपुष्पायाः कुष्ठस्य मधुकस्य च
एकैकं साधयेत्तैलं वातरक्तरुजापहम् ११८
सारिवारिष्टकूष्माण्डपोतकीभस्मजाम्बुना
गुडूचीगव्यदुग्धाभ्यां कर्मरङ्गरसेन च ११९
विपचेत्तिलजं तैलं दत्वैतानि भिषग्वरः
काकोल्यौ जीवकं मेदे शताह्वाक्षीरिणीयुतैः १२०
जिङ्गीसिक्थामृतानन्तासर्जसैन्धवचन्दनैः
हन्याद्वातास्रजं घोरं स्फुटितं गलितं तथा १२१

चर्मदलाख्यं पामादींस्त्वग्दोषञ्च विपादिकाम्
कुष्ठान्यर्शांसि वीसर्प व्रणशोथं भगन्दरम् १२२
न सोस्ति वातरक्तस्य विकारो योभिवर्द्धितः
यं न हन्यात्प्रसह्यैतत्पिण्डतैलं महत्स्मृतम् १२३
सारिवासर्जमञ्जिष्ठायष्टीसिक्थैः पयोन्वितैः
तैलं पक्वं प्रयोक्तव्यं पिण्डाख्यं वातशोणिते १२४
सारिवासर्जयष्ट्याह्वमधुसिक्थैः पयोन्वितैः
सिद्धमेरण्डजं तैलं वातरक्तरुजापहम्
अपूतमथितस्यास्य पिण्डतैलस्य योगतः १२५
पद्मकेशरयष्ट्याह्वफेनिलैः पद्मकोत्पलैः
पृथक्पञ्चपलैर्दत्तं बलाकिंशुकचन्दनैः १२६
जले शृतं पचेत्तैलं प्रस्थं सौवीरसम्मितम्
लोध्रकाकोलिकोशीरजीवकर्षभकेशरैः १२७
मदयन्तिलतापत्रपद्मकेशरपद्मकैः
प्रपौण्डरीककालीयमेदामांसीप्रियङ्गुभिः १२८
कुङ्कुमैर्द्विगुणैः कर्षैर्मञ्जिष्ठायाः पलेन च
महापद्ममिदं तैलं वातासृग्ज्वरनाशनम् १२९
पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम् १३०
स्यात्पिष्टैः सर्जमञ्जिष्ठावीराकाकोलिचन्दनैः
खुड्डाकपद्मकमिदं तैलं वातास्रपित्तनुत् १३१
तुलां पचेज्जलद्रोणे गुडूच्याः पादशेषितम्
क्षीरद्रोणन्तु ताभ्यां च पचेत्तैलाढकं शनैः १३२
कल्कैर्मधुकमञ्जिष्ठाजीवनीयगणोत्थितैः
कुष्ठैलाऽगुरुमृद्वीका मांसी व्याघ्रनखं नखी १३३
हरेणुः श्रावणी व्योषं शताह्वा शृङ्गिसारिवे
त्वक्पत्रागुरुविक्रान्ताः स्थिरा तामलकी तथा १३४
नतकेशरह्रीबेरं पद्मकोत्पलचन्दनम्
सिद्धं कर्षसमैर्भागैः पानाभ्यङ्गानुवासनैः १३५
सेव्यं वातास्रजान्हन्ति स्रोतोधात्वन्तराश्रितान्
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत् १३६

स्वेदकगडूरुजाऽयामशिरः कम्पामयार्दितान्
हन्याद् ब्रगकृतान्दोषान्गुडूचीतैलमुत्तमम् १३७
गुडूची मधुकं ह्रस्वपञ्चमूलं पुनर्नवाम्
रास्नामेरगडमूलञ्च जीवनीयानि लाभतः १३८
पलानां शतिकैर्भागैर्बलापञ्चशतं भवेत्
कोलं बिल्वं यवान्माषान् कुलत्थांश्चाढकोन्मितान् १३९
काश्मर्यागाञ्च शुष्कागां द्रोगं द्रोगशतेऽम्भसः
साधयेज्जर्जरं पूतं चतुर्द्रोगञ्च शेषयेत् १४०
तैलद्रोगं पचेत्तेन दत्वा पञ्चगुगं पयः
पिष्ट्वा त्रिपलिकञ्चैव चन्दनोशीरकेशरम् १४१
पत्रैलाऽगुरुकुष्ठानि तगरं मधुयष्टिकाम्
मञ्जिष्ठाऽद्धपलञ्चैव तत्सिद्धं सर्वयौगिकम् १४२
वातरक्ते क्षते क्षीगे भारार्त्ते क्षीगरेतसि
वेपनोत्क्षिप्तभग्नानां सर्वैकाङ्गजरोगिगाम् १४३
योनिदोषमपस्मारमुन्मादं विषमज्वरम्
हन्यात्पुंसवनञ्चैव तैलाग्र्यममृताह्वयम् १४४
मृगालोत्पलशालूक सारिवोदीच्यकेशरैः
चन्दनद्वयभूनिम्ब पद्मबीजकसेरुकैः १४५
पटोलकटुकानन्ता गुन्द्रापर्पटवासकैः
पिष्ट्वा तैलं घृतं पक्वं तृगमूलरसेन वा १४६
क्षीरद्विगुगसंयुक्तं वस्तिकर्मसु योजितम्
नस्याभ्यञ्जनपानैर्वा हन्यात्पित्तगदानिदम् १४७
कनकशिखरिमानक्षारसंसिद्धतोये कुसुमलवगयुक्तैः सर्जनिर्यासचूर्गैः
विधिश्रृततिलतैलं कल्कयुक्तं निहन्ति प्रचुर तरमिदानीमिन्द्रलुप्तास्रवातम्
१४८
शुद्धां पचेन्नागबलातुलान्तु जलार्मगे पादकषायसिद्धम्
विस्राव्य तैलाढकमत्र देयमजापयस्तैलविमिश्रितन्तु १४९
नतं सयष्टीमधुकञ्चकल्कं दत्वा पृथक्पञ्चपलं विपक्वम्
तद्वातरक्तं शमयत्युदीर्गं वस्तिप्रदानेन हि सप्तरात्रात्
दशाहयोगेन करोत्यरोगं पीतञ्च तैलोत्तममश्विनोक्तम् १५०

जीवकर्षभकौ मेदे ऋष्यप्रोक्ता शतावरी
मधुकं मधुपर्णी च काकोलीद्वयमेव च १५१
मुद्गमाषाख्यपर्णी च दशमूलं पुनर्नवा
बलाऽमृता विदारी च साश्वगन्धाऽश्मभेदकौ १५२
कुर्यात्कल्कं कषायञ्च ताभ्यां तैलं घृतं पचेत्
लाभतश्च वसामज्जामांसं प्रतुदविष्किरात् १५३
चतुर्गुणेन पयसा संसिद्धं वातशोणितम्
सर्वदेहाश्रितान्हन्ति व्याधीन्घोरांश्च वातजान् १५४
बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम्
शतपाकं भवेदेतद्वातासृग्वातपित्तनुत् १५५
धन्यं पुंसवनञ्चैव नराणां शुक्रवर्द्धनम्
रेतोयोनिविकारघ्नमेतद्वातविकारनुत् १५६
मधुयष्ट्याः पलशतं कषाये पादशेषिते
तैलाढकं समक्षीरं पचेत्कल्कैः पलोन्मितैः १५७
शतपुष्पावरी मूर्वापयस्यागुरुचन्दनैः
स्थिरहंसपदीमांसी द्विमेदामधुपर्णिभिः १५८
काकोलीक्षीर काकोलीतामलक्यृद्धिपद्मकैः
जीवकर्षभजीवन्तीत्वक्पत्र नखबालकैः १५९
प्रपौण्डरीकमञ्जिष्ठा सारिवेन्दुवितुन्नकैः
वातासृक्पित्तदाहार्त्तिज्वरघ्नं बलवर्णकृत् १६०
मधुयष्ट्याः पलं पिष्ट्वा तैलप्रस्थं चतुर्गुणे
क्षीरे साध्यं शतं वारांस्तदेव मधुकान्वितम् १६१
सिद्धं देयं त्रिदोषे स्याद्वातास्रश्वासकासनुत्
धन्यं पुंसवनञ्चैव कामलादाहनाशनम् १६२
बलाकषायकल्काभ्यां तैलं क्षीरसमं पचेत्
सहस्रशतपाकं वा वातासृग्वातरोगनुत् १६३
रसायनमिदं श्रेष्ठमिन्द्रियाणां प्रसादनम्
जीवनं बृंहणं स्वर्यं शुक्रासृग्दोषनाशनम् १६४
पुनर्नवामूलशतं विशुद्धं रुवूकमूलञ्च तथा प्रयोज्य
दत्वा पलं षोडशकञ्च शुण्ठ्याः सङ्कुट्य सम्यग्विपचेद्घटेऽपाम् १६५

पलानि चाष्टावथ कौशिकस्यतेनाष्टशेषेण पुनः पचेत
एरगडतैलं कुडवञ्च दद्याद्दत्वा त्रिवृच्चूर्णपलानि पञ्च १६६
निकुम्भचूर्णस्य पलं गुडूच्याः पलद्वयं चार्द्धपलं पलं वा
पलत्रयत्र्यूषणचित्रकाणि सिन्धूत्थभल्लातविडङ्गकानि १६७
कर्षं तथा माक्षिकधातुचूर्णं पुनर्नवायाः पलमेव चूर्णम्
चूर्णानि दत्वा ह्यवतार्य शीतं खादेन्नरः कर्षसमप्रमाणम् १६८
वातासृजं वृद्धिगदं च सप्त जयत्यवश्यं त्वथ गृध्रसीं च
जङ्घोरुपृष्ठत्रिकवस्तिजं च तथामवातं प्रबलं च हन्ति १६९
यावशूकसुरदारुसैन्धवं मुस्तकत्रुटिवचायवानिकाः
व्योषदीप्यकनिशाफलत्रिकं जीरकद्वयविडङ्गचित्रकम् १७०
कार्षिकं सुमसृणं सुयोजितं संयुतं पुरपलैश्च पञ्चभिः
शर्करां पुरसमां सुपेषयेत्तप्तसर्पिषि विनिक्षिपेत्ततः १७१
वातरक्तमुदरं भगन्दरं प्लीहयक्ष्मविषमज्वरं गरम्
श्वित्रकुष्ठमखिलव्रणानयं चित्तविभ्रमगदांश्च दारुणान् १७२
गृध्रसीं च गुदजाग्निमन्दतां हन्ति कोष्ठजनितं महागदम्
वज्रमिन्द्रसुकरादिव च्युतं गुप्तशैलकुलमुत्तमं द्रुतम् १७३
अन्नपानपरिहारवर्जितं सर्वकालसुखदं निरत्ययम्
सेव्यमानमिदमश्विनिर्मितं गुग्गुलोर्हि वटिका रसायनम् १७४
चत्वारो माषका हीने मध्यमेऽष्टौ च माषकाः
श्रेष्ठा द्वादशकाः प्रोक्ताः कोष्ठं विज्ञाय पाययेत् १७५
स्रंसनत्वाद् गुरुत्वाद्वा गुग्गुलोः करणक्रमः १७६
प्रस्थमेकं गुडूच्याश्च अर्द्धप्रस्थं च गुग्गुलोः
प्रत्येकं त्रिफलायास्तु तत्प्रमाणं विनिर्दिशेत्
सर्वमेकत्र सङ्कुटय्य क्वाथयेन्नल्वणेऽम्भसि १७७
पादशेषं परिस्राव्य कषायं ग्राहयेद्भिषक्
पुनः पचेत्कषायन्तु यावत्सान्द्रत्वमागतम् १७८
दन्तीव्योषविडङ्गानि गुडूची त्रिफलात्वचः
ततश्चार्द्धपलं चूर्णं गृह्णीयाच्च प्रतिप्रति १७९
कर्षन्तु त्रिवृतायाश्च सर्वमेकत्र चूर्णयेत्
तस्मिन्सुसिद्धं विज्ञाय कवोष्णे प्रक्षिपेद् बुधः १८०

ततश्चाग्निबलं मत्वा खादेत्कर्षप्रमाणतः
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् १८१
दुष्टव्रणं प्रमेहांश्च आमवातं भगन्दरम्
नाड्याढ्यवातं श्वयथुं सर्वानेतान्व्यपोहति १८२
त्रिप्रस्थममृतायाश्च प्रस्थमेकन्तु गुग्गुलोः
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च १८३
सर्वमेकत्र सङ्कुट्य साधयेन्नल्वणेऽम्भसि
पुनः पचेत्पादशेषं यावत्सान्द्रत्वमागतम् १८४
दन्तीचित्रकमूलानां कणाविश्व फलत्रिकम्
गुडुचीत्वग्विडङ्गानां प्रत्येकार्धपलं मतम् १८५
त्रिवृताकर्षमेकन्तु सर्वमेकत्र चूर्णयेत्
सिद्धे चोष्णे क्षिपेत्तत्र अमृतागुग्गुलुं परम् १८६
अतो यथाबलं खादेदम्लपित्ती विशेषतः
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् १८७
दुष्टव्रणं प्रमेहांश्च आमवातं भगन्दरम्
नाड्याढ्यवातं श्वयथुं हन्यात्सर्वामयांस्तथा १८८
अश्विभ्यां निर्मिताश्चायममृताऽख्यो हि गुग्गुलुः १८९
गुडरामठशुण्ठीनां मांसकूष्माण्डयोरपि
गुडूच्या गुग्गुलोश्चैव प्रस्थः षोडशभिः पलैः १९०
स्निग्धः काञ्चनसङ्कांशः पक्वजम्बूफलोपमः
नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः १९१
शुष्को दुर्गन्धिकश्चैव वर्णान्यत्वमुपागतः
पुराणः स तु विज्ञेयो न स देयस्तु रोगिणे १९२
कृमिरिपुदहनव्योष त्रिफलाऽमरदारुचव्यभूनिम्बाः
मागधिमूलं मुस्तं शटीवचाधातुमाक्षिकश्चैव
लवणक्षारनिशायुक्कुस्तुम्बुरुगजकणाः सहातिविषाः १९३
कर्षांशिकान्येव समानि कुर्यात्पलाष्टकं चाश्मजतु प्रदद्यात्
निष्पत्रशुद्धस्य पुरस्य धीमान्पलद्वयं लौहरजस्तथैव १९४
सिताचतुष्कं पलमत्र वांश्या निकुम्भकुम्भत्रिसुगन्धियुक्तम्
पृथक्पलं चूर्णमथावपेच्च चन्द्रप्रभेयं गुटिका विधेया १९५

ज्वरातिसारग्रहणीविकारांश्चार्शांसि निर्णाशयते षडेव
भगन्दरान्कामलपाण्डुरोगान्विनष्टवह्नेः कुरुते च दीप्तिम् १९६
हन्त्यामयान्पित्तकफानिलोत्थान्नाडीगते मर्मगते व्रणे च
क्षतक्षये गृध्रसियक्ष्मरोगे मेहे गजाख्ये प्रबले प्रयोज्य १९७
शुक्रक्षये चाश्मरिमूत्रकृच्छ्रे शुक्रप्रवाहेऽप्युदरामये च
शम्भुं समभ्यर्च्य कृतप्रसादं प्राप्ता गुटी चन्द्रमसा प्रशस्ता १९८
न पानभोज्ये परिहारवादो न शीतवातातपमैथुनेषु
भक्तस्य पूर्वं सततं प्रयोज्या तक्रानुपानाऽप्यथ मस्तुपाना १९९
अजारसो जाङ्गलजो रसो वा परोऽथ वा शीतजलानुपानम् २००
शुक्रदोषान्निहन्त्यष्टौ प्रमेहांश्चापि विंशतिम्
वलीपलितनिर्मुक्तो वृद्धोऽपि तरुणायते २०१
गिरिजतुगुग्गुलुलौहान्येकीकृत्याथ भावयेद् बहुशः
क्वाथैस्तद्व्याधिहरैस्तदनु च चूर्णीकृतं मिलितम्
कृमिरिप्वादिकचूर्णैर्गिरिजतुसमधान्यपटोलयूषेण २०२
वरमहिषलोचनोदरसन्निभवर्णस्य गुग्गुलोः प्रस्थम्
प्रक्षिप्य तोयराशौ त्रिफलाञ्च यथोक्तपरिमाणम् २०३
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन
विपचेत्तदप्रमत्तो दर्व्या सङ्घट्टयेन्मुहुर्यावत् २०४
अर्द्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात्
अवतार्य वस्त्रपूतं पुनरपि संसाधयेदयः पात्रे २०५
सान्द्रीभूते तस्मिन्नवतार्य हिमोपलप्रख्ये
त्रिफलाचूर्णार्द्धपलं त्रिकटोश्चूर्णं षडक्षपरिमाणम् २०६
कृमिरिपुचूर्णार्द्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः
पलमेकन्तु गुडूच्या दत्वा सञ्चूर्ण्य यत्नेन २०७
उपयुज्य चानुपानं यूषं क्षीरं सुगन्धि सलिलञ्च
इच्छाऽहारविहारी भेषजमुपयुज्य सर्वकालमिदम् २०८
तनुरोधी वातशोणितमेकद्वित्र्युल्बणं चिरोत्थमपि
भग्नस्रुतपरिशुष्कं स्फुटितं दीर्णमाजानु यच्चापि २०९
व्रणकासकुष्ठगुल्मश्वयथुं गरपाण्डुमेहांश्च नाशयत्याशु
मन्दाग्निञ्च विबन्धं प्रमेहपिडकाश्च नाशयत्याशु २१०

सततं निषेव्यमाणः कालवशाद्धन्ति सर्वगदान्
अभिभूय जरादोषं करोति कैशोरकं रूपम् २११
प्रत्येकं त्रिफलाप्रस्थो जलञ्चाढकमाढकम्
गुडवद् गुग्गुलोः पाकः सन्धेयस्तु विशेषतः २१२
त्रिफलाऽतिविषादारुदार्वीमुस्तापरुषकैः
खदिरासननक्ताह्वगुडूचीनृपपादपैः २१३
भूनिम्बनिम्बकटुकाकलिङ्गकुलकैः समैः
क्वाथं कृत्वा ततः पूतं शृतमष्टगुणेऽम्भसि २१४
गुडूच्यास्तत्र सुकृतं चूर्णमर्द्धं तु वारिणि
क्षिप्त्वा सुनूतने भाण्डे वासयेद्रजनीगतम्
सोमोपेतेन पूतेन कौशिकं परिभावयेत्
षड्गुडेन तु सप्ताहं शिलाजतुसमन्वितम् २१६
शुक्तस्य तु पलान्यष्टौ समावाप्य विचक्षणः
ताप्यचूर्णं पलञ्चैकं द्वे पले मधुसर्पिषोः २१७
एकीकृत्य समं सर्वं लिह्यात्तु त्रिफलाऽम्बुना
तनुना मुद्गयूषेण जाङ्गलानां रसेन वा २१८
जीर्णेऽजीर्णे तु भुञ्जीत पुराणं शालिषष्टिकम् २१९
यथारोगं यथासात्म्यं रसैर्यूषैश्च संस्कृतैः
त्रिसप्ताहप्रयोगेण वातरक्तं सुदारुणम् २२०
निहन्ति वीर्यतः क्षिप्रं कुष्ठरोगान्व्रणानपि
छिन्नं भिन्नञ्च सन्धत्ते त्रिफलाऽख्यो हि गुग्गुलुः २२१
पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम्
सौगन्धिकं पलञ्चैकं कौशिकस्य पलत्रयम् २२२
कुडवं चित्रतैलस्य सर्वमादाय यत्नतः
पाचयेत्पाकविद्वैद्यः पात्रे लोहमये दृढे २२३
हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम्
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा
कुष्ठानिवातरक्तञ्च गुल्मशूलोदराणि च
आमवातं जयत्येतदपि वैद्यविवर्जितम् २२५
सर्वदाऽस्योपयोगेन जरापलितनाशनम्

सर्पिस्तैलरसोपेतमश्नीयाच्छालिषष्टिकम् २२६
सिंहनादइति ख्यातो रोगवारणदर्पहा
वह्नेर्दीप्तिकरं पुसां भाषितो दराडपाणिना २२७
अत्राहुस्त्रिफलाक्वाथं पृथक् त्रिपलसम्मितम्
किञ्चिन्निर्याति चैरराडस्नेहे पाकोऽधिके खरः २२८
अष्टौ पलान्यत्र पलङ्कषायाः प्रस्थः पृथक् शुद्धफलत्रयस्य
दत्वा पचेद् द्रोणयुगे जलस्य पादावशेषं पुनरेव वैद्यः २२९
दन्तीत्रिवृत्त्र्यूषणवारुणीनां बिडङ्गमुस्तत्रिफलाऽमृतानाम्
कटूग्रगन्धालुकमाणकानां सगन्धकानाञ्च सपारदानाम् २३०
पलार्द्धमानं प्रमितं सुचूर्णं दद्याद्विपक्वं पुनरेव तत्र
फलानि सञ्चूराय च कानकानिसहस्रसङ्ख्याकलितानि पश्चात् २३१
खादेद्धि माषद्वितयं प्रतप्तं तोयादिकं देयमतोऽनुपाने
आमानिलं सन्धिगतं सशूलं शिरोगतं जानुकटिस्थितञ्च २३२
अर्शोऽतिवृत्तिं विषमज्वरार्त्तिं प्रमेहकुष्ठानि भगन्दरञ्च
हन्यान्नराणामिति सिंहनादो मेदोमरुच्छ्लेष्मगदान्पुरोऽयम् २३३
दाहोऽत्यन्तप्रवृत्तिर्वा विकारोऽन्यो न चेद् बहुः
तत्कृतस्तुतदा तत्र तक्रभक्तं हितं भवेत्
उद्वर्त्तनं शीतजलस्नानञ्च शयनं तथा २३४
विरेकातिशयं कुर्यात्सिंहनादो यतः सुधीः
ज्ञात्वा बलं शरीरे तु दद्यादेवं न वा भिषक् २३५
तोयारनालगोक्षीरैः क्रमात्पक्वं विशुध्यति
फलं कानकसञ्ज्ञन्तु कृत्वा चूर्णं ततः क्षिपेत् २३६
पिरिडतां गुग्गुलोर्मानीं कटुतैले पलाष्टके
प्रत्येकं त्रिफलाप्रस्थं सार्द्धद्रोणे जले पचेत् २३७
पादशेषं सुपूतञ्च पुनरग्नावधिश्रयेत्
त्रिकटुत्रिफलामुस्तविडङ्गामलकानि च २३८
गुडूच्यग्नित्रिवृद्दन्ती वचासूरणमानकम्
कस्तूरीरससूतांशं प्रत्येकं शुक्तिसम्मितम् २३९
सहस्रं कानकफलं सिद्धे सञ्चूराय निक्षिपेत्
ततो माषद्वयं जग्ध्वा पिबेत्तप्तजलादिकम् २४०

अग्निञ्च कुरुते शीघ्रं वडवाऽनलसन्निभम्
मेधावृद्धिं वयोवृद्धिं बलं सुविपुलं तथा २४१
आमवातं शिरोवातं ग्रन्थिवातं भगन्दरम्
जानुजङ्घाश्रितं वातं सकटीग्रहवेदनम् २४२
अश्मरीमूत्रकृच्छ्रे च भग्ने च तिमिरोदरे
अम्लपित्तं तथा कुष्ठं प्रमेहं गुदनिर्गमम् २४३
कासं पञ्चविधं श्वासं क्षयञ्च विषमज्वरम्
प्लीहानं श्लीपदं गुल्मान्पाण्डुरोगं सकामलम् २४४
शोथान्त्रवृद्धिशूलानि गुदजानि विनाशयेत्
मेदः कफामसञ्जातरोगवारणदर्पहा २४५
सिंहनाद इति ख्यातो योगोऽयममृतोपमः
भिषग्भिर्वर्जिते रोगे भाषितो दण्डपाणिना २४६
शतावरी नागबला वृद्धदारकमुञ्चटा
पुनर्नवामृता कृष्णा वाजिगन्धा त्रिकण्टकम् २४७
पृथग्दशपलान्येषां श्लक्ष्णचूर्णानि कारयेत्
तदर्धशर्करायुक्तं चूर्णं संमर्दयेद् बुधः २४८
स्थापयेत्सुदृढे भाण्डे मध्वर्द्धाढकसंयुतम्
घृतप्रस्थेन वालोड्य त्रिसुगन्धपलेन च २४९
तं खादेदिष्टभक्ष्यान्नो यथावह्निबलं नरः
वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसम्भवम् २५०
वातपित्तकफोत्थांश्च रोगानन्यांश्च तत्कृतान्
हत्वा करोति पुरुषं हत्वा सर्वामयान्  द्रुतम् २५१
बलीपलितनिर्मुक्तं मेधास्मृतिविभूषितम्
करोति पुरुषं धन्यं पञ्चवर्षशतायुषम् २५२
योगसारामृतो नाम लक्ष्मीकीर्त्तिविवर्द्धनः २५३
व्यायामं मैथुनं कोपमुष्णाम्ललवणं रसम्
दिवास्वप्नमभिष्यन्दि गुरु चान्यद्विवर्जयेत् २५४

इत्येकोनत्रिंशोवातरक्ताधिकारः समाप्तः २९

अथ मध्यखण्डम्

तृतीयो भागः
अथ त्रिंशः शूलाधिकारः ३०
दोषैः पृथक्समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत्
सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः १
व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात्
कलायमुद्गाढकिकोरदूषादत्यर्थरुक्षाध्यशनाभिघातात् २
कषायतिक्तातिविरुढजान्नविरुद्धवल्लूरकशुष्कशाकैः
विट्छुक्रमूत्रानिलसन्निरोधाच्छोकोपवासादतिहास्यभाषात् ३
वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पृष्ठपार्श्वत्रिकवस्तिदेशे
जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् ४
मुहुर्मुहुश्चोपशमप्रकोपौ विरामूत्रसंस्तम्भनतोदभेदैः
संस्वेदनाभ्यञ्जनमर्दनाद्यैःस्निग्धोष्णभोज्यैश्च शमं प्रयाति ५
कफपित्तावरुद्धस्तु मारुतो रसवर्द्धितः
हृदयस्थः प्रकुरुते शूलमुच्छ्वासरोधकम्
सहृच्छूल इति ख्यातो रसमारुतकोपजः ६
कफं निगृह्य पवनः सूचीभिरिव निस्तुदन्
पार्श्वस्थः पार्श्वयोः शूलं कुर्यादाध्मानसंयुतम् ७
तेनोच्छ्वसिति वक्त्रेण नरोऽन्नञ्च न काङ्क्षति
निद्राञ्च नाप्नुयादेव पार्श्वशूलः पकीर्त्तितः ८
संरोधात्कुपितोवायुर्बस्तिं संश्रित्य तिष्ठति ९
बस्तेरध्वनि नाडीषु ततः शूलोऽस्य जायते
विरामूत्रवातसंरोधी बस्तिशूलः स उच्यते १०
क्षारातितीक्ष्णोष्णविदाहितैलनिष्पावपिरायाककुलत्थयूषैः
कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः ११
ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याथ करोति शूलम्
तृरामोहदाहार्त्तिकरं हि नाभ्यां संस्वेदमूर्च्छाभ्रमशोषयुक्तम् १२
मध्यन्दिने कुप्यति चार्द्धरात्रे निदाघकाले जलदात्यये च
शीते च शीतैः समुपैति शान्तिं सुस्वादुशीतैरपि भोजनैश्च १३
आनूपवारिजकिलाटपयोविकारैर्मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः
अन्यैर्बलासजनकैरपिहेतुभिश्च श्लेष्मा प्रकोपमुपगम्य करोतिशूलम् १४

हृल्लासकाससदनारुचिसम्प्रसेकैरामाशये स्तिमितकोष्ठशिरोगुरुत्वैः
भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रं सूर्योदयेऽथ शिशिरे कुसुमागमे च १५
द्विदोषलक्षणैरेतैर्विद्याच्छूलं द्विदोषजम् १६
सर्वेषु देशेषु च सर्वलिङ्गं विद्याद्भिषक्सर्वभवं हि शूलम्
सुकष्टमेनं विषवज्रकल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः १७
आटोपहृल्लासवमीगुरुत्वस्तैमित्यकानाहकफप्रसेकैः
कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति १८
वातात्मकं वस्तिगतं वदन्ति पित्तात्मकञ्चापि वदन्ति नाभ्याम्
हृत्पार्श्वकुक्षौ कफसन्निविष्टं सर्वेषु देशेषु च सन्निपातात् १९
बस्तौ हृत्कटिपार्श्वेषु स शूलः कफवातिकः
कुक्षौ हृन्नाभिमध्ये तु स शूलः कफपैत्तिकः
दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः २०
अतिमात्रं यदा भुक्तं पावके मृदुतां गते
स्थिरीकृतन्तु तत्कोष्ठे वायुरावृत्य तिष्ठति २१
यदाऽन्नं न गतं पाकं तच्छूलं कुरुते भृशम्
मूर्च्छाध्मानविदाहांश्च हृत्क्लेशं सविलम्बिकम् २२
कम्पं वान्तिमतीसारं प्रमोहं जनयेदपि
अविपाकोद्भवं शूलमेतमाहुर्मनीषिणः २३
वेदनातितृषा मूर्च्छा आनाहो गौरवारुची
कासः श्वासो वमिर्हिक्का शूलास्योपद्रवाः स्मृताः २४
एकदोषानुगः  साध्यः कृच्छ्रसाध्यो द्विदोषजः
सर्वदोषान्वितो घोरस्त्वसाध्यो भूर्युपद्रवः २५
वेदनातितृषामूर्च्छा आनाहो गौरवं ज्वरः २६
भ्रमो रुचिः कृशत्वञ्च बलहानिस्तथैव च
उपद्रवा दशैवैते यस्य शूलेषु नास्ति सः २७
स्वैर्निदानैः प्रकुपितो वातः सन्निहितो यदा
कफपित्ते समावृत्य शूलकारी भवेद् बली
भुक्ते जीर्यति यच्छूलं तदेव परिणामजम् २८
तस्य लक्षणमप्येतत्समासेनाभिधीयते २९
आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः

स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद्भिषक् ३०
तृष्णादाहारतिस्वेदकट्वम्ललवणोत्तरम्
शूलं शीतशमप्रायं पैत्तिकं लक्षयेद् बुधः ३१
छर्दिहृल्लाससंमोहस्वल्परुग्दीर्घसन्तति
कटुतिक्तोपशान्तौ च विज्ञेयञ्च कफात्मकम् ३२
संसृष्टलक्षणं बुद्ध्वा द्विदोषं परिकल्पयेत्
त्रिदोषजमसाध्यं स्यात्क्षीणमांसबलानलम् ३३
जीर्णे जीर्यति चाप्यन्ने यच्छूलमुपजायते
पथ्यापथ्यप्रयोगेण भोजनाभोजनेन वा
न शमं याति नियमात्सोऽन्नद्रव उदाहृतः ३४
वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः
क्षाराश्चूर्णानि गुटिकाः शस्यन्ते शूलशान्तये ३५
विज्ञाय वातशूलन्तु स्नेहस्वेदैरुपाचरेत्
स्वल्पशूलाकुलस्य स्यात्स्वेद एव सुखावहः ३६
मृत्तिकां सजलां पाकाद्घनीभूतां पटे क्षिपेत्
कृत्वा तत्पोट्टलद्यं शूली यथास्वेदं विधारयेत् ३७
कार्पासास्थिकुलत्थ कैस्तिलयवैरेरराडमूलातसी
वर्षाभूशणबीजकाञ्जिकयुतैरेकीकृतैर्वा पृथक् ३८
स्वेदः स्यादथ कूर्परोदरशिरः स्फिग्जानुपादाङ्गुली
गुल्फस्कन्धकटीरुजो विजयते निःशेषवातार्त्तिहा ३८
तिलैश्च गुटिकां कृत्वा भ्रामयेज्जठरोपरि ३९
शूलं सुदुस्तरं तेन शान्तिं गच्छति सत्वरम्
नाभिलेपाज्जयेच्छूलं मदनं काञ्जिकान्वितम् ४०
विश्वमेरराडजं मूलं क्वाथयित्वा जलं पिबेत्
हिङ्गुसौवर्चलोपेतं सद्यः शूलनिवारणम् ४१
पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः
पायसैः कृशरैः पिराडैः स्निग्धैर्वा पिशितोत्करैः ४२
वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः
ससैन्धवव्योषयुतः सलावः सहिङ्गुसौवर्चलदाडिमाढ्यः ४३
बलापुनर्नवैरराड बृहतीद्वयगोक्षुरैः

सहिङ्गुलवणोपेतं सद्यो वातरुजापहम् ४४
तुम्बुरुण्यभया हिङ्गु पौष्करं लवणत्रयम्
पिबेदुष्णामबुनां वापि शूलगुल्मापतन्त्रकी ४५
यवानीहिङ्गुसिन्धूत्थ क्षारसौवर्चलाभयाः
सुरामण्डेन पातव्या वातशूलनिषूदनाः ४६
सौवर्चलाम्लिकाजा जीमरिचैर्द्विगुणोत्तरैः
मातुलुङ्गरसैः पिष्ट्वा गुटिका वातशूलनुत् ४७
बीजपूरकमूलं च घृतेन सह पाययेत्
जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः ४८
गुडः शालिर्यवक्षारः सर्पिष्पानं विरेचनम्
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ४९
मणीरजतताम्राणां भाजनानि गुरूणि च
तोयेन परिपूर्णानि शूलस्योपरि धारयेत् ५०
विरेचनं पित्तहरं प्रशस्तं रसाश्च शस्ताः शशलावकानाम्
सगुडां घृतसंयुक्तां भक्षयेद्वा हरीतकीम्
प्रलिह्याच्छूलशान्त्यर्थं धात्रीचूर्णं समाक्षिकम् ५१
शाल्यन्नं जाङ्गलं मांसमरिष्टं कटुकंरसम्
मधुना जीर्णगोधूमं कफशूले प्रयोजयेत् ५२
लवणत्रयसंयुक्तं पञ्चकोलं सरामठम्
सुखोष्णेनाम्बुना पीतं कफशूलं प्रणाशयेत् ५३
आमशूले क्रिया कार्या कफशूलप्रणाशिनी
सेव्यमामहरं सर्वमग्नेर्मन्दस्य वर्द्धनम् ५४
तीक्ष्णायाश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम्
प्रयोज्यं मधुसर्पिभ्यां सर्वशूलनिवारणम् ५५
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः
अम्लपिष्टैः सुखोष्णैश्च लिम्पेच्छूलयुतोदरम् ५६
मूलं बैल्वं तथैरण्डं चित्रकं विश्वभेषजम्
हिङ्गुसैन्धवसंयुक्तं सद्यः शूलनिवारणम् ५७
कूष्माण्डं तनु कृत्वा तु क्षिप्त्वा घर्मे विशोषयेत्
स्थाल्यां निक्षिप्य तत्सर्वं पिधानेन पिधाय च ५८

चुल्ल्यां निवेश्य वह्निञ्च ज्वालयेत्कुशलो जनः
यथा तन्न भवेद्भस्म किन्त्वङ्गारो दृढो भवेत् ५९
तदा निर्वापयेच्छीतं सर्वथा चूर्णितं तु तत्
माषद्वयमितं तावच्छुण्ठीचूर्णेन मिश्रितम् ६०
जलेन भक्षयेन्नित्यं महाशूलाकुलो नरः
असाध्यमपि यच्छूलं तदप्येतेन शाम्यति ६१
लङ्घनं प्रथमं कुर्याद्वमनं सविरेचनम्
पक्तिशूलोपशान्त्यर्थं तत्र वान्तेर्विधिर्यथा ६२
पीत्वा तु क्षीरमाकण्ठं मदनक्वाथसंयुतम्
कान्तारकस्य पौण्ड्रस्य कोशकारस्य वा रसम् ६३
कषायो वाऽथ निम्बस्य कटुतुम्बीरसोऽथवा
यथाविधि वमेद्धीमान्पक्तिशूलार्दितो जनः ६४
त्रिवृता च तथा दन्त्या तैलेनैरण्डजेन वा
दत्तं विरेचनं सद्यः पक्तिशूलनिवारणम् ६५
विडङ्गतण्डुलव्योषत्रिवृद्दन्ती सचित्रका
सर्वाण्येतानि संहृत्य सूक्ष्मचूर्णानि कारयेत् ६६
गुडेन मोदकान्कृत्वा खादेदुष्णेन वारिणा
जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम् ६७
नागरतिलगुडकल्कं पयसा सम्पिष्य यः पुमांल्लिह्यात्
उग्रं परिणतिशूलं नश्येत्तस्य त्रिरात्रेण ६८
पीतं शम्बूकजं भस्म जलेनोष्णेन तत्क्षणात्
पक्तिजं नाशयत्येव शूलं विष्णुरिवासुरान् ६९
लौहपथ्याकणाशुण्ठीचूर्णं समधुसर्पिषा
विलिहन्विनिहन्त्येव शूलं हि परिणामजम् ७०
नारिकेलं सतोयं च लवणेन सुपूरितम्
मृदाऽववेष्टितं शुष्कं पक्वं गोमयवह्निना ७१
पिप्पल्या भक्षितं हन्ति शूलं हि परिणामजम्
वातिकं पैत्तिकञ्चापि श्लैष्मिकं सान्निपातिकम् ७२
अन्नद्रवाख्ये शूले तु न तावत्स्वास्थ्यमश्नुते
यावत्कटुकपित्ताम्लमन्नं न च्छर्दयेद् द्रवम् ७३

जातमात्रे जरत्पित्ते शूलमाशु विनाशयेत्
पित्तान्तं वमनं कृत्वा कफान्तञ्च विरेचनम् ७४
अन्नद्रवे च तत्कार्यं जरत्पित्ते यदीरितम्
जरत्पित्तेऽपि तत्पथ्यं प्रोक्तमन्नद्रवे तु यत् ७५
आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम् ७६
माषेण्डरीं सलवणां सुस्विन्नां तैलपाचिताम्
तादृशीं सर्पिषा खादेदन्नद्रवनिपीडितः ७७
धात्रीफलभवं चूर्णमयश्चूर्णसमन्वितम्
यष्टीचूर्णेन वा युक्तं लिह्यात्क्षौद्रेण तद्द्रवे ७८
श्यामाकतण्डुलैः सिद्धं सिद्धं कोद्रवतण्डुलैः
प्रियङ्गुतण्डुलैः सिद्धं पायसं सहितं हितम् ७९
गौडिकं शौरणं कन्दं कूष्माण्डमपि भक्षयेत्
कलाययवसक्तून्वा सक्तून्वा लाजसम्भवान् ८०
गोधूममण्डकं तत्र सर्पिषा गुडसंयुतम्
ससितं शीतदुग्धेनं मृदितं क्वथितं हितम् ८१
अन्नद्रवो दुश्चिकित्स्यो दुर्विज्ञेयो महागदः
तस्मात्तस्य प्रशमने परं यत्नं समाचरेत् ८२
अन्नद्रवे जरत्पित्ते वह्निर्मन्दो भवेद्यतः
तस्मादत्रान्नपानानि मात्राहीनानि कारयेत् ८३
कलाययवगोधूमाः श्यामाकाः कोरदूषकाः
राजमाषाश्च माषाश्च कुलत्थाः कङ्गुशालयः ८४
दधिलुप्तरसं क्षीरं सर्पिर्गव्यं समाहितम्
वास्तूकं कारवेल्ली च कर्कोटकफलानिच ८५
बर्हिणो हरिणा मत्स्या रोहिताद्याः कपिञ्जलाः
एतस्मिन्नामये शस्ता मता मुनिचिकित्सकैः ८६
गुडामलकपथ्यानां चूर्णं प्रत्येकशः पलम्
त्रिपलं लोहकिट्टस्य तत्सर्वं मधुसर्पिषा ८७
समालोड्य समश्नीयादक्षमात्रप्रमाणतः
आदिमध्यावसानेषु भोजनस्य निहन्ति तत्८८
अन्नद्रवं जरत्पित्तमम्लपित्तं सुदारुणम्

परिणामसमुत्थञ्च शूलं संवत्सरोत्थितम् ८९
व्यायामं मैथुनं मद्यं लवणं कटुकं रसम्
वेगरोधं शुचं क्रोधं द्विदलं शूलवांस्त्यजेत् ९०
इति त्रिंशः शूलाधिकारोऽथवा शूलपरिणामशूलान्नद्रवजरत्पित्ताधिकारः समाप्तः ३०

अथैकत्रिंश उदावर्त्तानाहाधिकारः ३१

वातविरामूत्रजृम्भाऽश्रुक्षवोद्गारवमीन्द्रियैः
क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्त्तसम्भवः १
यथोर्ध्वं जायते वायोरावर्त्तः स चिकित्सकैः
उदावर्त्त इति प्रोक्तो व्याधिस्तत्रानिलः प्रभुः २
वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ३
आटोपशूलौ परिकर्त्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ४
वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ५
मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मकाः स्युः
तथाऽक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ६
आनन्दजं वाप्यथ शोकजंवा नेत्रोदकं प्राप्तममुञ्चतो हि
शिरो गुरुत्वं न्यनामयाश्च भवन्ति तीव्राः सह पीनसेन ७
मन्यास्तम्भः शिरः शूलमर्दितार्द्धावभेदकौ
इन्द्रियाणाञ्च दौर्बल्यं क्षवथोः स्याद्विधारणात् ८
कराठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथ वाऽप्रवृत्तिः
उद्गारवेगेऽभिहते भवन्ति जन्तोर्विकाराः पवनप्रसूताः ९
कराडूकोठारुचिव्यङ्गशोथपाराड्वामयज्वराः
कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः १०
मूत्राशये वै गुदमुष्कयोश्च शोथो रुजा मूत्रविनिग्रहश्च
शुक्राश्मरी तत्स्रवणं भवेच्च ते ते विकारा विहते तु शुक्रे ११

तन्द्राऽङ्गमर्दावरुचिः श्रमश्च क्षुधाविघातात्कृशता च दृष्टेः १२
कण्ठास्यशोषः श्रवणावरोधस्तृष्णाविघाताद् धृदये व्यथा च १३
श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमोहावथवाऽपि गुल्मः १४
जृम्भाऽङ्गमर्दाक्षिशिरोऽतिजाड्यं निद्राविघातादथ वाऽपि तन्द्रा १५
वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः
भोजनैः कुपितः सद्य उदावर्त्तं करोति च १६
वातमूत्रपुरीषाश्रुकफमेदोवहानि वै
स्रोतांस्युदावर्त्तयति पुरीषं न प्रवर्त्तयेत् १७
ततो हृद्बस्तिशूलार्त्तो हृल्लासारतिपीडितः
वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः १८
श्वासकासप्रतिश्यायदाह मोहतृषाज्वरान्
वमिहिक्काशिरोरोग मनः श्रवणविभ्रमान्
बहूनन्यांश्च लभते विकारान्वातकोपजान् १९
तृष्णाच्छर्दिपरिक्लिष्टं क्षीणं शूकैरुपद्रुतम्
शकृद् वमन्तं मतिमानुदावर्त्तिनमुत्सृजेत् २०
आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन
प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति २१
तस्मिन्भवन्त्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोविदाहाः
आमाशये शूलमथो गुरुत्वं हृत्स्तम्भ उद्गारविघातनञ्च २२
स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा शकृतो वमिश्च
श्वासश्च पक्वाशयजे भवन्ति तथाऽलसोक्तानि च लक्षणानि २३
अधोवातनिरोधोत्थे उदावर्त्ते हितं मतम्
स्नेहपानं तथा स्वेदो वर्त्तिर्वस्तिर्हितो मतः २४
विड्विघातसमुत्थे तु विड्भङ्गाऽन्न तथौषधम्
वर्त्तयभ्यङ्गावगाहाश्च स्वेदो वस्तिर्हितो मतः २५
मूत्रावरोधजनिते क्षीरवारि वचां पिबेत्
दुःस्पर्शास्वरसं वाऽपि कषायं ककुभस्य च २६
एर्वारुबीजं तोयेन पिबेद्वा लवणीकृतम्
सितामिक्षुरसं क्षीरं द्राक्षां यष्टीमथापि वा
सर्वथैव प्रयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् २७

जृम्भाऽभिघातजे स्नेहं स्वेदं वाऽपि प्रयोजयेत्
अन्यानपि प्रयुञ्जीत समीरणहरान्विधीन् २८
नेत्रनीरावरोधोत्थे मुञ्चेद्वाऽपि दृशोर्जलम्
स्वप्यात्सुखञ्च तस्याग्रेकथयेच्च कथाः प्रियाः २९
क्षवथोर्घातजे तीक्ष्णघ्राणनस्यार्कदर्शनैः
प्रवर्त्तयेत्क्षुतं सक्तां स्नेहस्वेदौ च शीलयेत् ३०
उद्गारस्यावरोधे तु स्नैहिकं धूममाचरेत्
छर्दिनिग्रहसञ्जाते वमनं लङ्घनं हितम् ३१
विरेचनं चात्र मतं तैलेनाभ्यञ्जनं तथा
वस्तिशुद्धिकरैः सिद्धं चतुर्गुणजलं पयः ३२
आ वारिनाशात् क्वथितं पीतवन्तं प्रकामतः
रमयेयुः प्रिया नार्यःशुक्रोदावर्तिनं नरम् ३३
तस्याभ्यङ्गोऽवगाहश्च मदिरा चरणायुधः
शालि पयोनिरुहश्च हितं मैथुनमेव च  ३४
क्षुद्विघातसमुद्भूते स्निग्धमुष्णं तथा लघु
रुच्यमल्पं हितं भक्ष्यं पुष्पं सेव्यं सुगन्धि यत् ३५
तृषाविघातसम्भूते शीतःसर्वो विधिर्हितः
कर्पूरशिशिरं स्वल्पं पिबेत्तोयं शनैः शनैः
श्रमश्वासधृतौ शस्तो विश्रामः सरसौदनः ३६
निद्रावेगविघातोत्थे पिबेत्क्षीरं सितायुतम्
संवाहनं सुशय्याऽत्र हितः स्वप्नः प्रियाः कथाः ३७
हिङ्गुमाक्षिकसिन्धूत्थैः पिष्टैर्वर्त्तिं विनिर्मिताम्
घृताभ्यक्तं गुदे न्यस्येदुदावर्त्तविनाशिनीम् ३८
मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः
गुडक्षीरसमायुक्ताः फलवर्त्तिरिहोदिता ३९
खराडपलं त्रिवृताऽक्ष कृष्णाकर्षो द्वयोश्चूर्णम्
प्राग्भोजनस्य मधुना विडालपदकं नरो लिह्यात् ४०
एतद् गाढपुरीषे देयं विज्ञैरुदावर्त्ते
मधुरं नरपतियोग्यं चूर्णं नाराचकं नाम्ना ४१
सव्योषपिप्पलीमूलं त्रिवृद्दन्ती च चित्रकम्

तच्चूर्णं गुडसम्मिश्रं भक्षयेत्प्रातरुत्थितः ४२
एतद् गुडाष्टकं नाम्ना बलवर्णाग्निवर्द्धनम्
उदावर्त्तप्लीहगुल्मशोथपाण्ड्वामयापहम् ४३
मूलकं शुष्कमार्द्रं च वर्षाभूः पञ्चमूलकम्
कृतमालफलं चाप्सु पक्त्वा तेन घृतं पचेत्
तत्पीतं शमयेत्क्षिप्रमुदावर्त्तमशेषतः ४४
तुल्यकारणकार्यत्वादुदावर्त्तहरीं क्रियाम्
आनाहेषु च कुर्वीत विशेषश्चाभिधीयते ४५
त्रिवृत्कृष्णाहरीतक्यो द्विचतुष्पञ्चभागिकाः
गुडेन तुल्या गुटिका हरत्यानाहमुल्वणम् ४६
वर्त्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः
मधुनि गुडे वा पक्वैर्विहिता साऽङगुष्ठसम्मिता विज्ञैः ४७
वर्त्तिरियं दृष्टफला शनैः प्रणिहिता गुदे घृताभ्यक्ता
आनाहमुदरजार्त्तिं शमयति जठरे तथा गुल्मम् ४८
इत्येकत्रिंश उदावर्त्तानाहाधिकारः समाप्तः ३१

अथ द्वात्रिंशो गुल्माधिकारः ३२

दुष्टा वातादयोऽत्यर्थ मिथ्याहारविहारतः
कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् १
पञ्चविधत्वं विवृणोति
स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः
पुरुषाणां तथा स्त्रीणां रक्तजश्चोपजायते २
आर्त्तवादपिगुल्मः स्यात्स तुं स्त्रीणां प्रजायते
अन्यस्त्वसृग्भवः  पुंसां तथा स्त्रीणां प्रजायते ३
तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिवस्तयः ४
हृन्नाभ्योरन्तरे ग्रन्थिः सञ्चारी यदि वाऽचलः
वृत्तश्चयोपचयवान्स गुल्म इति कीर्त्तितः ५
उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि
आटोपमाध्मानमपक्तिशूलमासन्नगुल्मस्य वदन्ति चिह्नम् ६
अरुचिं कृच्छ्रविणमूत्रवातत्वं चान्त्रकूजनम्

आनाहं चोर्ध्ववातञ्च सर्वगुल्मेषु लक्षयेत् ७
रुक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च
शोकाभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ८
यः स्थानसंस्थानरुजाविकल्पं विड्वातसङ्गं गलवक्त्रशोषम्
श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वाङ्गशिरोरुजञ्च ९
करोति जीर्णेऽत्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च
वातात्स गुल्मो न च तत्र रूक्षं कषायतिक्तं कटु चोपशेते १०
कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा
आमोऽभिघातो रुधिरञ्च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम् ११
ज्वरः पिपासा सदनाङ्गरागौ शूलं महज्जीर्यति भोजने च
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम् १२
शीतं गुरु स्निग्धमचेष्टनञ्च सम्पूरणं प्रस्वपनं दिवा च
गुल्मस्य हेतुः कफसम्भवस्य सर्वस्तु दुष्टो निचयात्मकस्य १३
स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि
कफस्य लिङ्गानि च यानि तानि भवन्ति गुल्मे कफकोपजाते १४
व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनाऽथम् १५
महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम्
मनः शरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् १६
नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा
वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् १७
पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणञ्चाप्यपरं निबोध
यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात्सशूलः समगर्भलिङ्गः
स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः १८
सञ्चितः क्रमशो गुल्मो  महावास्तुपरिग्रहः
कृतमूलः शिरानद्धोयदा कूर्म इवोन्नतः १९
दौर्बल्यारुचिहृल्लासकासच्छर्द्यरतिज्वरैः
तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति २०
गृहीत्वा सज्वरश्वासं छर्द्यतीसारपीडितम्
हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् २१
श्वासः शूलं पिपासाऽन्नविद्वेषो ग्रन्थिमूढता

जायते दुर्बलत्वञ्च गुल्मिनो मरणाय वै २२
वातारितैलेन पयोयुतेन पथ्यासमेतेन विरेचनं हि
संस्वेदनं स्निग्धमतिप्रशस्तं प्रभञ्जनक्रोधकृते च गुल्मे २३
स्वर्जिकाकुष्ठसहितः क्षारः केतकसम्भवः
पीतस्तैलेन शमयेद् गुल्मं पवनसम्भवम् २४
तित्तिरांश्च मयूरांश्च कुक्कुटान्क्रौञ्चवर्त्तकान्
सर्पिः शालि प्रसन्नाञ्च वातगुल्मे प्रयोजयेत् २५
पित्तगुल्मे त्रिवृच्चूर्णं पातव्यं त्रिफलाम्बुना
विरेकाय सितायुक्तं कम्पिल्लं वा समाक्षिकम् २६
अभयां द्राक्षया खादेत्पित्तगुल्मी गुडेन वा
योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् २७
हिङ्गुग्रन्थिकधान्यजीरकवचाचव्याग्निपाठाशटी
वृक्षाम्लं लवणत्रयं त्रिकटुकं क्षारद्वयं दाडिमम्
पथ्यापौष्करवेतसाम्लहपुषाऽजाज्यस्तदेभिः कृतं
चूर्णं भावितमेतदार्द्रकरसैः स्याद्बीजपूरद्रवैः
गुल्माध्मानगुदाङ्कुरान्ग्रहणिकोदावर्त्तसंज्ञंगदं
प्रत्याध्मानगरोदराश्मरियुतांस्तूनीद्वयारोचकान् २८
ऊरुस्तंभमतिभ्रमं च मनसो बाधिर्यमष्ठीलिकां
प्रत्यष्ठीलकया सहापहरते प्राक्पीतमुष्णाम्बुना २९
हृत्कुक्षिवङ्क्षणकटीजठरान्तरेषु वस्तिस्तनांसफलकेषु च पार्श्वयोश्च
शूलानि नाशयति वातबलासजानि हिङ्ग्वाद्यमाद्यमिदमाश्विनसंहितोक्तम्
३०
धीमानुपाचरेद् गुल्मं प्रत्याख्याय त्रिदोषजम्
सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ३१
शरपुङ्खस्य लवणं पथ्याचूर्णं समं द्वयम्
शाणप्रमाणमश्नीयाच्चूर्णं गुल्मगदापहम् ३२
स्वर्जिका शाणमाना स्यात्तावदेव गुडं भवेत्
उभयोर्वटिकां खादेद् गुल्ममायविनाशिनीम् ३३
पलाशवज्रीशिखरिचिञ्चाऽकतिलनालजाः
यवजः स्वर्जिका चेति क्षारा ह्यष्टौ प्रकीर्त्तिताः

एते गुल्महराः क्षारा अजीर्णस्य च पाचकाः ३४
सामुद्रं सैन्धवं काचंयवक्षारं सुवर्चलम्
टङ्कणं स्वर्जिकाक्षारतुल्यं चूर्णं प्रकल्पयेत् ३५
वज्रीक्षीरैरविक्षीरैरातपे भावयेत् त्र्यहम्
वेष्टयेदर्कपत्रेण रुद्ध्वा भाण्डे पुटे पचेत् ३६
तत्क्षारं चूर्णयेत्पश्चात्त्र्यूषणं त्रिफला तथा
यवानी जीरको वह्निश्चूर्णमेषाञ्च कारयेत् ३७
सर्वचूर्णसमं क्षारं सर्वमेकत्र कारयेत्
तच्चूर्णं टङ्कयुगलं सलिलेन प्रयोजयेत् ३८
गुल्मे शूले तथाऽजीर्णे शोथे सर्वोदरेषु च
मन्दे वह्नावुदावर्त्ते प्लीह्नि चापि परं हितम् ३९
वातेऽधिके जलैः कोष्णैर्हितं पित्तेऽधिके घृतैः
गोमूत्रेण कफाधिक्ये काञ्जिकेन त्रिदोषजे ४०
वज्रक्षार इति ख्यातः प्रोक्तः पूर्वं स्वयम्भुवा
सेवितो हरतेऽजीर्णं तथाऽजीर्णभवान्गदान् ४१
सुवर्चिका टङ्कमिता तत्समानाऽद्रिकाऽपि च
उभे भुञ्जीत युगपद् गुल्मामयनिवृत्तये ४२
शुक्तिचूर्णस्य गुटिकां टङ्कमात्रां सुवेष्टयेत्
गुडेन शाणमानेन तां लिहेद् गुल्मरोगवान् ४३
गुल्मी कुमारिकामांसं कर्षार्द्धगोघृतान्वितम्
गिलेद्व्योषाभयासिन्धुसूक्ष्मचूर्णावधूलितम् ४४
वल्लूरं मूलकं मत्स्यं शुष्कशाकानि वैदलम्
न खादेदालुकं गुल्मी मधुराणि फलानि च ४५
स्निग्धस्विन्नशरीरस्य योज्यं स्नेहविरेचनम्
शताह्वाचिरबिल्वत्वग्दारुभार्गीकणोद्भवः ४६
कल्कः पीतो जयेद् गुल्मं तिलक्वाथेन रक्तजम्
तिलक्वाथो गुडव्योषघृतभार्गीयुतो भवेत् ४७
योनिरक्तभवे गुल्मे नष्टपुष्पेषु योषिताम्
पीतो धात्रीरसो युक्तो मरिचैश्चास्त्रगुल्मनुत् ४८
गुण्डारोचनिकाचूर्णं शर्करामाक्षिकान्वितम्

विदधीताशु गुल्मिन्या मनलसञ्चङ्क्रमाय च ४९
विशेषमपरञ्चाशु शृणु रक्तप्रभेदनम्
पलाशक्षारतोयेन सर्पिः सिद्धं पिबेच्च सा ५०
सक्षारं त्र्यूषणं सर्पिः प्रपिबेदस्रगुल्मिनी ५१
यस्मिन्न च रसक्षीरतोयसाध्यरसादिषु
फेनोद्गारस्य निष्पत्तिर्नष्टदुग्धसमाकृतेः
स एव तस्य पाकस्य कालो नेतरलक्षणः ५२
इति द्वात्रिंशो गुल्माधिकारः समाप्तः ३२

अथ त्रयस्त्रिंशः प्लीहयकृदधिकारः ३३
शोणिताज्जायते प्लीहा वामतो हृदयादधः
रक्तवाहिशिराणां स मूलं ख्यातो महर्षिभिः १
विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक्कफश्च
प्लीहाऽभिवृद्धिं कुरुतः प्रवृद्धौ तं प्लीहसञ्ज्ञं गदमामनन्ति २
वामे स पार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र
मन्दज्वराग्निःकफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः ३
क्लमो भ्रमो विदाहश्च वैवर्ण्यं गात्रगौरवम्
मोहो रक्तोदरत्वञ्च ज्ञेयं रक्तजलक्षणम् ४
सज्वरः सपिपासश्च सदाहो मोहसंयुतः
पीतगात्रो विशेषेण प्लीहा पैत्तिक उच्यते ५
प्लीहा मन्दव्यथः स्थूलः कठिनो गौरवान्वितः
अरोचकेन संयुक्तः प्लीहा कफज उच्यते ६
नित्यमानद्धकोष्ठः स्यान्नित्योदावर्त्तपीडितः
वेदनाभिः परीतश्च प्लीहा वातिक उच्यते ७
दोपत्रितयरूपाणि प्लीहन्यसाध्ये भवन्त्यपि ८
अधो दक्षिणतश्चापि हृदयाद् यकृतः स्थितिः
तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् ९
प्लीहामयस्यहेत्वादि समस्तं यकृदामये
किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः १०
पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः

तथा दुग्धेन पातव्याः पिप्पल्यः प्लीहशान्तये ११
अर्कपत्रं सलवणं पुटदग्धं सुचूर्णितम्
निहन्ति मस्तुना पीतं प्लीहानमतिदारुणम् १२
हिङ्गु त्रिकटुकं कुष्ठं यवक्षारं च सैन्धवम्
मातुलुङ्गरसोपेतं प्लीहशूलहरं भवेत् १३
पलाशक्षारतोयेन पिप्पली परिभाविता
प्लीहगुल्मार्त्तिशमनी वह्निमान्द्यहरी मता १४
रसेन जम्बीरफलस्य शङ्खनाभीरजः पीतमवश्यमेव
शाणप्रमाणं शमयेदशेषं प्लीहामयं कूर्मसमानमाशु १५
शरपुङ्खमूलकल्कस्तक्रेणालोडितः पीतः
प्लीहानं यदि न हरति शैलोऽपि तदा जले प्लवते १६
सुपक्वसहकारस्य रसः क्षौद्रसमन्वितः
पीतः प्रशमयत्येव प्लीहानं नेह संशयः १७
सुस्विन्नं शाल्मलीपुष्पं निशापर्युषितं नरः
राजिकाचूर्णसंयुक्तं खादेत्प्लीहोपशान्तये १८
यवानिकाचित्रकयाव शूकषड्ग्रन्थिदन्तीमगधोद्भवानाम्
चूर्णं हरेत् प्लीहगदं निपीतमुष्णाम्बुना मस्तुसुराऽसवैर्वा १९
प्लीहोद्दिष्टाःक्रियाः सर्वा यकृद्रोगे समाचरेत्
कार्यञ्च दक्षिणे बाहौ तत्र शोणितमोक्षणम् २०
क्षारं विडङ्गकृष्णाभ्यां पूतीकस्याम्बु निःसृतम्
पिबेत्प्रातर्यथावह्नि यकृत्प्लीहप्रशान्तये २१

इति त्रयस्त्रिंशः प्लीहयकृदधिकारः समाप्तः ३३

अथ चतुस्त्रिंशो हृद्रोगाधिकारः ३४

अत्युष्णगुर्वम्लकषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः
सञ्चिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः १
दूषयित्वा रसं दोषा विगुणा हृदयङ्गताः
हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते २
आयम्यते मारुतजे हृदयं तुद्यते तथा
निर्मथ्यते दीर्यते च स्फोटयते पाटयतेऽपि वा ३

तृष्णोष्मदाहचोषाः स्युः पैत्तिके हृदये क्लमः
धूमायनं च मूर्च्छा च क्लेदः शोषो मुखस्य च ४
गौरवं कफसंस्रावोऽरुचिः स्तम्भोऽग्निमार्दवम्
माधुर्यमपि चास्यस्य बलासावतते हृदि ५
विद्यात्त्रिदोषमप्येवं सर्वलिङ्गं हृदामयम् ६
त्रिदोषगेतुहृद्रोगे यो दुरात्मा निषेवते
तिलक्षीरगुडादींश्च ग्रन्थिस्तस्योपजायते ७
मर्मैकदेशे संक्लेदं रसश्चाप्युपगच्छति
संक्लेदात्कृमयश्चास्य भवन्त्युपहतात्मनः ८
उत्क्लेदः ष्ठीवनं तोदः शूलं हृंल्लासकस्तमः
अरुचिः श्यावनेत्रत्वं शोषश्च कृमिजे भवेत् ९
क्लोम्नः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः
कृमिजे तु कृमीणां ये श्लैष्मिकाणां हि ते मताः १०
घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ११
हरीतकीवचारास्ना पिप्पलीनागरोद्भवम्
शटीपुष्करमूलोत्थं चूर्णं हृद्रोगनाशनम् १२
पुटदग्धहरिणशृङ्गं पिष्ट्वा गव्येन सर्पिषा पिबतः
हृत्पृष्ठशूलमचिरादुपैति शान्तिं सुकष्टमपि १३
तैलाज्यगुडविपक्वं चूर्णं गोधूमपार्थोत्थम्
पिबति पयोभुक्स भवति गतसकलहृदामयः पुरुषः १४
गोधूमककुभचूर्णं पक्वमजाक्षीरगव्यसर्पिर्भ्याम्
मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् १५
पार्थस्य कल्केन रसेन सिद्धं शस्तं घृतं सर्वहृदामयेषु १६
घृतं बलानागबलाऽजुनानां क्वाथेन कल्केन च यष्टिकायाः
सिद्धन्तु हन्याद्घृदयामयं हि सवातरक्तक्षतरक्तपित्तम् १७
इति चतुस्त्रिंशोहृद्रोगाधिकारः समाप्तः ३४

अथ पञ्चत्रिंशोमूत्रकृच्छ्राधिकारः ३५
व्यायामतीक्ष्णौषधरुक्षमद्यप्रसङ्गनृत्यद्रुतपृष्ठयानात्

आनूपमत्स्याध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणां तथाऽष्टौ १
पृथङ्मलाः स्वैः कुपिता निदानैः सर्वेऽथ वा कोपमुपेत्य बस्तौ
मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात् २
तीव्रा च रुग्वङ्क्षणवस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात् ३
पीतं सरक्तं सरुजं सदाहं कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ४
वस्तेः सलिङ्गस्य गुरुत्वशोथौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ५
सर्वाणि रूपाणि तु सन्निपाताद्भवन्ति तत्कृच्छ्रतमं हि कृच्छ्रम् ६
मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च ७
शकृतस्तु प्रतीघाताद्वायुर्विगुणतां गतः
आध्मानंवातशूलञ्च मूत्रसङ्गं करोति च ८
शुक्रे दोषैरुपहते मूत्रमार्गं विधाविते
सशुक्रं मूत्रयेत्कृच्छ्राद्बस्तिमेहनशूलवान् ९
अश्मरीहेतु तत्पूर्वं मूत्रकृच्छ्रमुदाहृतम्
अश्मरी शर्करा चैव तुल्यसम्भवलक्षणे
विशेषणं शर्करायाः शृणु कीर्त्तयतो मम
पच्यमानाऽश्मरी पित्ताच्छोष्यमाणा च वायुना
विमुक्तकफसन्धाना क्षरन्ती शर्करा मता १०
हृत्पीडा वेपथुः शूलं कुक्षावग्निश्च दुर्बलः
तथा भवति मूर्च्छा च मूत्रकृच्छ्रञ्च दारुणम् ११
अभ्यञ्जनस्नेहनिरूहवस्तिस्वेदोपनाहोत्तरवस्तिसेकान्
स्थिराऽदिभिर्वातहरैश्च सिद्धान्दद्याद्रसांश्चानिलमूत्रकृच्छ्रे १२
अमृता नागरं धात्री वाजिगन्धा त्रिकराटकः
प्रपिबेद्वातरोगार्त्तः शूलवान्मूत्रकृच्छ्रवान् १३
पुनर्नवैरराडशतावरीभिःपत्तूरवृश्चीरबलाऽश्मभिद्भिः
द्विपञ्चमूलेन कुलत्थकेन यवैश्च तोयोत्क्वथिते कषाये १४
तैलं वराहर्क्षवसाघृतञ्च तैरेवकल्कैर्लवणैश्च सिद्धम्
तन्मात्रयाऽत्र प्रतिहन्ति पीतं शूलान्वितं मारुतमूत्रकृच्छ्रम् १५
सेकावगाहाः शिशिराः प्रदेहा ग्रैष्मो विधिर्वस्तिपयोविकाराः
द्राक्षाविदारीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्याः १६
कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम्

पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम् १७
शतावरीकाशकुशश्वदंष्ट्राविदारिशालीक्षुकसेरुकाणाम्
क्वाथं सुशीतं मधुशर्कराभ्यां युक्तं पिबेत्पैत्तिकमूत्रकृच्छ्रे १८
एर्वारुबीजं मधुकञ्च दार्वी पैत्ते पिबेत्तण्डुलधावनेन
दार्वी तथैवामलकीरसेन  समाक्षिकं पित्तकृते तु कृच्छ्रे १९
हरीतकीगोक्षुरराज वृक्षपाषाणभिद्धन्वयवासकानाम्
क्वाथं पिबेन्माक्षिकसम्प्रयुक्तं कृच्छ्रे सदाहे स रुजे विबन्धे २०
शतावरीकाशकुशश्वदंष्ट्राविदारिकेक्ष्वामलकेषु सिद्धम्
सर्पिः पयो वा सितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम् २१
त्रिकण्टकैरण्डकुशाद्यभीरुकर्कारुकेषु स्वरसेषु सिद्धम्
सर्पिर्गुडार्द्धांशयुतं प्रयोज्यं कृच्छ्राश्मरीमूत्रविघातदोषे
अयं विशेषेण पुनर्विधेयः सर्वाश्मरीणां प्रवरः प्रयोगः २२
क्षारोष्णतीव्रौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहः
तक्रञ्च तिक्तौषधसिद्धतैलान्यभ्यङ्गपानं कफमूत्रकृच्छ्रे २३
मूत्रेण सुरया वाऽपि कदलीस्वरसेन वा
कफकृच्छ्रविनाशाय सूक्ष्मं पिष्ट्वा गुटीं पिबेत् २४
तक्रेण युक्तं शितिमारकस्य बीजं पिबेन्मूत्रविघातहेतोः
पिबेत्तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे २५
त्रिकटु त्रिफला मुस्तंगुग्गुलुञ्च समाक्षिकम्
गोक्षुरक्वाथ संयुक्तं गुटिकां भक्षयेद् बुधः २६
प्रमेहं मूत्रकृच्छ्रञ्च मूत्राघातं तथैव च
अश्मरीं प्रदरञ्चैव नाशयेदविकल्पतः २७
सर्वत्रिदोषप्रभवे च वायोः स्थानानुपूर्व्या प्रसमीक्ष्य कार्यम्
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्पित्ते विरेकः पवने तु वस्तिः २८
बृहतीधावनीपाठायष्टी मधुकलिङ्गकाः
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः २९
गुडेनमिश्रितं क्षीरं कदुष्णं कामतः पिबेत्
मूत्रकृच्छ्रेषु सर्वेषु शर्करावातरोगनुत् ३०
मूत्रकृच्छ्रेऽभिघातोत्थे वातकृच्छ्रक्रिया मता ३१
मद्यं पिबेद्वा ससितं ससर्पिः शृतं पयो वाऽद्धसिताप्रयुक्तम्

धात्रीरसञ्चेक्षुरसं पिबेद्वा कृच्छ्रे सरक्ते मधुना विमिश्रम् ३२
स्वेदचूर्णक्रियाऽभ्यङ्गवस्तयः स्युः पुरीषजे
क्वाथो गोक्षुरबीजस्य यवक्षारयुतः सदा
मूत्रकृच्छ्रं शकृज्जन्म पीतः शीघ्रं नियच्छति ३३
लेहः शुक्रविबन्धोत्थे सशिलाजतु माक्षिकम्
एलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः ३४
मूत्रदोषप्रशुद्ध्यर्थं शुक्रदोषहरञ्च तत्
वृष्यैर्बृंहितधातोश्च विधेयाः प्रमदोत्तमा ३५
सप्तच्छदारग्वधकेवु कैला निम्बः करञ्जः कुटजो गुडूची
साध्या जले तेन पचेद्यवागूं सिद्धं कषायं मधुसंयुतं वा ३६
एर्वारुबीजकल्कश्च श्लक्ष्णपिष्टोऽक्षसंमितः
धान्याम्ललवणैः पेयो मूत्रकृच्छ्रविनाशनः ३७
त्रिकराटकारग्वधदर्भकाश दुरालभापर्वतभेदपथ्याः
निघ्नन्ति पीता मधुनाऽश्मरीन्तु सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम् ३८
निदिग्धिकायाः स्वरसं कुडवं मधुसंयुतम्
मूत्रदोषहरं पीत्वा नरः सम्पद्यते सुखी ३९
कषायोऽतिबलामूलसाधितोऽशेषकृच्छ्रजित्
पीतञ्च त्रपुसीबीजं सतिलाज्यपयोऽन्वितम् ४०
त्रिफलायाः सुपिष्टायाः कल्कं कोलसमन्वितम्
वारिणा लवणीकृत्य पिबेन्मूत्ररुजाऽपहम् ४१
यवारुबूकैस्तृणपञ्चमूलीपाषाणभेदैः सशतावरीभिः
कृच्छ्रेषु गुग्गुल्वभयाविमिश्रैः कृतः कषायो गुडसम्प्रयुक्तः ४२
मूलानि कुशकाशेक्षुशराणां चेक्षुबालिका
मूत्राघाताश्मरीकृच्छ्रे पञ्चमूली तृणात्मिका ४३
गुडमामलकं वृष्यं श्रमघ्नं तर्पणं प्रियम्
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रनिवारणम् ४४
सितातुल्यो यवक्षारः सर्वकृच्छ्रप्रसाधनः
द्राक्षासितोपलाकल्कं कृच्छ्रघ्नं मस्तुना युतम् ४५
विदारि सारिवा छागशृङ्गी वत्सादनी निशा
कृच्छ्रं पित्तानिलाद्धन्ति वल्लीजं पञ्चमूलकम् ४६

एलाऽश्मभेदकशिलाजतुप्पिलीनामेर्वारुबीजलवणोत्तमकुङ्कुमानाम्
चूर्णानि तण्डुलजले लुलितानि पीत्वा प्रत्यग्रमृत्युरपि जीवति मूत्रकृच्छ्री
४७
अयोरजः सूक्ष्मपिष्टं मधुना सह योजितम्
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ४८
पुनर्नवामूलतुलां दशमूलं शतावरीम्
बलां तुरङ्गगन्धां च तृणमूलं त्रिकण्टकम् ४९
विदारिकन्दनागाह्वगुडूच्यतिबलास्तथा
पृथग्दशपलान्भागानपां द्रोणे विपाचयेत् ५०
तेन पादावशेषेण घृतस्यार्धाढकं पचेत्
मधुकं शृङ्गबेरञ्च द्राक्षां सैन्धवपिप्पलीम् ५१
द्विपलांशान्पृथग्दत्वा यवान्याः कुडवं तथा
त्रिंशद्गुडपलान्यत्र तैलस्यैरण्डजस्य च ५२
एतदीश्वरपुत्राणां प्राग्भोजनमनिन्दितम्
राज्ञां राजसमानानां बहुस्त्रीपतयश्च ये ५३
मूत्रकृच्छ्रे कटिस्रस्ते तथा गाढ पुरीषिणाम्
मेढ्रवङ्क्षणशूले च योनिशूले च शस्यते ५४
यथोक्तानाञ्च गुल्मानां वातशोणितिनश्च ये
बल्यं रसायनं श्रीदं सुकुमारकुमारकम् ५५
पुनर्नवाशते द्रोणः प्रदेयोऽन्येऽपि चापरः ५६
इति पञ्चत्रिंशो मूत्रकृच्छ्राधिकारः समाप्तः ३५

अथ षट्त्रिंशो मूत्राघाताधिकारः ३६

जायन्ते कुपितैर्दोषैमूत्राघातास्त्रयोदश
प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकाऽदयः १
रौक्ष्याद्वेगविघाताद्वा वायुर्वस्तौ सवेदनः
मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः २
मूत्रमल्पाल्पमथवा सरुजं सम्प्रवर्त्तते
वातकुण्डलिकां तीव्रां व्याधिं विद्यात्सुदारुणम् ३
आध्मापयन्वस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम्

कुर्यात्तीव्रार्त्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम् ४
वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः
निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ५
मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिनिपीडितः
वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ६
चिरं धारयतो मूत्रं त्वरया न प्रवर्त्तते
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ७
मूत्रस्य वेगेऽभिहते तदुदावर्त्तहेतुकः
अपानः कुपितो वायुरुदरं पूरयेद् भृशम् ८
नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम्
तन्मूत्रजठरं विद्यादधोवस्तिनिरोधजम् ९
वस्तौ वाप्यथवा नाले मणौ वा यस्य देहिनः
मूत्रं प्रवृत्तं सज्जेत सरक्तंवा प्रवाहतः १०
स्रवेच्छनैरल्पमल्पं सरुजं वापि नीरुजम्
विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः ११
रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् १२
अन्तर्बस्तिमुखे वृत्तः स्थिरोऽल्प सहसा भवेत्
अश्मरी तुल्यरुग्गरन्थिर्मूत्रे ग्रन्थिः स उच्यते १३
मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धृतम्
स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्त्तते
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते १४
व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिलावृतम्
वस्तिं मेढ्रं गुदञ्चैव प्रदहत् स्रावयेदधः १५
मूत्रं हारिद्रमथवा सरसं रक्तमेव वा
कृच्छ्रात्पुनः पुनर्जन्तोरुष्णवातं वदन्ति तम् १६
पित्तं कफो द्वावपि वा संहन्यतेऽनिलेन चेत्
कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं स्रवेत् १७
सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च तत्
शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् १८

रूक्षदुर्बलयोर्वातेनोदावर्त्तं शकृद्यदा १९
मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः
विड्गन्धं मूत्रयेत्कृच्छ्राद्विडिवघातं विनिर्दिशेत् २०
द्रुताध्वलङ्घनायासैरभि घातात्प्रपीडनात्
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठिति गर्भवत् २१
शूलस्पन्दनदाहार्त्तो विन्दुं बिन्दुं स्रवत्यपि
पीडितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्त्तिमान् २२
वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम्
पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः २३
तस्मिन् पित्तान्विते दाहः शूलं मूत्रविवर्णता
श्लेष्मणा गौरवं शोथः स्निग्धं मूत्रं घनं सितम् २४
श्लेष्मरुद्धबिलो वस्तिः पित्तोदीर्णो न सिद्ध्यति
अविभ्रान्तबिलः साध्यो न च यः कुण्डलीकृतः
स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च २५
मूत्राघातचिकित्सा
स्नेहस्वेदोपपन्नस्य हितं स्नेहविरेचनम्
दद्यादुत्तरवस्तिं च मूत्राघाते सवेदने २६
नलकुशकाशेक्षुबलाक्वाथं प्रातः सुशीतलंससितम्
पिबतो नश्यति नियतं मूत्रग्रह इत्युवाच कचः २७
गोजीनाम्नोमूलं पलमेकं क्वथितशेषितं पीतम्
क्षिप्त्वा मधु च सिताञ्च प्रणुदति मूत्रस्य संरोधम् २८
गोधापद्या मूलं क्वथितं घृततैलगोरसोन्मिश्रम्
पीतं निरुद्धमचिराद्भिनत्ति मूत्रस्य संघातम् २९
पिबेच्छिलाजतु क्वाथे युक्तं वीरतरादिजे
क्वाथं सपत्रमूलस्य गोक्षुरस्य फलस्य च ३०
पिबेन्मधुसितायुक्तं मूत्रकृच्छ्ररुजाऽपहम् ३१
घनसारस्य चूर्णेन वस्तस्याथाविकाम्बुना
गुण्डयित्वा ध्वजे क्षिप्त्वा मूत्ररोधो जहाति तम् ३२
सदाभद्राऽश्मभिन्मूलं शतावर्याः सचित्रकम्
रोहिणीकोकिलाक्षौ च वचाशैलत्रिकण्टकम् ३३

श्लन्दणपिष्टः सुरापीतो मूत्राघातप्रबाधनः
पिबेद्बर्हिशिखामूलं दुग्धभुक्तराडुलाम्भसा ३४
वस्तिमुत्तरवस्तिं वा सर्वेषामेव दापयेत्
निदिग्धिकायाः स्वरसं पिबेद्वस्त्रात्परिस्रुतम् ३५
जले कुङ्कुमकल्कं वा सत्तौद्रमुषितं निशि
सतैलं पाटलाभस्मत्तारं बद्ध्वा परिस्रुतम् ३६
त्रिकराटकैरराडशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः
गुडप्रगाढं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ३७
सितात्तारान्वितं मूलं वायसीतिलकन्दयोः
कोशकाररसैः पीतं वस्तिकुराडलजिद्भवेत् ३८
शृतशीतपयोऽन्नाशी चन्दनं तराडुलाम्बुना
पिबेत्सशर्करं श्रेष्ठमुष्णवाते सशोणिते ३९
शिलोद्भिदैरराडसमस्थिराभिः पुनर्नवाभीरुरसेषु सिद्धम्
तैलं शृतं त्तीरमथानुपानं कालेषु कृच्छ्रादिषु सम्प्रयोज्यम् ४०
धान्य गोत्तुरकक्वाथकल्कयुक्तं घृतं हितम्
मूत्राघाते मूत्रकृच्छ्रे शुक्रदोषे च दारुणे ४१
पाषाणभेदो वाराही शालिमूलं शरस्तथा
भल्लातकं शिरीषस्य मूलमेषामथाहरेत् ४३
समभागानि सर्वाणि क्वाथयित्वा विचत्तणः
पादशेषकषायेण घृतप्रस्थं विपाचयेत् ४४
कल्कं दत्वाऽथ मतिमान् गिरिजं मधुकं तथा
नीलोत्पलञ्च काकोली बीजं त्रापुषमेव च ४५
कूष्माराडञ्च तथैर्वारुसम्भवञ्च समं भवेत्
उष्णवातं निहन्त्येतद् घृतं भद्रावहं स्मृतम् ४६
विदारी बृषको यूथी मातुलुङ्गी च भूतृणम्
पाषाणभेदः कस्तूरी वसुको वशिरोऽनलः ४७
पुनर्नवा वचा रास्ना बला चातिबला तथा
कशेरुविषशृङ्गाटतामलक्यः स्थिराऽदयः ४८
शरेत्तुदर्भमूलञ्च कुशः काशस्तथैव च
पलद्वयन्तु संहृत्य जलद्रोणे विपाचयेत् ४९

पादशेषे रसे तस्मिन्घृतप्रस्थं विपाचयेत्
शतावर्यास्तथा धात्र्याः स्वरसो घृतसम्मितः ५०
षट्पलं शर्करायाश्च कार्षिकाण्यपराणि च
यष्ट्याह्वं पिप्पलीद्राक्षाकाश्मर्यं सपरुषकम् ५१
एला दुरालभाकौन्तीकुङ्कुमं नागकेशरम्
जीवनीयानि चाष्टौ च दत्वा च द्विगुणं पयः ५२
एतत्सर्पिर्विपक्तव्यं शनैर्मृद्वग्निना बुधैः
मूत्राघातेषु सर्वेषु विशेषात्पित्तजेषु च ५३
शर्कराऽश्मरिशूलेषुशोणितप्रभवेषु च
हृद्रोगे पित्तगुल्मे च वातासृक्पित्तजेषु च ५४
कासश्वासक्षतोरस्कधनुः स्त्रीभारकर्षिते
तृष्णाच्छर्दिमनः कम्पशोणितच्छर्दने तथा ५५
रक्ते यक्ष्मण्यपस्मारे तथोन्मादे शिरोग्रहे
योनिदोषे रजोदोषे शुक्रदोषे स्वरामये ५६
एतत्स्मृतिकरं वृष्यं वाजीकरणमुत्तमम्
पुत्रदं बलवर्णाढ्यं विशेषाद्वातनाशनम् ५७
पानभोजननस्येषु न क्वचित्प्रतिहन्यते
विदारीघृतमित्युक्तं रसायनमनुत्तमम् ५८
पिष्ट्वाऽखुमलमुष्णेन चारनालेन लिप्यते
बद्धमूत्रं निहन्त्याशु तथैव करभीभवम् ५९
स्त्रीणामतिप्रसङ्गेन शोणितं यस्य रिच्यते
मैथुनोपरमश्चास्य बृंहणीयो विधिर्हितः ६०
ताम्रचूडवसातैलं हितं चोत्तरवस्तिषु
स्वगुप्ताफलमृद्वीकाकृष्णेक्षुरसितारजः ६१
समांशमर्धभागानि क्षीरक्षौद्रघृतानि च
सर्वं सम्यग्विमथ्याक्षमात्रं लीढ्वा पयः पिबेत्
हन्ति शुक्रक्षयोत्थांश्च दोषान्वन्ध्यासुतप्रदम् ६२
क्षौद्रार्द्धभागः कर्त्तव्यो भागः स्यात्क्षीरसर्पिषोः ६३
शर्करायाश्च चूर्णं च द्राक्षाचूर्णं च तत्समम्
स्वयं गुप्ताफलञ्चैव तथैवेक्षुरसस्य च ६४

पिप्पलीनां तथा चूर्णं समभागं प्रदापयेत्
तदैकध्यं समानीय खल्ले नातिविमथ्य च ६५
तस्य पाणितलं चूर्णं लिहेत्क्षीरं ततः पिबेत्
एतत्सम्यक् प्रयुञ्जानो योनिदोषात्प्रमुच्यते ६६
कर्पूररसजा युक्ता वस्त्रवर्त्तिः शनैः शनैः
मेढमार्गान्तरे न्यस्ता मूत्राघातं व्यपोहति ६७
मूत्रकृच्छ्रेऽश्मरीरोगे भेषजं यत्प्रकीर्त्तितम्
मूत्राघातेषु कृच्छ्रेषु तत्कुर्याद् देशकालवित् ६८
इतिषट्त्रिंशो मूत्राघाताधिकारः समाप्तः ३६

अथ सप्तत्रिंशोऽश्मरीरोगाधिकारः ३७

वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजा मता
प्रायः श्लेष्माश्रयाः सर्वा अश्मर्यः स्युर्यमोपमाः १
विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा
यदा तदाऽश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः २
नैकदोषाश्रयाः सर्वा अथासां पूर्वलक्षणम्
वस्त्याध्मानं तदासन्नदेशेषु परितोऽतिरुक्
मूत्रे बस्तसगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ३
सामान्यलिङ्गं रुग् नाभिसेवनीवस्तिमूर्द्धसु
विशीर्णधारं मूत्रं स्यात्तया मार्गनिरोधने ४
तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम्
तत्संक्षोभात्क्षते सास्रमायासाच्चातिरुग्भवेत् ५
तत्र वाताद् भृशं चार्त्तो दन्तान्खादति वेपते
मृद्नाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ६
सानिलं मुञ्चति शकृन्मुहुर्मेहति बिन्दुशः
श्यावा रूक्षाश्मरी सा स्यात्सञ्चिता कण्टकैरिव ७
तस्याः पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ८
शुण्ठ्यग्निमन्थपाषाणशिग्रुवरुणगोक्षुरैः
काश्मर्यारग्वधफलैः क्वाथं कृत्वा विचक्षणः ९
रामठक्षारलवणचूर्णं दत्वा पिबेन्नरः

अश्मरीमूत्रकृच्छघ्नं दीपनं पाचनं परम्
हन्यात्कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रजम् १०
एलोपकुल्यामधुकाश्मभेदकौन्तीश्वदंष्ट्रावृषकोरुबूकैः
शृतं पिबेदश्मजतु प्रगाढं सशर्करे चाश्मरिमूत्रकृच्छ्रे ११
वरुणस्य त्वचं श्रेष्ठां शुण्ठीं गोक्षुरसंयुताम्
यवक्षारगुडं दत्वा क्वाथयित्वा पिबेद्धिमम्
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम् १२
पाषाणभेदो वसुको वशिरोऽश्मन्तकस्तथा
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका १३
कपोतवङ्कार्त्तगलकाञ्चनोशीरगुन्द्रकाः
वृक्षादनी भल्लुकश्च वरुणः शाकजं फलम् १४
यवाः कुलत्थाः कोलानि कतकस्य फलानि च १५
ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम्
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु १६
क्षारान्यवागूः पेयाश्चकषायांश्च पयांसि च
भोजनानि प्रकुर्वीत वर्गेऽस्मिन्वातनाशने १७
वीरवृक्षोग्निमन्थश्च काशवृक्षादनीकुशाः
मोरटेन्दीवरीसूर्यभक्तागोक्षुरटुण्टुकाः १८
वसुको वशिरो दर्भशैरीयावश्मभेदकः
गुन्द्रो नलः कुरुण्टश्च गणो वीरतरादिकः १९
अश्मरीशर्कराकृच्छ्रमारुतार्त्तिहरो मतः
बृहद्वाते वीरतरस्तदभावे मतः शरः २०
पित्तेन दह्यते वस्तिः पच्यमान इवोष्मणा
भल्लातकास्थिसंस्थाना रक्ता पीता सिताश्मरी २१
अथ पित्ताश्मरीचिकित्सा
कुशः काशः शरो गुन्द्र इत्कटो मोरटाश्मभित्
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः २२
भल्लुकः पाटला पाठा पत्तूरोऽथ कुरुण्टकः
पुनर्नवा शिरीषश्च क्वथितास्तेषु साधितम् २३
घृतं शिलाऽह्वमधुकैर्बीजैरिन्दीवरस्य च

त्रपुसैर्वारुकादीनां बीजैश्चावापितं शुभम्
भिनत्ति पित्तसंभूतामश्मरीं क्षिप्रमेव च २४
क्षारान्यवागूः पेयाश्च कषायांश्च पयांसि च
भोजनानि च कुर्वीत वर्गेऽस्मिन्पित्तनाशने २५
मधुकः कृतह्रस्वत्वाद्बीजैर्बीजकमुच्यते
शिलाजतु शिलाऽह्व स्यात्पटीरो गुत्थगुन्द्रकौ २६
कुर्यात्क्षीरादिकं क्वाथे तस्मिन्क्षेपमावापकैः
वर्गत्वेन यथालाभं परिभाषा प्रवर्त्तते २७
वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः
अश्मरी महती श्लक्ष्णा मधुवर्णाऽथवा सिता २८
एता भवन्ति बालानां तेषामेव तु भूयसा
आश्रयोपचयाल्पत्वाद् ग्रहणाहरणे सुखाः २९
अथ कफाश्मरीचिकित्सा
गणे वरुणकादौ तु गुग्गुल्वेलाहरेणुभिः
कुष्ठभद्राह्वमरिचचित्रकैः ससुराह्वयैः
एतैः सिद्धमजासर्पिरुषकादिगणेन च ३०
भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव च
शट्यादिस्तेन चात्रेष्टो गणः श्यामाऽदिको बुधः ३१
वरुणार्त्तगलौ शिग्रुस्तर्कारीनक्तमालकौ
मोरटारणिबिल्वाश्च बिम्वीवसुकचित्रकाः ३२
शैरीयो वशिरोऽक्षीवश्चाजशृङ्गी शतावरी
दर्भो बृहतिका व्याघ्री मुनिभिः परिकीर्त्तितः
वरुणादिगणो ह्येष कफमेदोनिवारणः
विनिहन्ति शिरः शूलं गुल्माभ्यन्तरविद्रधीन् ३४
क्षारान्यवागूः पेयाश्च कषायाश्च पयांसि च
भोजनानि च कुर्वीत वर्गेऽस्मिन्कफनाशने ३५
शुक्राश्मरी तु महती जायते शुक्रधारणात् ३६
स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः
शोषयित्वोपसंहृत्य शुक्रं तच्छुक्रमश्मरी ३७
वस्तिरुक्कृच्छ्रमूत्रत्वमुष्कश्वयथुकारिणी

तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते
पीडिते त्ववकाशेऽस्मिन्नश्मर्यैव च शर्करा ३८
सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते ३९
अणुशो वायुना भिन्ना सा तस्मिन्ननुलोमगे
निरेति सह मूत्रेण प्रतिलोमे निरुध्यते
मूत्रस्त्रोतःप्रवृत्ता सा सक्ता कुर्यादुपद्रवान् ४०
दौर्बल्यं सदनं कार्श्यं कुक्षिरोगमथारुचिम्
पाण्डुत्वमुष्णवातञ्च तृष्णां हृत्पीडनं वमिम् ४१
प्रसूननाभिवृषणं बद्धमूत्रं रुजाऽतुरम्
अश्मरी क्षपयत्याशु शर्करा सिकताऽन्विता ४२
शुक्राश्मर्यान्तु सामान्यो विधिरश्मरिनाशनः
यवक्षारगुडोन्मिश्रं रसं पुष्पफलोद्भवम् ४३
पिबेन्मूत्रविबन्धघ्नं शर्कराऽश्मरिनाशनम्
तिलापामार्गकदलीपलाशयवबिल्वजः ४४
क्वाथः पेयोऽविमूत्रेण शर्कराऽश्मरिनाशनः ४५
केबुकाङ्कोलकतकशाकेन्दीवरजैः फलैः
पीतमुष्णाम्बु सगुडं शर्करां पातयत्यधः ४६
पाषाणभिद्गोक्षुरकोरुवूकौ द्वे कण्टकार्ये क्षुरकाह्वमूलम्
दध्ना पिबेत्क्षीरसुपिष्टमेतत् स्याद् भेदनार्थं सिकताऽश्मरीणाम् ४७
यः पिबेद्रजनीं सम्यक् सगुडां तुषवारिणा
तस्याशु चिररूढाऽपि यात्यस्तं मेढ्रशर्करा ४८
पिबतः कुटजं दध्ना पथ्यमन्नञ्च खादतः
निपतन्त्यचिरात्तस्य नियतं मेढ्रशर्कराः ४९
त्रापुसबीजं पयसा पीतं वा नारिकेरजं कुसुमम्
विण्मूत्रशर्करायां भवति सुखी कतिपयैर्दिवसैः ५०
श्वदंष्ट्रा वरुणः शुण्ठीक्वाथं क्षौद्रयुतं पिबेत्
शर्कराऽश्मरिशूलघ्नं मूत्रकृच्छ्रहरं परम् ५१
कूष्माण्डकरसो हिङ्गुयवक्षारसमायुतः
वस्तौ मेढ्रे सशूलघ्नो मूत्रकृच्छ्रहरः परम् ५२
पुनर्नवाऽयो रजनी श्वदंष्ट्रा वरी प्रवालश्च सदर्भपुष्पः

क्षीराम्रमद्येक्षुरसप्रपिष्टो हितो भवेदश्मरिशर्करासु ५३
वरुणत्वक्छिलाभेदशुराठीगोक्षुरकैः कृतः
कषायः क्षारसंयुक्तः शर्कराश्च भिनत्यपि ५४
पञ्चमूल्यास्तृणाख्यायास्तथा गोक्षुरकस्य तु
पृथग्दशपलान्भागाञ्जलद्रोणे विपाचयेत् ५५
तत्सिद्धं मूत्रदोषेषु शर्करास्वश्मरीषु च
चतुर्भागावशिष्टेन घृतप्रस्थं विपाचयेत्
गुडगोक्षुरबीजञ्च कल्कं तत्र प्रदापयेत् ५६
तत्सिद्धंमूत्रदोषेषु शर्करास्वश्मरीषु च
स्नेहने भोजने चैव प्रयोज्यं सर्पिरुत्तमम् ५७
त्वक्पत्रफलमूलस्य वरुणस्य त्रिकराटकात्
कषायेण पचेत्तैलं  वस्तिनाऽस्थापनेन च
शर्कराऽश्मरिशूलघ्नं मूत्रकृच्छ्रात्प्रमुच्यते ५८
कुशाग्निमन्थशैरीयनल दर्भेक्षुगोक्षुराः
कपोतवङ्कावसुकवशि रेन्दीवरीशराः ५९
धातक्यरलुवन्दाकाः कर्णपूराश्मभेदकाः
एषां कल्ककषायाभ्यां सिद्धं तैलं प्रयोजयेत् ६०
पानाभ्यञ्जनयोगेन वस्तिनोत्तरवस्तिना
शर्कराश्मरिरोगेषु मूत्रकृच्छ्रं च दारुणे ६१
प्रदरे योनिशूले च शुक्रदोषे तथैव च
वन्ध्यागर्भप्रदं प्रोक्तं तैलमेतत्कुशादिकम् ६२
नागरवारुणगोक्षुर पाषाणभित्कपोतवङ्कजः क्वाथः
गुडयवशूकविमिश्रः पीतो हन्त्यश्मरीमुग्राम् ६३
त्रिकराटकस्य बीजानां चूर्णं माक्षिकसंयुतम्
अविक्षीरेण सप्ताहं पेयमश्मरिनाशनम् ६४
पिबेद्वरुणजं मूलं क्वाथं तत्कल्कसंयुतम्
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिनाशनः ६५
शृङ्गवेरयवक्षार पथ्याकालीयकान्वितः
दधिमराडो भिनत्त्युग्रामश्मरीमाशु पानतः ६६
पाषाणभेदवरुणगोक्षुरककपोतवङ्कजः क्वाथः

गिरिजतुगुडप्रगाढः कर्कटिकात्रपुसबीजयुतः ६७
पेयोऽश्मरीमवश्यं दुर्भेदामपि भिनत्ति योगवरः
शिखरिणमिव शतकोटिः शतमन्योर्हस्तनिर्मुक्तः ६८
श्रीकरिणीफलबीजं पिष्टं मथितेन यः पुमानद्यात्
शाकमशितमथवाऽस्या हन्याद् रोगाश्मरीपीडाम् ६९
श्वदंष्ट्रैरण्डबीजानि नागरं वरुणत्वचः
एतत्क्वाथवरं प्रातः पिबेदश्मरिनाशनम् ७०
रक्तोद्भवे रुक्षमृणालतालकाशेक्षुबालेक्षुकुशोदकानि
पिबेत्सिताक्षौद्रयुतानि खादेद्विदारिमिक्षुत्रपुसानि चैव ७१
पलान्यष्टौ तु कुर्वीत क्षाराणां वरुणत्वचाम्
तदर्द्धं यावशूकन्तु ततोऽप्यर्द्धं गुडात्स्मृतम् ७२
एकीकृत्य विमृद्यैतत्खादेत्कर्षप्रमाणतः
घर्माम्बुपानतोऽवश्यं कृच्छ्राश्मरिविनाशनम् ७३
वरुणकभस्मपरिस्रुतसलिलं तच्चूर्णं यावशूकयुतम्
क्वथनीयं तत्तावद्यावच्चूर्णत्वमायाति ७४
तद्गुडयुक्तं हन्यात्तदुदारामश्मरीं घोराम्
प्लीहानं गुल्मवरं श्रोण्यां कुक्षौ रुजां तीव्राम् ७५
आमचयं बस्तिगदान्कृच्छ्रं वा वातजं घोरम्
वह्निसदनं सुकष्टामश्ममयीमश्मरीञ्चाशु ७६
नो जग्धं कृमिभिर्घनं सुतरुणं स्निग्धं शुचिस्थानजं
घस्रे पुण्यनिरीक्षिते वरुणकं छित्वा तुलां ग्राहयेत्
संगृह्याशु चतुर्गुणासु विपचेत्पादावशेषं जलं
तत्तुल्येन गुडेन वै दृढतरे भाण्डे पचेत्तत्पुनः ७७
ज्ञात्वैवं घनतां गुडे परिणते प्रत्येकमेषां पलं
शुण्ठ्येर्वारुकबीजगोक्षुरकणापाषाणभिच्छीतलाः
कूष्माण्डात्रपुसाक्षबीजकुनटीवास्तूकशोभाञ्जनैः
द्राक्षैलागिरिजाभयाकृमिहृतां चूर्णीकृतानां क्षिपेत् ७८
पथ्याशी प्रतिवासरं गुडममुं युञ्ज्यात्प्रमाणं नरः
खादेत्तस्य समस्तदोषजनिताश्मर्यः पतन्ति द्रुतम् ७९
कुलत्थसिन्धूत्थविडङ्गसारं सशर्करं शीतलियावशूकम्

बीजानि कूष्माण्डकगोक्षुराभ्यां घृतं पचेत्तद्वरुणस्य तोये ८०
दुःसाध्यसर्वाश्मरिमूत्रकृच्छ्रं मूत्राभिघातञ्च समूत्रबन्धम्
आमूलमेतानि निहन्ति शीघ्रं प्ररूढवृक्षानिव वज्रपातः ८१
शरादिपञ्चमूल्या वा कषायेण पचेद् घृतम्
प्रस्थं गोक्षुरकल्केन सिद्धमद्यात्सशर्करम्
अश्मरीमूत्रकृच्छघ्नं रेतोमार्गरुजाऽपहम् ८२
वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत्
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत् ८३
वरुणं कदलद्यं बिल्वं तृणजं पञ्चमूलकम्
अमृतां चाश्मभेदञ्च बीजञ्च त्रपुसस्यच ८४
शतपर्वा तिलक्षारं पालाशक्षारमेव च
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत् ८५
अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया ८६
जीर्णे चास्मिन्पिबेत्पूर्वं गुडं जीर्णञ्च मस्तु च
अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत् ८७
सैन्धवाद्यन्तु यत्तैलमृषिभिः परिकीर्त्तितम्
तत्तैलं द्विगुणं क्षीरं पचेद्वीरतरादिना ८८
क्वाथेन पूर्वकल्केन साधितन्तु भिषग्वरैः
एतत्तैलवरं श्रेष्ठमश्मरीणां निवारणम् ८९
मूत्राघाते मूत्रकृच्छ्रे पिच्चिते मथिते तथा
भग्ने श्रमाभिपन्ने च सर्वथैव प्रशस्यते ९०
वीरावृक्षाश्म भेदाग्निमन्थश्योनाकपाटलाः
वृक्षादनीसहैरण्ड भल्लूकोशीरपद्मकम् ९१
कुशकाशशरेक्षूणामास्फोताकोकिलाक्षयोः
शतावरी श्वदंष्ट्रा च सेत्कटाह्वयवञ्जुलाः ९२
कपोतवङ्का श्रीपर्णी काश्मरीमूलसंयुता
एतैः कषायैः कल्कैश्च तैलं धीरो विपाचयेत् ९३
वातपित्तविकारेषु वस्तिं दद्याद्विचक्षणः
शर्कराऽश्मरिशूलघ्नं मूत्रकृच्छ्रविनाशनम् ९४
पुनर्नवाऽमृता भीरुसक्षारलवणत्रयैः

शटीकुष्ठवचा मुस्तरास्नाकट्फलपौष्करैः ९५
यवानीहपुषाहिङ्गु शताह्वासाजमोदकैः
विडङ्गातिविषायष्टी पञ्चकोलकसंयुतैः ९६
एतैरक्षसमैः कल्कैस्तैलप्रस्थं विपाचयेत्
गोमूत्रं द्विगुणं देयं काञ्जिकं तद्वदेव तु ९७
पुनर्नवाऽद्यमित्येतत्तैलं पानेन वस्तिना
शर्कराऽश्मरिशूलघ्नं मूत्रकृच्छ्रप्रमोचनम् ९८
कठ्यूरुवस्तिमेढ्रस्य कुक्षिवङ्क्षणसंयुतम्
कफवातामशूलघ्नमन्त्रवृद्धेश्च नाशनम् ९९
ब्रध्नाधिकारनिर्दिष्टं सैन्धवाद्यमिहेष्यते
सर्वदैवोपयोज्यस्तु गणो वीरतरादिकः १००
घृतैः शीतैः कषायैश्च क्षीरैश्चोत्तरवस्तिभिः
बलवत्यो न शाम्यन्ति प्रत्याख्याय समुद्धरेत् १०१
यदृच्छया मूत्रमार्गमायान्त्यस्त्वन्तराश्रिताः
स्रोतसाऽपहरेच्छित्त्वा बडिशेनाथ चोद्धरेत् १०२

इति सप्तत्रिंशोऽश्मरीरोगाधिकारः समाप्तः ३७

अथाष्टत्रिंशत्तमः प्रमेहपिडिकाऽधिकारः ३८

आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि
नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम् १
मेदश्च मांसञ्च शरीरजञ्च क्लेदं कफो वस्तिगतं प्रदूष्य
करोति मेहान्समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि
क्षीणेषु दोषेष्ववकृष्य धातून्सन्दूष्य मेहान्कुरुतेऽनिलश्च २
साध्याः कफोत्था दश पित्तजाः षट् याप्या न साध्याः पवनाच्चतुष्काः
समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते ३
कफश्च पित्तं पवनश्च दोषा मेदोऽस्त्रशुक्राम्बुवसालसीकाः
मज्जारसौजः पिशितञ्च दूष्याः प्रमेहिणां विंशतिरेव मेहाः ४
दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः
दाहश्चिक्कणता देहे तृट् स्वाद्वास्यञ्च जायते ५
सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ६

दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ७
अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम्
मेहत्युदकमेहेन किञ्चिच्चाविलपिच्छलम् ८
इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः
सान्द्रीभवेत्पर्युषितं सान्द्रमेहेन मेहति ९
सुरामेही सुरातुल्यमुपर्यच्छमधोघनम्
संहृष्टरोमा पिष्टेन पिष्टवद् बहुलं सितम् १०
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति
मूर्त्ताणून्सिकता मेही सिकतारूपिणो मलान् ११
शीतमेही सुबहुशो मधुरं भृशशीतलम्
शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छलम् १२
गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् १३
नीलमेहेन नीलाभं कालमेही मसीनिभम्
हारिद्रमेही कटुकंहरिद्रासन्निभं दहत् १४
विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम्
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहिनः १५
वसामेही वसामिश्रं वसाऽभ मूत्रयेन्मुहुः
मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहः १६
कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद् बुधः
हस्ती मत्त इवाजस्रं मूत्रवेगविवर्जितम्
सलसीकं विबद्धञ्च हस्तिमेही प्रमेहति १७
अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् १८
वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः
दाहस्तृष्णाऽम्लको मूर्च्छा विड्भेदः पित्तजन्मनाम् १९
वातजानामुदावर्त्तकम्पहृद्ग्रहलोलताः
शूलमुन्निद्रता शोषःश्वासः कासश्चजायते २०
यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव च

पिडिकापीडितं गाढं प्रमेहो हन्ति मानवम् २१
मूर्च्छाच्छर्दि ज्वरश्वासकासवीसर्पगौरवैः
उपद्रवैरुपेतो यः प्रमेही दुष्प्रतिक्रियः २२
रजः प्रवर्त्ततेयस्मान्मासि मासि विशोधयेत्
सर्वाञ्छरीरदोषांश्च न प्रमेहन्त्यतः स्त्रियः २३
जातः प्रमेहीमधुमेहिनो वा न साध्यरोगः स हि बीजदोषात्
ये चापि केचित्कुलजा विकारा
भवन्ति तांश्चापि वदन्त्यसाध्यान् २४
सर्व एव प्रमेहास्तु कालेनाप्रतिकारिणः
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति च २५
मधुमेहोमधुनिभो जायते स किल द्विधा
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा २६
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन्
क्षणात्क्षीणः क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् २७
मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति
सर्वेऽपि मधुमेहाख्या माधुर्य्याच्च तनोरतः २८
शराविका कच्छपिका जालिनी विनताऽलजी
मसूरिका सर्षपिका पुत्रिणी सविदारिका २९
विद्रधिश्चेति पिडिकाः प्रमेहोपेक्षया दश
सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ३०
अन्तोन्नता च तद्रूपा निम्नमध्या शराविका
गौरसर्षपसंस्थाना तत्प्रमाणा तु सर्षपी ३१
सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः
जालिनी तीव्रदाहा तु मांसजालसमावृता ३२
अवगाढरुजाक्लेदा पृष्ठे वाऽप्युदरेऽपि वा
महती पिडिका नीला सा बुधैर्विनता स्मृता ३३
महत्यल्पचिता ज्ञेया पिडिकाऽपि च पुत्रिणी
मसूरदलसंस्थाना विज्ञेया तु मसूरिका ३४
रक्ताऽसिता स्फोटचिता विज्ञेया त्वलजी बुधैः
विदारीकन्दवद् वृत्ता कठिना च विदारिका ३५

विद्रधेर्लक्षणैर्युक्ता  ज्ञेया विद्रधिका तु सा ३६
ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः ३७
विना प्रमेहमप्येता जायन्ते दुष्टमेदसः
तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहाः ३८
गुदे हृदि शिरस्यंसे पृष्ठे मर्मसु चोत्थिताः
सोपद्रवादुर्बलाग्नेः पिडिकाः परिवर्जयेत् ३९
तृट्शोषमांससंकोचमोहहिक्कामदज्वराः
विसर्पमर्मसंरोधाः पिडिकानामुपद्रवाः ४०
श्यामाककोद्रवोद्दाल गोधूमाश्चणकास्तथा
आढक्यश्च कुलत्थाश्चपुराणा मेहिनां हिताः ४१
मेहिनां तिक्तशाकानिजाङ्गला हरिणाराडजाः
यवान्नविकृतिर्मुद्गाः शस्यन्ते शालिषष्टिकाः ४२
सौवीरकं सुरा तक्रं तैलं क्षीरं घृतं गुडम्
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ४३
तत्रादित एव प्रमेहिणमुपस्निग्धमन्यतमेन  प्रियङ्ग्वादिसिद्धेन तैलेन
वामयेत् प्रगाढं  विरेचयेच्च  विरेचनादनन्तरं सुरसाऽदिक
कषायेणास्थापयेत्  महौषधभद्रदारुमुस्तावापेन मधुसैन्धवयुक्तेनै दह्यमानं
वा न्यग्रोधादिकषायेण निस्तैलेन  वातोत्कटेषु मेहेषु स्नेहपानं विशेषतः
पारिजातजयानिम्बवह्निगायत्रीणां पृथक् ४४
पाठायाः सागुरोः पीताद्वयस्य शारदस्य च
जलेक्षुमद्यसिकताशनैर्ल वणपिष्टकान्
सान्द्रमेहान्क्रमाद्  घ्नन्ति क्वाथाश्चाष्टौ समाक्षिकाः ४५
हरीतकीकट्फलमुस्तलोध्राः पाठाविडङ्गार्जुनधन्वनाश्च
उभे हरिद्रे तगरं विडङ्गं कन्दं विशालाऽजुनदीप्यकाश्च ४६
दार्वी विडङ्गः खदिरो धवश्च सुराह्वकुष्ठागुरुचन्दनानि
दार्व्यग्निमन्थो त्रिफलावचा च पाठा च मूर्वा च तथा श्वदंष्ट्रा  ४७
वचा ह्युशीराणयभया गुडूची वृषं शिवाचित्रकसप्तपर्णाः
पादैः कषायाः कफमेहविज्ञैर्दशोपदिष्टा मधुसम्प्रयुक्ताः ४८
उशीरलोध्रार्जुन चन्दनानामुशीरमुस्तामलकाभयानाम्
पटोलनिम्बामलकामृतानां मुस्ताभयामुष्ककवृक्षकाणाम् ४९

लोध्राम्रकासीसकधातकीनां विश्वार्जुनैलाशिरिषोत्पलानाम्
शिरीषधान्यार्जुनकेशराणां प्रियङ्गुपद्मोत्पलकिंशुकानाम् ५०
अश्वत्थपाठाऽसनवेतसानां कटङ्कटेर्युत्पलमुस्तकानाम्
पैत्तेषु मेहेषु दशोपदिष्टाः कषाययोगा मधुसम्प्रयुक्ताः ५१
कफमेहहरक्वाथसिद्धं सर्पिः कफे हितम्
पित्तमेहघ्ननिर्यूहसिद्धं पित्तहरं घृतम् ५२
कम्पिल्लसप्तच्छदशालजानि बैभीतरोहीतककौटजानि
पटोलकालीयगदागुरूणि क्षौद्रेण लिह्यात्कफपित्तमेही ५३
दूर्वाकसेरुपूतीक कुम्भीकप्लवशैवलम्
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ५४
त्रिफलाऽरग्वधद्राक्षाकषायो मधुसंयुतः
पीतो निहन्ति फेनाभं प्रमेहं नियतं नृणाम् ५५
अश्वत्थाच्चतुरङ्गुल्यान्यग्रोधादेः फलत्रयात्
सरक्तसारमञ्जिष्ठाः क्वाथाः पञ्च समाक्षिकाः
नीलहारिद्रफेनाख्यक्षारमाञ्जिष्ठकाह्वयान् ५६
मधुना त्रिफलाचूर्णमथवाश्मजतूद्भवम्
लौहजं वाभयोत्थं वा लिहेन्मेहनिवृत्तये ५७
कटङ्कटेरीमधुकत्रिफलाचित्रकैः समैः
सिद्धः कषायः पातव्यः प्रमेहाणां विनाशनः ५८
फलत्रिकंदारुनिशां विशालां मुस्तां च निष्क्वाथ्य निशांश कल्कम्
पिबेत्कषायं मधुसम्प्रयुक्तं सर्वप्रमेहेषु समुच्छ्रितेषु ५९
गोभक्षितान्यवान्मूत्रभावितान्केवलानपि
चित्रकोदश्विता खादेन्निम्बमुद्गरसेन वा ६०
भक्षयीताम्बुना मासं प्रमेही यवपिष्टकम्
मेदोघ्ना बद्धमूत्राश्च समाः सर्वेषु धातुषु
यवास्तस्माद्विशिष्यन्ते प्रमेहेषु विशेषतः ६१
त्रिकटु त्रिफला पाठा मूलं शोभाञ्जनस्य च
विडङ्गतण्डुला हिङ्गु तथा कटुकरोहिणी ६२
बृहती कण्टकारी च हरिद्रे द्वे यवानिका
केबुकं शालपर्णी च तथाऽतिविषचित्रकौ ६३

सौवर्चलं जीरकञ्च हपुषा धान्यमेव च
एषां कर्षप्रमाणञ्च श्लन्दणचूर्णञ्च कारयेत् ६४
यवशक्तु पलानाञ्च नवतिं द्वितयाधिकाम्
घृततैलमधूनाञ्च प्रत्येकञ्च पलानि षट् ६५
एभिः कर्षप्रमाणञ्च प्रत्यहं मोदकं सुधीः
भन्नयेन्नाशयेदुग्रान्प्रमेहानतिदारुणान् ६६
न्यग्रोधोदुम्बराश्वत्थश्योनाकारग्वधासनम्
ग्राम्रं कपित्थं जम्बूञ्च प्रियालं ककुभं धवम् ६७
मधूकं मधुकं लोध्रं वरुणं पारिभद्रकम्
पटोलं मेषशृङ्गी च दन्ती चित्रकमाढकी ६८
करञ्जत्रिफलाशक्रभल्लातकफलानि च
एतानि समभागानि सून्दमचूर्णानि कारयेत् ६९
न्यग्रोधाद्यमिदं चूर्णं मधुना सह योजयेत्
फलत्रयरसं चानु पिबेन्मूत्रं विशुद्ध्यति ७०
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च
प्रशमं यान्ति योगेन पिडिका न च जायते ७१
चूर्णानिलोहत्रिफलासितानां न्तौद्रेण लिह्याच्च पृथक् समं वा
मेहान्समस्तानपि नाशयन्ति पीतः कदाचित्स्वरसो गुडूच्याः ७२
त्रिकटु त्रिफलातुल्यं गुग्गुलुञ्च समांशिकम्
गोन्तुरक्वाथसंयुक्तं गुटिकां कारयेद् बुधः ७३
दोषकालबलापेन्ती भन्नयेच्चानुलोमिकीम्
न चात्र परिहारोऽस्ति कर्म कुर्याद्यथेप्सितम् ७४
प्रमेहान्वातरोगांश्च वातशोणितमेव च
मूत्राघातं मूत्रदोषं प्रदरं चाशु नाशयेत् ७५
दाडिमस्य च बीजानि कृमिघ्नस्य च तराडुलाः
रजनी चविकाऽजाजी नागरं त्रिफला कणा ७६
त्रिकराटकस्य च फलं यवानी धान्यकं तथा
वृन्ताम्लचविकालोध्रसिन्धूद्भवसमाहितैः ७७
कल्कैरन्तसमैरेभिर्घृतप्रस्थं विपाचयेत्
भोज्ये पाने प्रदातव्यं सर्वर्त्तुषु च मात्रया ७८

प्रमेहान्विंशतिं चैव मूत्राघातं तथाऽश्मरीम्
कृच्छ्रं सुदारुणञ्चैव हन्यादेव न संशयः ७९
विबन्धानाहशूलघ्नं कामलाज्वरनाशनम्
दाडिमाद्यं घृतं चैतदश्विभ्यां परकीर्त्तितम् ८०
श्वदंष्ट्रा सकणा मुस्ता गुडूची फल्गुपल्लवाः
दर्भाङ्कुरास्तु गण्डीरो रोहिषस्य च पल्लवाः ८१
काला पुनर्नवा श्यामा शारिवा देवदारु च
पिप्पली शृङ्गवेरञ्च विडङ्गं मरिचानि च
पाठा कम्पिल्लकं भार्गी द्वे हरिद्रे निदिग्धिका
एरण्डमूलं दन्ती च चित्रकं कटुरोहिणी ८३
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्
यावन्त्येतानि चूर्णानि तावत्स्याच्चाप्ययोरजः ८४
ततो विडालपदकं पिबेदुष्णेन वारिणा
अलाभे चापि मद्यानां प्रमेहान्हन्तिविंशतिम् ८५
श्वयथुञ्च तथाऽर्शासि पाण्डुरोगं हलीमकम्
उदाराण्यथ शूलानि प्लीहानं चापकर्षति ८६
एभिर्गोमूत्रपिष्टैस्तु गुटिकाः कारयेद्भिषक्
रोगेष्वेतेषु मुख्याः स्युर्बलमांसविवर्द्धनाः ८७
कण्टकार्या गुडूच्याश्च संहरेच्च शतं शतम्
संकुटयोदूखले विद्वांश्चतुर्द्रोणेऽम्भसः पचेत् ८८
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्
त्रिकटुत्रिफलारास्नाविडङ्गान्यथ चित्रकम् ८९
काश्मर्याणाञ्च मूलानि पूतीकस्य त्वगेव च
कलिङ्ग इति सर्वाणि सूक्ष्मपिष्टानि कारयेत् ९०
अक्षमात्रां पिबेत्प्राज्ञः शालिभिः पयसा हि तैः
प्रमेहं मधुमेहञ्च मूत्रकृच्छ्रं भगन्दरम् ९१
आलस्यं चान्त्रवृद्धिञ्च कुष्ठरोगं विशेषतः
क्षयञ्चैव निहन्त्येतन्नाम्ना सिंहामृतं घृतम् ९२
दशमूलं करञ्जौ द्वौ देवदारु हरीतकी
वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम् ९३

सुधानीपकदम्बाश्च बिल्वं भल्लातकानिच
शटी पुष्करमूलं च पिप्पलीमूलमेव च ९४
पृथग्दशपलान्भागानेतास्तोयेऽमरो पचेत्
यवकोलकुलत्थानां प्रस्थं प्रस्थं विपाचयेत् ९५
तेन पादावशेषेण घृतप्रस्थं पचेद्भिषक्
निचुलं त्रिफला भार्गी रोहिषं गजपिप्पली ९६
शृङ्गबेरविडङ्गानि चव्यं कम्पिल्लकं तथा
गर्भेणानेन तत्सिद्धं पाययेत्तु यथाबलम् ९७
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम्
कुष्ठप्रमेहगुल्मांश्च श्वयथुं वातशोणितम् ९८
प्लीहोदराणि चार्शांसि विद्रधिं पिडिकाश्च याः
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति ९९
पृथक्तोयेऽमरो ह्यत्र पचेद् द्रव्याच्छतं शतम्
शतत्रयाधिके तोये व्युत्सर्गः क्रमतो भवेत् १००
अर्जुनपटोलनिम्बैः सवचादीप्यकरसासमञ्जिष्ठैः
भल्लातकागुरुघनैः सगदानलचन्दनोशीरैः १०१
गोक्षुरकसोमवल्कैर्नवपटोलैर्हरिद्रया त्रिफलया
अश्मन्तकार्जुनाभ्यां दीप्यकयुक्तेन चैव लोध्रेण १०२
मञ्जिष्ठाऽतिविषाभ्यां कल्ककषायैः पचेत्तैलम्
कफवातोत्थे मेहे पित्तकृते साधयेत्सर्पिः १०३
सारवर्गकषायं चतुर्थांशावशिष्टमवतार्य परिस्राव्य पुनरपनीय साधयेत्
सिद्ध्यति  चामलकलोध्रप्रियङ्गुदन्तीकृष्णायसताम्रचूर्णान्यावपेत्
तदेतद् दग्धं लेहीभूतमवतार्यानुगुप्तं निदध्यात्
ततो यथायोगमुपयञ्जीत  एष लेहः सर्वमेहानपहन्ति १०४
गोकराटकं सदलमूलफलं गृहीत्वा सङकुट्टितं पलशतं क्वथितं तु तोये
पादस्थितेन सलिलेन पलानि दत्वा पञ्चाशतं तु विपचेदथ शर्करायाः १०५
तस्मिन्घनत्वमुपगच्छति चूर्णितानि दद्यात्पलद्वयमितानि सुभाजनानि
शुराठीकरणामरिचनागदलत्वगेला जातीयकोषककुभत्रपुसीफलानि १०६
वांशीपलाष्टकमिह प्रणिधाय नित्यं लेह्यं तु शुद्धममृतं पलसम्मितन्तु
हन्त्याशु मूत्रपरिदाहविबन्धशुक्रकृच्छ्राश्मरीरुधिरमेहमधुप्रमेहान् १०७

असनश्च प्रियालञ्च शालं खादिरकं तथा
शालवर्गं तथा ग्राह्यं भवेच्चैतद्विचक्षणैः १०८
मधुमेहत्वमापन्नं भिषग्भिः परिवर्जितम्
योगेनानेन मतिमान्प्रमेहिणमुपाचरेत् १०९
मासि शुक्रे शुचौ वाऽपि शैलाः सूर्यांशुतापिताः
जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ११०
शिलाजत्विति विख्यातं महाव्याधिनिवारणम्
त्रप्वादीनां तु लोहानां षण्णामन्यतमञ्च यत् १११
ज्ञेयं स्वगन्धतश्चापि षड्योनिप्रथितं क्षितौ
लोहाद्भवति तद्यस्माच्छिलाजतु जतुप्रभम् ११२
तस्य लोहस्य तद्वीर्यं रसं वापि बिभर्त्ति तत्
त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् ११३
यथा तथा प्रयोगेपि श्रेष्ठे श्रेष्ठगुणाः स्मृताः
तत्सर्वं तिक्तकटुकं कषायानुरसं सरम् ११४
कटुपाक्युष्णवीर्यञ्च शोषणं छेदनं तथा
तत्र यल्लघु कृष्णाभं स्निग्धं निःशर्करञ्च यत् ११५
गोमूत्रगन्धि नीलं वा तत्प्रधानञ्च वक्ष्यते
तद्भावितं सारगणैर्हृतदोषं दिनादितः ११६
पिबेत्सारोदकेनैव श्लक्ष्णपिष्टं यथाबलम्
जाङ्गलेन रसेनाद्यात्तस्मिञ्जीर्णे तु भोजनम् ११७
उपयुज्य तुलामेकाममृतस्यास्य जन्मतः
विजित्य मधुमेहाख्यमातङ्कं रोगकारकम् ११८
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः
शतं शतं तुलायां तु सहस्रं दशतौलिकम् ११९
भल्लातकविधानेन परिहारविधिः स्मृतः
मेहं कुष्ठमपस्मारमुन्मादं श्लीपदं गरम् १२०
शोषं शोफार्शसी गुल्मं पाण्डुतां विषमज्वरम्
व्यपोहत्यचिरात्कालाच्छिलाजतु निषेवितम् १२१
न सोऽस्ति रोगो यं वापि न निहन्याच्छिलाजतु
शर्करा चिरसम्भूतां भिनत्ति च तथाश्मरीम् १२२

भावनालोडने चास्य कर्त्तव्ये भेषजैर्हितैः
एवं च माक्षिकं धातुं तापीजममृतोपमम् १२३
मधुरं काञ्चनाभासमम्लं वा रजतप्रभम्
व्यपोहति जराकुष्ठमेहपाराड्वामयक्षयान् १२४
तद्भावितान्कुलत्थांश्च कपोतांश्च विवर्जयेत् १२५
प्रमेहपिडिकानां प्राक्कार्यं रक्तावसेचनम्
पाटनञ्च विपक्वानां तासां पाने प्रशस्यते १२६
क्वाथो वनस्पतेर्बास्त्यं मूत्रं तीक्ष्णञ्च शोधनम्
एलादिकेन कल्केन तैलं च व्रणरोपणम् १२७
आरग्वधादिना क्वाथं कुर्यादुद्वर्त्तनानि च
शालसारादिना सेकान्भोज्यादींश्चणकादिना १२८
प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलम्
विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते १२९
इत्यष्टत्रिंशः प्रमेहपिडिकाऽधिकारः समाप्तः ३८

अथैकोनचत्वारिंशत्तमः स्थौल्याधिकारः ३९
अव्यायामदिवा स्वप्नश्लेष्मलाहारसेविनः
मधुरोऽन्नरसः प्रायः स्नेहान्मेदो विवर्द्धयेत् १
मेदसावृतमार्गत्वात्पुष्यन्त्यन्ये न धातवः
मेदस्तु चीयते तस्मादशक्तः सर्वकर्मसु २
क्षुद्रश्वासतृषामोहस्वप्नक्रथनसादनैः
युक्तः क्षुत्स्वेददौर्गन्ध्यैरल्पप्राणोऽल्पमैथुनः ३
मेदस्तु सर्वभूतानामुदरे हि व्यवस्थितम्
अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ४
मेदसाऽवृतमार्गत्वाद्वायुः कोष्ठे विशेषतः
चरन्सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ५
तस्मात्स शीघ्रं जरयत्याहारञ्चाभिकाङ्क्षति
विकारांश्चाश्नुते घोरान्कांश्चित्कालव्यतिक्रमात् ६
एतावुपद्रवकरौ विशेषादग्निमारुतौ
एतौ हि दहतः स्थूलं वनं दावानिलौ यथा ७

मेदस्यतीव संवृद्धे सहसैवानिलादयः
विकारान्दारुणान्कृत्वा नाशयन्त्याशु जीवितम् ८
मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ९
स्थूले स्युर्दुस्तराः कुष्ठा विसर्पाः सभगन्दराः
ज्वरातीसारमेहार्शःश्लीपदापचिकामलाः
मेदसः स्वेददौर्गन्ध्याज्जायन्ते जन्तवोऽणवः १०
पुराणाः शालयो मुद्गाः कुलत्थोद्दालकोद्रवाः
लेखना वस्तयश्चैव सेव्या मेदस्विना सदा ११
धूम्रपानं तथा क्रोधो रक्तमोक्षणमेव च
जीर्णे च भोजनं कार्यं यवगोधूमयोःसदा १२
उपवासोऽसुखा शय्या सत्त्वौदार्यं तमोजयः
सन्तर्पणकृतैर्दोषैःस्थौल्याद् युक्त्या विमुच्यते १३
श्रमचिन्ताव्यवायाध्व क्षौद्रजागरणप्रियः
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः १४
सचव्यजीरकव्योषहिङ्गु सौवर्चलानलाः
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः १५
फलत्रयं त्रिकटुकं सतैलं लवणान्वितम्
षण्मासादुपयोगेन कफमेदोऽनिलापहम् १६
विडङ्गं नागरं क्षारः काललोहरजो मधु
यवामलकचूर्णन्तु योगोऽतिस्थौल्यनाशनः १७
मूलं वा त्रिफलाचूर्णं मधुयुक्तं मधूदकम्
बिल्वादिपञ्चमूलस्य प्रयोगः क्षौद्रसंयुतः १८
अतिस्थौल्यहरः प्रोक्तो मण्डकः सेवितो ध्रुवम् १९
कर्कशदलवह्निसलिलं शतपुष्पाहिङ्गुसंयुक्तम्
पिबतो निहन्तिनियतं सर्वभवां मेदसांवृद्धिम् २०
क्षारं वातारिपत्रस्य हिङ्गुयुक्तं पिबेन्नरः
मेदोवृद्धिविनाशाय भक्तं मण्डसमन्वितम् २१
गवेधुकानां पिष्टानां यवानाञ्चाथ सक्तवः
सक्षौद्रत्रिफलाक्वाथः पीतो मेदोहरो मतः २२

गुडूचीत्रिफलाक्वाथस्तथा लोहरजोऽन्वितः
अश्मजं महिषाक्षं वा तेनैव विधिना पचेत् २३
अतिमुक्तबीजमध्यं मधुलीढंहन्त्युदरवृद्धिम्
मधुना चित्रकमूलं तथैव हितभोजनो भुङ्क्ते २४
यद्वोरुवूकमूलं मधुदिग्धं स्थाप्यते निशां सकलाम्
तस्य सलिलस्य पानाज्जठरे वृद्धिः शमं याति २५
प्रातर्मधुयुतं  वारि सेवितं स्थौल्यनाशनम्
उष्णमन्नस्य मराडं वा पिबन्कृशतनुर्भवेत् २६
बदरीपत्रकल्केन पेया काञ्जिकसाधिता
स्थौल्यनुत्स्यादग्निमन्थरसक्वाथः शिलाजतु २७
शैलेयकुष्ठागुरुदेवदारुकौन्तीसमुस्तान्यथ पञ्चपत्रैः
श्रीवासस्पृक्काखरपुष्पदेवपुष्पं तथा सर्वमिदं प्रपिष्य
धत्तूरपत्रस्य रसेन गाढमुद्वर्त्तनं स्थौल्यहरं प्रदिष्टम् २८
अमृतात्रुटिवेल्लवत्सकं कलिपथ्याऽमलकानि गुग्गुलुः
क्रमवृद्धमिदं मधुप्लुतं पिडिकास्थौल्यभगन्दराञ्जयेत् २९
व्योषाग्नित्रिफलामुस्तविडङ्गैर्गुग्गुलं समम्
खादन्सर्वाञ्जयेद् व्याधीन्मेदःश्लेष्मामवातजान् ३०
त्र्यूषणाग्निघनवेल्लवचाभिर्भक्षयन्समघृतं महिषाक्षम्
आशु हन्ति कफमारुतमेदोदोषजान्बलवतोऽपि विकारान् ३१
गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम्
त्रिवृताऽलम्बुषा शुराठी निर्गुराडी चित्रकस्तथा ३२
एषां दशपलान्भागांस्तोये पञ्चाढके पचेत्
पादशेषं ततः कृत्वा कषायमवतारयेत् ३३
पलद्वादशकं देयं रुक्मलोहं सुचूर्णितम् ३४
पुराणसर्पिषः प्रस्थं शर्कराऽष्टपलान्वितम्
पचेत्ताम्रमये पात्रे सुशीते चावदारिते ३५
प्रस्थार्द्धं माक्षिकं देयं शिलाजतु पलद्वयम्
एलात्वचोः पलार्द्धञ्च विडङ्गानि पलत्रयम् ३६
मरिचं चाञ्जनं कृष्णा द्विपलं त्रिफलाऽन्वितम्
पलद्वयन्तु कासीसं सूक्ष्मचूर्णीकृतं बुधैः ३७

चूर्णं दत्वा सुमथितं स्निग्धे भाण्डे निधापयेत्
ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम् ३८
अनुपानं पिबेत्क्षीरं जाङ्गलानां रसं तथा
वातश्लेष्महरं श्रेष्ठं कुष्ठमेहोदरापहम् ३९
कामलां पाण्डुरोगञ्च श्वयथुं सभगन्दरम्
मूर्च्छामोहविषोन्मादगराणि विषमाणि च ४०
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम्
कर्षयेच्चातिमात्रेण कुक्षिं पातालसन्निभम् ४१
बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम्
श्रीकरं पुत्रजननं वलीपलितनाशनम् ४२
नाश्नीयात्कदलीकन्दं काञ्जिकं करमर्दकम्
करीरं कारवेल्लञ्च ककारादि विवर्जयेत् ४३
शालसारादिनिर्यूहं चतुर्थांशावशेषितम्
परिस्रुतं ततः शीतं मधुना मधुरीकृतम् ४४
फाणितीभावमापन्नं गुडं शोधितमेव च
सूक्ष्मपिष्टानि चूर्णानि पिप्पल्यादेर्गणस्य च ४५
एकध्यमावपेत्कुम्भे संस्कृते घृतभाविते
पिप्पलीचूर्णमधुभिः प्रलिप्ते चान्तरे शुचौ ४६
सूक्ष्माणि तीक्ष्णलोहस्य तनुपत्राणि बुद्धिमान्
खदिराङ्गारतप्तानि बहुशः प्रक्षिपेद् बुधः ४७
सुपिधानं ततः कृत्वा यवपल्वे निधापयेत्
मासांस्त्रींश्चतुरो वाऽपि यावद्वा लोहसंक्षयात् ४८
ततो जातरसं जन्तुः प्रातः प्रातर्यथाबलम्
उपयुञ्ज्याद्यथायोग्यमाहारं चास्य कल्पयेत् ४९
एष स्थूलं समाकर्षेन्नष्टस्याग्नेः प्रबोधनः
शोथघ्नः कुष्ठमेहघ्नो गुल्मपाण्ड्वामयापहः ५०
प्लीहोदरहरः शीघ्रं विषमज्वरनाशनः
अभिष्यन्दापहरणे लोहारिष्टो महागुणः ५१
व्योषचित्रकशिग्रूणि त्रिफलां कटुरोहिणीम्
बृहत्यौ द्वे हरिद्रे च पाठामतिविषां स्थिराम्

हिङ्गुकेवुकमूलानि यवानीं धान्यचित्रकम्
सौवर्च्चलमजाजीञ्च हपुषां चेति चूर्णयेत् ५३
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः
शक्तूनां षोडशगुणो भागः सन्तर्पणं पिबेत् ५४
प्रयोगात्त्वस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः
प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ५५
प्लीहा पाराड्वामयः शोथो मूत्रकृच्छ्रमरोचकः
हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः ५६
कृमयो ग्रहणीदोषः श्वैत्र्यं स्थौल्यमतीव च
नराणां दीप्यते वह्निः स्मृतिर्बुद्धिश्च वर्द्धते ५७
त्रिफलातिविषामूर्वात्रि वृच्चित्रकवासकैः
निम्बारग्वधषड्ग्रन्था सप्तपर्णनिशाद्वयैः ५८
गुडूचीन्द्रासुरीकृष्णा कुष्ठसर्षपनागरैः
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम् ५९
पानाभ्यञ्जनगराडूषनस्यवस्तिषु योजितम्
स्थूलतालस्यपाराड्वादीञ्जयेत्कफकृतान्गदान् ६०
चन्दनं कुङ्कमोशीरप्रियङ्गुत्रुटिरोचनाः
तुरुष्कागुरुकस्तूरीकर्पूरा जातिपत्रिका ६१
जातीकङ्कोलपूगानां लवङ्गस्य फलानि च
नलिका नलदं कुष्ठं हरेणु तगरं प्लवम् ६२
नवव्याघ्रनखं स्पृक्का बोलं दमनकं तथा
स्थौणेयकं चोरकञ्च शैलेयं सैलवालुकम् ६३
सरलं सप्तपर्णञ्च लाक्षा तामलकी तथा
लामज्जकं पद्मकञ्च धातक्याः कुसुमानि च ६४
प्रपौराडरीकं कर्चूरं समांशैः शाणमात्रकैः
महासुगन्धमित्येतत्तैलप्रस्थेन साधयेत् ६५
प्रस्वेदजलदौर्गन्ध्यकराडूकुष्ठहरं परम्
अनेनाभ्यक्तगात्रस्तु वृद्धः सप्ततिकोपि वा ६६
युवा भवति शुक्राढ्यः स्त्रीणामत्यन्तवल्लभः
सुभगो दर्शनीयश्च गच्छेच्च प्रमदाशतम् ६७

वन्ध्यापि लभते गर्भं षराढोपि पुरुषायते
अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ६८
इति महासुगन्धि तैलम्
वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः
बिल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः ६९
अलम्बुषाभवं चूर्णं पीतं काञ्जिकसंयुतम्
दौर्गन्ध्यं नाशयत्याशु दुष्टं मेदोभवं नृणाम् ७०
बिल्वशिवा समभागा लेपाद् भुजमूलगन्धमपहरति
परिणतपिडिकाञ्चापि पूतिकरञ्जोत्थबीजं वा ७१
चिञ्चापत्रस्वरसं म्रक्षितकल्कादियोजितं जयति
दग्धहरिद्रोद्वर्त्तनमचिराच्चिरदेहदौर्गन्ध्यम् ७२
शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः
पत्राम्बुलोहाभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ७३
हिलमोचिरसो युक्तश्चूर्णैरुदधिफेनजैः
प्रलेपेन हरत्याशु देहदौर्गन्ध्यमुत्कटम् ७४
हरीतकीं तु सम्पिष्य गात्रमुद्वर्त्तयेन्नरः
पश्चात्स्नानं प्रकुर्वीत देहस्वेदप्रशान्तये ७५
हरीतकी लोध्रमरिष्टपत्रं चूतत्वचो दाडिमवल्कलञ्च
एषोऽङ्गरागः कथितोऽङ्गनानां जम्ब्वाः कषायस्तु नराधिपानाम् ७६
गोमूत्रपिष्टं विनिहन्ति कुष्ठं वर्णोज्ज्वलं गोपयसा च युक्तम्
कक्षादिदौर्गन्ध्यहरं पयोभिः शस्तं वशीकृद्रजनीद्वयेन ७७
बब्बूलस्य दलैः सम्यग्वारिणा परिपेषितैः
गात्रमुद्वर्त्तयेत्पश्चाद्धरीतक्या सुपिष्टया ७८
भूय उद्वर्त्तनं कृत्वा पश्चात्स्नानं समाचरेत्
प्रस्वेदान्मुच्यते शीघ्रं ततस्त्वेवं समाचरेत् ७९
बिल्वाम्रजम्बूफलपूरकाणां पत्रैः कपित्थस्य दलानुमिश्रैः
आपूर्ववत्कर्मविधानयोगैर्वचा विशोध्या वरगन्धहेतोः ८०
पथ्यानखीचन्दनकुष्ठसर्जैः पुनः पुनश्चागुरुशर्कराभ्याम्
धूपो जनानां हृदयापहारी विख्यातनामा मलयानिलोऽयम् ८१
चराडांशुकतिलैर्लोध्र शिरीषोशीरकेशरैः

उद्वर्त्तनं भवेद् ग्रीष्मे स्वेदकर्मनिवारणम् ८२
सुरया सममभयाफलचूर्णं मधुना विलिह्य प्रत्यूषे
स्वेदान्हत्वा लभते पुरुषोप्यत्यन्तसौरभ्यम् ८३
मल्लीकुसुमाभयकरिलेपो घर्मे विचर्चिकादाहे
विचकिलपत्रहरिद्रे पर्कटिपत्रञ्च दूर्वया सहितम् ८४
सम्पिष्य गात्रलेपाद्घर्मविचर्ची शमं याति ८५
हस्तपादस्त्रुतौ योज्यो गुग्गुलः पञ्चतिक्तकः
अशक्तौ पञ्चतिक्ताख्यं घृतं खादेदतन्द्रितः ८६
इत्येकोनचत्वारिंशत्तमः स्थौल्याधिकारो वा मेदोरोगाधिकारः समाप्तः ३९

## अथ चत्वारिंशत्तमः काश्याधिकारः ४०

वातो रुक्षान्नपानानि लङ्घनं प्रमिताशनम्
क्रियाऽतियोगः शोकश्च वेगनिद्राविनिग्रहः १
नित्यं रोगो रतिर्नित्यं व्यायामो भोजनाल्पता
भीतिर्धनादिचिन्ता च काश्यकारणमीरितम् २
शुष्कस्फिगुदरग्रीवा धमनीजालसन्ततिः
त्वगस्थिशोषोऽतिकृशः स्थूलपर्वाननो मतः ३
प्लीहकासक्षयश्वासगुल्मार्शांस्युदराणि च
भृशं कृशं प्रधावन्ति रोगाश्च ग्रहणीमुखाः
कश्चिदन्यः कृशोऽतीव बलवान्दृश्यते तदा ४
आधानसमये यस्य शुक्रभागोऽधिको भवेत्
मेदोभागस्तु हीनः स्यात्स कृशोऽपि महाबलः ५
मेदसस्त्वधिको यस्य शुक्रभागोऽल्पको भवेत्
स स्निग्धोऽपि सुपुष्टोऽपि बलहीनो विलोक्यते ६
रुक्षान्नादिनिमित्ते तु कृशे युञ्जीत भेषजम्
बृंहणं बलकृद् वृष्यं तथा वाजीकरञ्च यत् ७
पीताऽश्वगन्धा पयसाऽर्द्धमासं घृतेन तैलेन सुखाम्बुना वा
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य सस्यस्य यथाऽम्बुवृष्टिः ८
अश्वगन्धस्य कल्केन क्वाथे तस्मिन्पयस्यपि
सिद्धं तैलं कृशाङ्गानामभ्यङ्गादङ्गपुष्टिदम् ९

पुष्टिकृद्बालरोगोक्तमश्वगन्धाघृतं भजेत्
वाजीकरोदितं तद्वदश्वगन्धाघृतादिकम् १०
स्वभावादतिकार्श्योयः स्वभावादल्पपावकः
स्वभावादबलो यश्च तस्य नास्ति चिकित्सितम् ११
इति चत्वारिंशत्तमः कार्श्याधिकारः समाप्तः ४०
अथैकचत्वारिंशत्तम उदराधिकारः ४१
रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि च
अजीर्णान्मलिनैश्चान्नैश्चीयन्ते मलसञ्चयात् १
रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि सञ्चिताः
प्राणानपानान्संदूष्य जनयन्त्युदरं नृणाम् २
आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता
शोथः सदनमङ्गानां सङ्गो वातपुरीषयोः
दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि ३
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः
सम्भवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ४
तत्र वातोदरे शोथः पाणिपान्नाभिकुक्षिषु
कुक्षिपार्श्वोदरकटी पृष्ठरुक्पर्वभेदनम् ५
शुष्ककासोऽङ्गमर्दश्च गुरुतामलसंग्रहः
श्यावारुणत्वगादित्वमकस्माद्ध्रासवृद्धिमत् ६
सतोदभेदमुदरं तनुकृष्णशिराततम्
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ७
वायुश्चात्र सरुक्छब्दो विचरेत्सर्वतो गतिः ८
पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ९
पीतताम्रशिरानद्धं सस्वेदं सोष्म दह्यते
धूमायते मृदुस्पर्शः क्षिप्रपाकं प्रदूयते १०
श्लेष्मोदरेऽङ्गसदनं श्वयथुर्गौरवं तथा
तन्द्रोत्क्लेशोऽरुचिः स्वापः कासः शौक्ल्यं त्वगादिषु ११
उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत्
चिराभिवृद्धि कठिनं शीतस्पर्शं गुरु स्थिरम् १२

स्त्रियोऽन्नपानं नखलोममूत्रविडार्त्तवैर्युक्तमसाधुवृत्ताः
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाच्च १३
तस्याशु रक्तं कुपिताश्च दोषाः कुर्युः सुघोरं जठरं त्रिलिङ्गम्
तच्छीतवाते भृशदुर्दिने च विशेषतः कुप्यति दह्यते च १४
स चातुरो मूर्च्छति हि प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च
दूष्योदरं कीर्त्तितमेतदेव प्लीहोदरं कीर्त्तयता निबोध १५
वर्द्धते प्लीहवृद्ध्या यद्विद्यात्प्लीहोदरं हि तत्
हृद्वामे वर्द्धते पार्श्वे निमित्तं तत्र यस्य यत् १६
प्रवृद्धे प्लीह्नि लिङ्गानि यान्युक्तानि भिषग्वरैः
प्लीहोदरेपि दृश्यन्ते तानि सर्वाणि देहिनाम्
प्लीहोदरस्यैव मेदो यकृद्दाल्युदरं तथा १७
सव्यान्यपार्श्वे यकृति प्रवृद्धे ज्ञेयं यकृद्दाल्युदरं तदेव १८
यस्यान्त्रमन्नैरुपलेपिभिर्वा बालश्मभिर्वा पिहितं यथावत्
सञ्चीयते यस्य मलो नरस्य शनैः शनैः सङ्करवच्च नाड्याम् १९
निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादतिचाल्पमल्पम्
हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति २०
शल्यं तथाऽन्नोपहितं यदन्त्रं भुक्तं भिनत्त्यागतमन्यथा वा
तस्मात्स्रुतोऽन्त्रात्सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः २१
नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यते दाल्यति चातिमात्रम्
एतत्परिस्राव्युदरं प्रदिष्टं क्षतोदरं कीर्त्तयतो निबोध २२
यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथ वा निरूढः
पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दूष्यन्ति हि तद्वहानि २३
स्नेहोपलिप्तेष्वथ वाऽपि तेषु दकोदरं पूर्ववदभ्युपैति
स्निग्धं महत्तत्परिवृत्तनाभि समन्ततः पूर्णमिवाम्बुना च
यथा दृतिः क्षुभ्यति कम्पते च शब्दायते वाऽप्युदकोदरं तत् २४
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम्
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् २५
पक्षाद् बद्धगुदं तूर्ध्वं सर्वं जातोदकं तथा
प्रायो भवत्यभावाय छिद्रान्त्रं चोदरं नृणाम् २६
पयः पूर्णा दृतिरिव क्षोभे शब्दकरं मृदु

अप्रव्यक्तशिराशून्यं नीरार्त्तमुदरं महत् २७
आलस्यमास्यवैरस्यं मूत्रं बहुशकृद् द्रुतम्
जातोदकस्य लिङ्गंस्यान्मन्दाग्निः पाण्डुताऽपि च २८
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम्
बलशोणितमांसाग्निपरिक्षीणञ्च वर्जयेत् २९
पार्श्वभङ्गान्नविद्वेष शोफातीसारपीडितम्
विरिक्तं चाप्युदरिणं  पूर्यमाणं विवर्जयेत् ३०
एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा
निहन्ति वातोदरशोथशूलं क्वाथः समूत्रो दशमूलजश्च ३१
कुष्ठं दन्ती यवक्षारो व्योषं त्रिलवणं वचा ३२
अजाजी दीप्यकं हिङ्गु स्वर्जिकाचव्यचित्रकम्
शुण्ठी चोष्णाम्भसा पीता वातोदररुजाऽपहा ३३
लशुनस्य तुलामेकां जलद्रोणे विपाचयेत्
त्रिकुटु त्रिफला दन्ती हिङ्गुसैन्धवचित्रकम् ३४
देवदारु वचा कुष्ठं मधु शिग्रुः पुनर्नवा
सौवर्चलं विडङ्गानि दीप्यको गजपिप्पली ३५
एतेषां पलिकान्भागांस्त्रिवृतः षट् पलानि च
पिष्ट्वा कषायेणानेन तैलं मृद्वग्निना पचेत् ३६
तत्पिबेत्प्रातरुत्थाय यथाऽग्निबलमात्रया
निहन्ति सकलान् रोगानुदराणि विशेषतः ३७
मूत्रकृच्छ्रमुदावर्त्तमन्त्रवृद्धिं गुदकृमीन्
पार्श्वकुक्षिभवं शूलमामशूलमरोचकम् ३८
यकृदष्ठीलिकानाहान्प्लीहानं चाङ्गवेदनाम्
मासमात्रेण नश्यन्ति ह्यशीतिर्वातजा गदाः ३९
पित्तोदरे तु बलिनं पूर्वमेहं विरेचयेत्
पयसा च त्रिवृत्कल्कै रुबूकस्य शृतेन च ४०
पिप्पल्यादिगणेनाज्यं पाचितं पाययेद्भिषक्
नरं पथ्यभुजं नित्यं कफोदरनिवृत्तये ४१
नागरत्रिफलाकल्कै र्दध्यम्बुपरिपेषितैः
पाचितं तैलमाज्यं वा पिबेत्सर्वोदरेषु च ४२

शालिषष्टिक गोधूमयवनीवारभोजनम्
निरूहो रेचनं श्रेष्ठं सर्वेषु जठरेषु च ४३
ग्रानूपमौदकं मांसं शाकं पिष्टकृतं तिलाः
व्यायामाध्वदिवास्वप्नस्नेहपानानि वर्जयेत् ४४
तथोग्रलवणोष्णानि विदाहीनि गुरूणि च
नाद्यादन्नानि जठरे तोयपानञ्च वर्जयेत् ४५
उदराणां मलाढ्यत्वाद् बहुशः शोधनं हितम्
क्षीरमेरगडजं तैलं पिबेन्मूत्रेण वाऽसकृत् ४६
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम्
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ४७
यवानीहपुषाऽजाजीव्योषयुक्तं कफोदरी
सन्निपातोदरी युक्तं त्रिकटुक्षारसैन्धवैः ४८
यवानी हपुषा धान्यं त्रिफला चोपकुञ्चिका
कारवी पिप्पलीमूलमजगन्धा शटी वचा ४९
शताह्वा जीरकं व्योषं स्वर्णक्षीरी च चित्रकम्
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ५०
विडङ्गञ्च समांशानि दन्त्या भागत्रयं भवेत्
त्रिवृद्विशाला द्विगुणा शातला स्याच्चतुर्गुणा ५१
एष नारायणो नाम्ना चूर्णो रोगगणापहः
एनं प्राप्य निवर्त्तन्ते रोगा विष्णुमिवासुराः ५२
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना
ग्रानद्धवाते सुरया वातरोगे प्रसन्नया ५३
दधिमगडेन विड्भेदे दाडिमाम्बुभिरर्शसि
परिकर्त्तिषु वृक्षाम्लैरुष्णाम्बुभिरजीर्णके ५४
भगन्दरे पागडुरोगे कासे श्वासे गलग्रहे
हृद्रोगे ग्रहणीरोगे कुब्जे मन्देऽनले ज्वरे ५५
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे
यथाऽह स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ५६
स्नुक्क्षीरदन्तीत्रिफलाविडङ्गसिंहीत्रिवृच्चित्रककर्षकर्षम्
घृतं विपक्वं कुडवप्रमाणं तोयेन तस्याक्षमथार्द्धकर्षम् ५७

पीत्वोष्णमम्भोऽनुपिबेद्विरेके पेयां रसं वा प्रपिबेद्विधिज्ञः
नाराचमेतज्जठरामयानां युक्त्योपयुक्तं प्रवदन्ति सन्तः ५८
वज्रारण्ड्याः कर्षमात्रायाः कल्कं दध्यादिवेष्टितम्
निगिलेद्वारिणा नित्यमुदरव्याधिशान्तये ५९
पुनर्नवा दारुनिशा सतिक्ता पटोलपथ्यापिचुमन्दमुस्ताः
सनागराच्छिन्नरुहेति सर्वैः कृतः कषायो विधिना विधिज्ञैः ६०
गोमूत्रयुग्गुग्गुलुना च युक्तः पीतः प्रभाते नियतं नराणाम्
सर्वाङ्गशोथोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति ६१
इत्येकचत्त्वारिंशत्तम उदरोगाधिकारः समाप्तः ४१

अथ द्विचत्वारिंशत्तमः शोथाधिकारः ४२

शुद्ध्यामयाभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा
दध्याममृच्छाकविरोधिपिष्टगरोषसृष्टान्ननिषेवणाच्च १
अर्शांस्यचेष्टा वपुषो ह्यशुद्धिर्मर्माभिघाती विषमा प्रसूतिः
मिथ्योपचारः प्रतिकर्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः २
रक्तपित्तकफान्वायुर्दुष्टो दुष्टान्बहिः शिराः
नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम्
उत्सेधं संहतं शोथं तमाहुर्निचयादतः ३
सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माऽथ शिरातनुत्वम्
सलोमहर्षञ्च विवर्णतां च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ४
चरस्तनुत्वक्परुषोऽरुणोऽसितः प्रसुप्तिहर्षार्त्तियुतोऽनिमित्ततः
प्रशाम्यति प्रोन्नमति प्रपीडितो दिवाबली स्याच्छ्वयथुः समीरणात् ५
मृदुः सगन्धाऽसितपीतरागवान् भ्रमज्वरस्वेदतृषामदान्वितः
यस्तूष्यते स्पर्शरुगक्षिरागवान्स पित्तशोथो भृशदाहपाकवान् ६
गुरुः स्थिरः पाण्डुररोचकान्वितः प्रसेकनिद्रावमिवह्निमान्द्यकृत्
सकृच्छ्रजन्मप्रशमो निपीडितो नचोन्नमेद्रात्रिबली कफात्मकः ७
निदानाकृतिसंसर्गाज्ज्ञेयः शोथो द्विदोषजः ८
सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः ९
अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः १०

रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ११
विषजः सविषप्राणिपरिसर्पणमूत्रणात्
दंष्ट्रादन्तनखाघातादविषप्राणिनामपि १२
विरामूत्रशुक्रोपहतमलवद्वस्तुसङ्करात्
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात्
मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः १३
दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशये स्थिताः
पित्ताशयस्था मध्ये तु वर्चः स्थानगतास्त्वधः
कृत्स्नं देहमनुप्राप्य कुर्युः सर्वसरन्तथा १४
छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च
सप्तकोऽय सदौर्बल्यः शोथस्यैते उपद्रवाः १५
श्वासः पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च
यस्य चान्ने रुचिर्नास्ति शोथिनं तं विवर्जयेत् १६
यो मध्यदेशे श्वयथुः कष्टः सर्वाङ्गगश्च यः
अर्द्धाङ्गेऽरिष्टभूतः स्याद्यश्चोर्ध्वं परिसर्पति १७
अनन्योपद्रवकृतः शोथः पादसमुत्थितः
पुरुषं हन्ति नारीन्तु मुखजो बस्तिजो द्वयम् १८
शुगठीपुनर्नवैरगडपञ्चमूलीशृतं जलम्
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे १९
पटोलत्रिफलाऽरिष्टदार्वीक्वाथः सगुग्गुलुः
तद्वत्पित्तकृतं शोथं हन्ति श्लेष्मोद्भवं तथा २०
मिश्रे मिश्रक्रमं कुर्यात्सर्वजे सर्वमेव हि
बिल्वपत्ररसं पूतं सोषणं त्रिभवे पिबेत् २१
शोथे त्वागन्तुजे कुर्यात्सेकलेपादि शीतलम्
भल्लातक्या हरेच्छोथं सतिला कृष्णमृत्तिका २२
महिषीक्षीरसंपिष्टैर्नवनीतसमन्वितैः
तिलैर्लिप्तः शमं याति शोथो भल्लातकोत्थितः २३
यष्टीदुग्धतिलैर्लेपो नवनीतेन संयुतः
शोथमारुष्करं हन्ति चूर्णैः शालदलस्य च २४

महिष्या नवनीतं वा लेपाद् दुग्धतिलान्वितम् २५
पथ्यानिशाभार्ग्यमृताऽग्निदार्वीपुनर्नवादारुमहौषधानाम्
क्वाथः प्रसह्योदरपाणिपादमुखाश्रितं हन्त्यचिरेण शोथम् २६
फलत्रिकोद्भवं क्वाथं गोमूत्रेणैव साधितम्
वातश्लेष्मोद्भवं शोथं हन्याद् वृषणसम्भवम् २७
वृश्चीरदेवद्रुमनागरैर्वा दन्तीत्रिवृत्त्र्यूषणचित्रकैर्वा
दुग्धं सुसिद्धं विधिना निपीतं गीतं परं शोथहरं भिषग्भिः २८
सेकस्तथार्कवर्षाभूनिम्बक्वाथेन शोथहृत्
गोमूत्रेणापि कुर्वीत सुखोष्णेनावसेचनम् २९
पुनर्नवा दारु शुण्ठी शिग्रुः सिद्धार्थकस्तथा
अम्लपिष्टः सुखोष्णोऽय प्रलेपः सर्वशोथहृत् ३०
गुडार्द्रकं वा गुडनागरं वा गुडाभयां वा गुडपिप्पलद्यं वा
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पत्तमथापि मासम् ३१
शोथप्रतिश्यायगलास्यरोगान्सश्वासकासारुचिपीनसादीन्
जीर्णज्वरार्शोग्रहणीविकारान्हन्यात्तथान्यान्कफवातरोगान् ३२
विश्वं गुडेन तुल्यं वृश्चीररसानुपानमभ्यस्तम्
विनिहन्ति सर्वशोथं घनवृन्दं चण्डवायुरिव ३३
कणानागरजं चूर्णं सगुडं शोथनाशनम्
आमाजीर्णप्रशमनं शूलघ्नं बस्तिशोधनम् ३४
गुडात्पलत्रयं ग्राह्यं शृङ्गबेरपलत्रयम्
शृङ्गबेरसमा कृष्णा लोहविट्तिलयोः पलम्
चूर्णमेतत्समुद्दिष्टं सर्वश्वयथुनाशनम् ३५
माणकक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्
एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति ३६
शुष्कमूलकवर्षा भूदारुरास्नामहौषधैः
पक्वमभ्यञ्जनं तैलं सशूलं श्वयथुं हरेत् ३७
इति द्विचत्वारिंशत्तमः शोथाधिकारः समाप्तः ४२

अथ त्रिचत्वारिंशत्तमो वृद्धिब्रध्नाधिकारः ४३
दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः

मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलः १
वृद्धिं करोति कोषस्यफलकोषाभिवाहिनीः
रुद्ध्वा रुद्धगतिर्वायुर्धमनीर्मुष्कगामिनीः २
वातपूर्णदृतिस्पर्शो रुक्षो वातादहेतुरुक् ३
पक्वोदुम्बरसङ्काशः पित्ताद् दाहोष्मपाकवान् ४
कफाच्छीतो गुरुः स्निग्धः कण्डूमान्कठिनोऽल्परुक् ५
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः ६
कफवन्मेदसो वृद्धिर्मृदुस्तालफलोपमः ७
मूत्रधारणशीलस्य मूत्रजः  स तु गच्छतः
अम्भोभिः पूर्णदृतिवत्क्षोभं याति सरुङ् मृदुः
मूत्रकृच्छ्रमधः कुर्यात्सञ्चलं फलकोषयोः ८
वातकोपिभिराहारैः शीततोयावगाहनैः
धारणेरणभाराध्व विषमाङ्गप्रवर्त्तनैः
क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्
कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ९
उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीं स वायुः
प्रपीडितोऽन्त स्वनवान्प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः १०
यस्यान्त्रावयवाश्लेषो मुष्कयोर्वातसञ्चयात्
अन्त्रवृद्धिरसाध्योऽय वातवृद्धिसमाकृतिः ११
अत्यभिष्यन्दिगुर्वन्न शुष्कपूत्यामिषाशनात्
करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु
ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नेति विनिर्दिशेत् १२
वृद्धावत्यशनं मार्गमुपवासं गुरूणि च
वेगाघातं पृष्ठयानं व्यायामं मैथुनं त्यजेत् १३
वातवृद्धौ पिबेत् स्निग्धं यथाप्राप्तं  विरेचनम्
सक्षीरञ्च पिबेत्तैलं मासमेरण्डसम्भवम् १४
गुग्गुल्वेरण्डजं तैलं गोमूत्रेण पिबेन्नरः
वातवृद्धिं जयत्याशु चिरकालानुबन्धिनीम् १५
पित्तग्रन्थिक्रमेणैव पित्तवृद्धिमुपाचरेत्

जलौकाभिर्हरेद्रक्तं वृद्धौ पित्तसमुद्भवे १६
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम्
क्षीरपिष्टं प्रलेपेन दाहशोथरुजाऽपहम् १७
त्रिकटुत्रिफलाक्वाथं सक्षारलवणं पिबेत्
विरेचनमिदं श्रेष्ठं कफवृद्धिविनाशनम् १८
लेपनाः कटुतीक्ष्णोष्णाः स्वेदनं रूक्षमेव च
परिषेकोपनाहौ च सर्वमुष्णमिहेष्यते १९
मुहुर्मुहुर्जलौकाभिः शोणितं रक्तजे हरेत्
पिबेद्विरेचनं वाऽपि शर्कराक्षौद्रसंयुतम् २०
शीतमालेपनं शस्तं सर्वपित्तहरं तथा
पित्तवृद्धिक्रमं कुर्यादामे पक्वे च रक्तजे २१
स्विन्नं मेदः समुत्थन्तु लेपयेत्सुरसाऽदिना
शिरोविरेचनद्रव्यैः सुखोष्णैर्मूत्रसंयुतैः २२
संस्वेद्य मूत्रप्रभवं वस्त्रपटटेन वेष्टयेत्
सीवन्याः पार्श्वतोऽधस्ताद्विध्येद् ब्रीहिमुखेन वै २३
मुष्ककोषमगच्छन्त्या मन्त्रवृद्धौ विचक्षणः
वातवृद्धिक्रमं कुर्यात्स्वेदं तत्राग्निना हितम् २४
तैलमेरण्डजं पीत्वा बलासिद्धं यथोचितम्
आध्मानशूलोपचितामन्त्रवृद्धिं जयन्नरः २५
रास्नायष्टयमृतैरण्डबलाऽरग्वधगोक्षुरैः
पटोलेन वृषेणापि विधिना विहितं शृतम्
रुवुतैलेन संयुक्तमन्त्रवृद्धिं व्यपोहति २६
गन्धर्वहस्त तैलेन क्षीरेण विहितं शृतम्
विशालामूलजं चूर्णं वृद्धिं हन्ति न संशयः २७
वचासर्षपकल्केन प्रलेपः शोथनाशनः
शिग्रुत्वक्सर्षपैर्लेपः शोथश्लेष्मानिलापहः २८
शुद्धसूतं तथा गन्धं मृतान्येतानियोजयेत्
लोहं वङ्गं तथा ताम्रं कांस्यञ्चाथ विशोधितम् २९
तालकं तुत्थकञ्चापि तथा शङ्खवराटकम्
त्रिकटु त्रिफलां चव्यं विडङ्गं वृद्धदारकम् ३०

कर्चूरं मागधीमूलं पाठां सहवुषां वचाम्
एलाबीजं देवकाष्ठं तथा लवणपञ्चकम् ३१
एतानि समभागानि चूर्णयेदथ कारयेत्
कषायेण हरीतक्या वटिकां टङ्कसम्मिताम् ३२
एकां तां वटिकां यस्तु निगिलेद्वारिणा सह
अराडवृद्धिरसाध्याऽपि तथ्यं नश्यति सत्वरम् ३३
भृष्टश्चैरराडतैलेन सम्यक्कल्कोऽभयाभवः
कृष्णासैन्धवसंयुक्तो ब्रध्नरोगहरः परः ३४
अजाजी हवुषा कुष्ठं गोमेदं बदरान्वितम्
काञ्जिकेन तु सम्पिष्टं तल्लेपो ब्रध्नजित्परः ३५
इति त्रिचत्वारिंशत्तमो वृद्धिब्रध्नाधिकारः समाप्तः ४३

अथ चतुश्चत्वारिंशत्तमो गलगराडगराडमाला
ग्रन्थ्यर्बुदाधिकारः ४४

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले
महान्वा यदिवा ह्रस्वो गलगराडं तमादिशेत् १
वातः कफश्चापि गले प्रदुष्टौ मन्ये तु संश्रित्य तथैव मेदः
कुर्वन्ति गराडं क्रमतः स्वलिङ्गैः समाचितं तं गलगराडमाहुः २
तोदान्वितः कृष्णशिराऽवनद्धः श्यावारुणो वा पवनात्मकस्तु
पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात्कदाचित्
वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः ३
स्थिरः सवर्णो गुरुरुग्रकराडूः शीतो महांश्चापि कफात्मकस्तु
चिराच्च वृद्धिं भजते चिराद्वा प्रपच्यते मन्दरुजः कदाचित् ४
माधुर्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः ५
स्निग्धो मृदुः पाराडुरनिष्टगन्धो मेदोऽन्वितः कराडुयुतोऽरुजश्च
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेऽणुशब्दं कुरुते च नित्यम् ६
कृच्छ्राच्छ्वसन्तं मृदु सर्वगात्रं संवत्सरातीतमरोचकार्त्तम्
क्षीणञ्च वैद्यो गलगराडयुक्तं भिन्नस्वरं नैव नरं चिकित्सेत् ७
कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु

मेदः कफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गण्डः ८
ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये
कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति केचित् ९
साध्या स्मृता पीनसपार्श्वशूलकासज्वरच्छर्दियुता त्वसाध्या १०
वातादयो मांसमसृक्प्रदुष्टाः सन्दूष्य मेदश्च तथा सिराश्च
वृत्तोन्नतं विग्रथितन्तु शोथं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ११
आयम्यते वृश्च्यति तुद्यते च प्रभ्रश्यते मथ्यति भिद्यते च
कृष्णो मृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् १२
दन्दह्यते धूप्यति चूष्यते च पापच्यते प्रज्वलतीव चापि
रक्तः सपीतोऽप्यथवाऽपि पित्ताद्भिन्नःस्रवेद् दुष्टमतीव चास्रम् १३
शीतोऽविवर्णोऽल्परुजोऽतिकण्डूः पाषाणवत्संहननोपपन्नः
चिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनञ्च पूयम् १४
शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महान् कण्डुयुतोऽरुजश्च
मेदः कृतो गच्छति चात्र भिन्नो पिण्याकसर्पिःप्रतिमन्तु मेदः १५
व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुश्च शिराप्रतानम्
सङ्कोच्य सम्पीड्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम् १६
ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च
अरुक्स एवाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः १७
गात्रप्रदेशे क्वचिदेव दोषाः सम्मूर्च्छिता मांसमसृक्प्रदूष्य
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम्
कुर्वन्ति मांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति १८
वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च
तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति १९
दोषः प्रदुष्टो रुधिरं सिराश्च सङ्कोच्य सम्पीड्य ततस्त्वपाकम्
सास्रावमुन्नह्यति मांसपिण्डं मासाङ्कुरैरावृतमाशु वृद्धिम् २०
स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं तु
रक्तक्षयोपद्रवपीडितत्वात्पाण्डुर्भवेदर्बुदपीडितस्तु २१
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं समुपैति शोथम्
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् २२
प्रदुष्टमांसस्य नरस्य गाढमेतद्भवेन्मांसपरायणस्य २३

यज्जायतेऽन्यात्खलु पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः
यद् द्वन्द्वजातं युगपत्क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् २४
मांसार्बुदं त्वेतदसाध्यमाहुः साध्येष्वपीमानि विवर्जयेच्च
सम्प्रस्नुतं मर्मसु यच्च जातं स्रोतःसु वा यत्तु भवेदचाल्यम् २५
न पाकमायान्ति कफाधिकत्वान्मेदोबहुत्वाच्च विशेषतस्तु
दोषस्थिरत्वाद् ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु २६
सर्षपाञ्छिग्रुबीजानि शराबीजातसीयवान्
मूलकस्य च बीजानि तक्रेराम्लेन पेषयेत् २७
गलगराडगराडमालाग्रन्थयश्चैव दारुणाः
प्रलेपादेव नश्यन्ति विलयं यान्ति सत्वरम् २८
रद्मोघ्नतैलयुक्तेन जलकुम्भीकभस्मना
लेपनं गलगराडस्य चिरोत्थस्यापि शस्यते २९
श्वेतापराजितामूलं प्रातः पिष्ट्वा पिबेन्नरः
सर्पिषा नियताहारो गलगराडप्रशान्तये ३०
तिक्तालाबुफले पक्वे सप्ताहमुषितं जलम्
सद्यः स्याद्गलगराडघ्नं पानात् पथ्यान्नसेविनाम् ३१
तैलं पिबेद्वाऽमृतवल्लिनिम्बहिंस्राऽभयावृद्मकपिप्पलीभिः
सिद्धं बलाभ्यां सह देवदारुणा हिताय नित्यं गलगराडरोगी ३२
यवमुद्गपटोलादिकटु रूद्मान्नभोजनम्
वमनं रक्तमोद्मञ्च गलगराडे प्रयोजयेत् ३३
दापयेत्प्रच्छनान्यत्र गराडगोपालिकोद्भवः
प्रलेपस्त्वनुभूतोऽय बहुधा बहुभिर्जनैः ३४
लवणं जलकुम्भीञ्च कराचूर्णेन संयुतम्
प्रभाते नित्यमश्नीयाद्गलगराडप्रशान्तये ३५
काञ्चनारत्वचः क्वाथः शुराठीचूर्णेन संयुतः
माद्मिकाढ्यः सकृत्पीतः क्वाथो वरुरामूलजः ३६
गराडमालां हरत्याशु चिरकालानुबन्धिनीम् ३७
पलमर्द्धपलञ्चापि पिष्टां तराडुलवारिणा
काञ्चनारत्वचं पीत्वा गराडमालां व्यपोहति ३८
काञ्चनारस्य गृह्णीयात्त्वचं पञ्चपलोन्मिताम्

नागरस्य कणायाश्च मरिचस्य पलं पलम् ३९
पथ्याबिभीतधात्रीणां पलमर्द्धं पृथक्पृथक्
वरुणस्याक्षमेकं च पत्रकैलात्वचां पुनः ४०
टङ्कं टङ्कं समादाय सर्वाण्येकत्र चूर्णयेत्
यावच्चूर्णमिदं सर्वं तावानेवात्र गुग्गुलुः ४१
संकुटच सर्वमेकत्र पिण्डं कृत्वा विधारयेत्
गुटिकाः शाणिकाः कृत्वा प्रभाते भक्षयेन्नरः ४२
गलगण्डं जयत्युग्रमपचीमर्बुदानि च
ग्रन्थीन्व्रणानि गुल्मांश्च कुष्ठानि च भगन्दरम् ४३
प्रदेयश्चानुपानार्थं क्वाथो मुण्डितिकाभवः
क्वाथः खदिरसारस्य क्वाथः कोष्णोऽभयाभवः ४४
चक्रमर्दकमूलस्य पलकल्के विपाचयेत्
केशरागरसे तैलं कटुकं मृदुनाऽग्निना ४५
पादांशिकं विनिक्षिप्य सिन्दूरमवतारयेत्
एतत्तैलं निहन्त्याशु गण्डमालां सुदारुणाम् ४६
गुञ्जामूलफलैस्तैलं विपक्वं द्विगुणाम्भसा
हरेदभ्यङ्गनस्याभ्यां गण्डमालां सुदारुणाम् ४७
चन्दनं साभया लाक्षा वचा कटुकरोहिणी
एतैस्तैलं शृतं पीत्वा समूलामपचीं हरेत् ४८
व्योषं बिडङ्गं मधुकं सैन्धवं देवदारु च
तैलमेभिः शृतं नस्यात्सकृच्छ्रामपचीं हरेत् ४९
स्वर्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः
एतेन विहितो लेपो हन्ति ग्रन्थिं तथाऽबुदम् ५०
ग्रन्थिर्न यो नश्यति भेषजेन निष्काश्य तं शस्त्रचिकित्सकेन
जात्यादिपक्वेन घृतेन वैद्यो व्रणेन चान्येन च सच्चिकित्सेत् ५१
ग्रन्थिमुद्धृत्य तत्रापि व्रणोक्तं क्रममाचरेत्
शिराग्रन्थिं विहायान्ये शेषे शस्त्रं प्रयुज्यते ५२
ग्रन्थ्यर्बुदानां न यतो विशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः
अतश्चिकित्सेद्भिषगर्बुदानि विधानविद् ग्रन्थिचिकित्सितेन ५३
हरिद्रालोध्रपत्राङ्गगृह धूममनःशिलाः

मधुप्रगाढो लेपोऽय मेदोऽबुदहरः परः ५४
मूलकस्य कृतः क्षारो हरिद्रायास्तथैव च
शङ्खचूर्णेन संयुक्तो लेपः सिद्धोऽबुदापहः ५५
वटदुग्धकुष्ठरोमकलिप्तं बद्धं वटस्य पत्रेण
अध्यस्थि सप्तरात्रान्महदप्युपशान्तिमर्बुदं गच्छेत् ५६
शिग्रुमूलकयोर्बीजं रक्षोघ्नं सुरसा यवम्
तक्रेणाश्वरिपुं पिष्ट्वा लिम्पेदर्बुदशान्तये ५७
इति चतुश्चत्वारिंशत्तमो गलगरडगरडमालाग्रन्थ्यर्बुदाधिकारः समाप्तः ४४

अथ पञ्चचत्वारिंशत्तमः श्लीपदाधिकारः ४५

पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः १
यः सज्वरो बङ्क्षणजो भृशार्त्तिः शोथो नृणां पादगतः क्रमेण
तच्छ्लीपदं स्यात्करकर्णनेत्रशिश्नौष्टनासास्वपि केचिदाहुः २
वातजं कृष्णरूक्षं हि स्फुटितं तीव्रवेदनम्
अनिमित्तरुजश्चास्य बहुशो ज्वर एव च ३
पित्तजं पीतसंकाशं दाहज्वरयुतं भृशम्
श्लैष्मिकन्तुभवेत्स्निग्धं श्वेतं पाराडु गुरु स्थिरम् ४
त्रीरयप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात्
गुरुत्वञ्च महत्वञ्च यस्मान्नास्ति विना कफात् ५
वल्मीकमिव सञ्जातं करटकैरुपचीयते
अब्दात्मकं महत्तत्तु वर्जनीयं विशेषतः ६
यच्छ्लैष्मिकाहारविहारजातैर्जातं तथा भूरिकफस्य पुंसः
सास्त्रावमत्युन्नतसर्वलिङ्गं सकराडुकं चापि विवर्जनीयम् ७
लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ८
सिद्धार्थशोभाञ्जनदेवदारुविश्वौषधैर्मूत्रयुतैः प्रलिम्पेत्
पुनर्नवानागरसर्षपाणां कल्केन वा काञ्जिकमिश्रितेन ९
धत्तूरैररगडनिर्गुराडी वर्षाभूशिग्रुसर्षपैः
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् १०

असाध्यमपि यात्यस्तं श्लीपदं चिरकालजम्
मूलेन सहदेवायास्तालमिश्रेण लेपनात् ११
सप्तताम्बूलपत्राणां कल्कं तप्तेन वारिणा
संसृष्टं लवणोपेतं सेवितं श्लीपदं हरेत् १२
शाखोटवल्कलक्वाथं गोमूत्रेण युतं पिबेत्
श्लीपदानां विनाशाय मेदोदोषनिवृत्तये १३
रजनीं गुडसंयुक्तां गोमूत्रेण पिबेन्नरः
वर्षाभूत्रिफलाचूर्णं पिप्पल्या सह योजितम्
सक्षौद्रं श्लीपदे लिह्याच्चिरोत्थं श्लीपदं जयेत्
गन्धर्वतैलसिद्धां हरीतकीं गोऽम्बुना पिबेन्नित्यम्
श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण १५
इति पञ्चचत्वारिंशत्तमः श्लीपदाधिकारः समाप्तः ४५

अथ षट्चत्वारिंशत्तमो विद्रध्यधिकारः ४६
त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः
दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् १
महामूलं रुजावन्तं वृत्तं वाऽप्यथ वाऽयतम्
स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः २
विद्रधिषड्विधत्वं विवृणोति
पृथग् दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा
षण्णामपि हि तेषां तु लक्षणं सम्प्रचक्ष्यते ३
कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः
चिरोत्थानप्रपाकश्च विद्रधिर्वातसम्भवः ४
पक्वोदुम्बरसंकाशःश्यावो वा ज्वरदाहवान्
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः ५
शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः
चिरोत्थानप्रपाकश्च विद्रधिः कफसम्भवः
तनुपीतसिताश्चैषामास्रावाः क्रमतो मताः ६
नानावर्णरुजास्रावी घाटालो विषमो महान्
विषमं पच्यते वाऽपि विद्रधिः सान्निपातिकः ७

तैस्तैर्भावैरभिहते क्षतेवाऽपथ्यकारिणाम्
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ८
ज्वरस्तृषा च दाहश्च जायते तस्य देहिनः
आगन्तुर्विद्रधिर्ह्येष पित्तविद्रधिलक्षणः ९
कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते १०
आभ्यन्तरानतस्तूर्ध्वं विद्रधीन् परिचक्षते
गुर्वसात्म्यविरुद्धान्नशुष्कशाकाम्लभोजनैः ११
अतिव्यवायव्यायामवेगाघातविदाहिभिः
पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणम् १२
वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम्
गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा १३
वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि चाप्यथ
एषां लिङ्गानि जानीयाद् बाह्यविद्रधिलक्षणैः १४
गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता
नाभ्यां हिक्काजृम्भणं च कुक्षौ मारुतकोपनम् १५
कटिपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ
वृक्कयोः पार्श्वसङ्कोचः प्लीहन्युच्छ्वासावरोधनम् १६
सर्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते
श्वासो यकृति हिक्का च क्लोम्नि पेपीयते पयः १७
नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः १८
अधःस्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति
हृन्नाभिवस्तिवर्ज्येषु तेषु भिन्नेषु वाह्यतः
जीवेत् कदाचित्पुरुषो नेतरेषु कदाचन १९
साध्या विद्रधयः पञ्च विवर्ज्यः सान्निपातिकः
आमपक्वविदग्धत्वं तेषां ज्ञेयञ्च शोथवत् २०
जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ
रेको मृदुर्लङ्घनञ्च स्वेदः पित्तोत्तरं विना २१
अपक्वे विद्रधौ युञ्ज्याद् व्रणशोथवदौषधम्
वातघ्नमूलकल्कैस्तु वसातैलघृतान्वितैः २२

सुखोष्णैर्बहुलैर्लेपः प्रयोज्यो वातविद्रधौ
यवगोधूममुद्गैश्च पिष्टैराज्येन लेपयेत् २३
विलीयते क्षणेनैव ह्यविपक्वस्तु विद्रधिः २४
पैत्तिकं विद्रधिं वैद्यः प्रदिह्यात्सर्पिषा युतैः
पयस्योशीरमधुकचन्दनैर्दुग्धपेषितैः २५
पञ्चवल्कलकल्केन घृतमिश्रेण लेपयेत्
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम् २६
इष्टिका सिकता लोहकिट्टं गोशकृता सह
मूत्रैः सुखोष्णैर्लेपेन स्वेदयेच्छ्लेष्मविद्रधिम् २७
दशमूलीकषायेण सस्नेहेन रसेन वा
शोथव्रणं वा कोष्णेन सशूलं परिषेचयेत् २८
पित्तविद्रधिवत्सर्वाः क्रिया निरवशेषतः
विद्रध्योः कुशलः कुर्याद्रक्तागन्तुनिमित्तयोः २९
रक्तचन्दन मञ्जिष्ठानिशा मधुकगैरिकैः
क्षीरेण विद्रधौ लेपो रक्तागन्तुनिमित्तके ३०
पीता ह्येते निहन्त्याशु विद्रधिं कोष्ठसम्भवम्
कृष्णाऽजाजी विशाला च धामार्गवफलं तथा ३१
श्वेतवर्षाभुवो मूलं मूलं वा वरुणस्य च
जलेन क्वथितं पीतमन्तर्विद्रधिहृत्परम् ३२
गायत्रीत्रिफलानिम्बकटुकामधुकं समम्
त्रिवृत्पटोलमूलाभ्यां चत्वारोंऽशा पृथक् पृथक् ३३
मसूरान्निस्तुषान्दद्यादेष क्वाथो व्रणाञ्जयेत्
गुल्मविद्रधिबीसर्पदाह मोहज्वरापहः ३४
तृणमूर्च्छाच्छर्दिहृद्रोगपित्तासृक्कुष्ठकामलाः
शिग्रुमूलं जले धौतं पिष्टं वस्त्रेण गालयेत्
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ३५
शोभाञ्जनकनिर्यूहोहिङ्गुसैन्धवसंयुतः
हन्त्यन्तर्विद्रधिं शीघ्रं प्रातः प्रातर्विशेषतः ३६

इति षट्चत्वारिंशत्तमो विद्रध्यधिकारः समाप्तः ४६

अथ सप्तचत्वारिंशत्तमो व्रणशोथाधिकारः ४७

पृथक्समस्तदोषोत्था रक्तजागन्तुजौ तथा
व्रणशोथाः षडेते स्युः संयुक्ताः शोथलक्षणैः १
विषमं पच्यते वातात्पित्तोत्थश्चाचिराच्चिरम्
कफजः पित्तवच्छोथौ रक्तागन्तुसमुद्भवौ २
मन्दोष्णताऽल्पशोथत्वं काठिन्यं त्वक्सवर्णता
मन्दवेदनता चापि शोथस्यामस्य लक्षणम् ३
दह्यते दहनेनेव क्षारेणेव प्रपच्यते
पिपीलिकागणेनेव दश्यते छिद्यते तथा ४
भिद्यते चैव शस्त्रेण दराडेनेव च ताडयते
पीडयते पाणिनेवान्तः सूचीभिरिव तुद्यते ५
सोषचोषो विवर्णः स्यादङ्गुल्येवावपीडयते
आसने शयने स्थाने शान्तिं वृश्चिकविद्धवत् ६
न गच्छेदाततः शोथो भवेदाध्मातवस्तिवत्
ज्वरस्तृष्णाऽरुचिश्चैतत्पच्यमानस्य लक्षणम् ७
वेदनोपशमः शोथो लोहितोऽल्पो न चोन्नतः
प्रादुर्भावो वलीनाञ्च तोदः कराडूर्मुहुर्मुहुः ८
उपद्रवाणां प्रशमो निम्नता स्फुटनं त्वचाम्
वस्ताविवाम्बुसञ्चारः स्याच्छोथेऽङ्गुलिपीडिते ९
पूयश्च पीडयेदेकमन्तमन्ते च पीडिते
बुभुक्षा व्रणशोथस्य भवेत्पक्वस्य लक्षणम् १०
ऋतेऽनिलाद्रुङ् न विना न पित्तं पाकः कफञ्चापिविना न पूयः
तस्माद्धि सर्वं परिपाककाले पचन्ति शोथास्त्रिभिरेव दोषैः ११
कालान्तरेणाभ्युदितन्तु पित्तं कृत्वा वशे वातकफौ प्रसह्य
पचत्यतः शोणितमेष पाको मतः परेषां विदुषां द्वितीयः १२
कफजेषु च शोथेषु गम्भीरं पाकमेत्यसृक्
पक्वलिङ्गं ततः स्पष्टं यतः स्याच्छोथशीतता
त्वक्सावरार्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत् १३
कक्षं समासाद्य यथैव वह्निर्वातेरितः संदहति प्रसह्य
तथैव पूयो ह्यविनिःसृतस्तु मांसं शिराः स्नायुमपीह खादेत् १४

आमं विदह्यमानञ्च सम्यक्पक्वन्तु यो भिषक्
जानीयात्स भवेद्वैद्यः शेषास्तस्करवृत्तयः १५
यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते
श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ १६
आदौ शोथहरोलेपस्ततस्तु परिषेचनम्
विम्लापनमसृङ्मोक्षस्ततः स्यादुपनाहनम् १७
पाचनं भेदनं पश्चात्पीडनं शोधनं तथा
रोपणं वर्णकरणं व्रणस्यैते क्रमाः स्मृताः १८
यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम्
क्षिप्रं प्रशमयत्यग्निमेवमालेपनं रुजः १९
बीजपूरजटाहिंस्रा देवदारु महौषधम्
रास्नाऽग्निमन्थौ लेपोऽय वातशोथविनाशनः २०
कल्कः काञ्जिकसम्पिष्टः स्निग्धो मधुकचन्दनैः
दूर्वा च नलमूलञ्च पद्मकाष्ठञ्च केशरम्
उशीरं बालकं पद्मं लेपोऽय पित्तशोथहा २१
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसकल्कलैः
ससर्पिष्कैः प्रदेहः स्याच्छोथे पित्तसमुद्भवे २२
आगन्तुजे रक्तजे च लेप एषोऽभिपूजितः २३
अजगन्धाऽजशृंगी च मञ्जिष्ठा सरलस्तथा
एकैषिकाऽश्वगन्धा च लेपोऽयश्लेष्मशोथहा २४
कृष्णापुराणपिण्याकं शिग्रुत्वक् सिकता शिवा
मूत्रपिष्टः सुखोष्णोऽय प्रलेपः श्लेष्मशोथहा २५
न रात्रौ लेपनं दद्याद्दत्तञ्च पतितं तथा
न च पर्युषितं शुष्यमाणं तन्नैव धारयेत् २६
तमसा पिहितोऽत्युष्मा रोमकूपमुखोत्थितः
विना लेपेन निर्याति रात्रौ नालेपयेदतः २७
रात्रावपि प्रलेपस्तुविधातव्योविचक्षणैः
अपाकिशोथे गम्भीरे रक्तपित्तसमुद्भवे २८
यथाऽम्बुभिः सिच्यमानःशान्तिमग्निर्हि गच्छति
दोषाग्निरेवं सहसा परिषेकेण शाम्यति २९

वातघ्नौषधनिष्क्वाथै स्तैलैर्मांसरसैर्घृतैः
उष्णैः संसेचयेच्छोथं वातिकं काञ्जिकेन च ३०
पित्तरक्ताभिघातोत्थं शोथं सिञ्चेत्सुशीतलैः
चीराज्यमधुखराडेचुरसैःपित्तहरैःशृतैः ३१
कफघ्नौषधनिष्क्वाथैः शीतैस्तु परिषेचयेत्
तैलचाराम्बुमूत्रैश्च शोथं श्लेष्मसमुद्भवम् ३२
जातस्य कठिनस्यास्य कार्यं विम्लापनं शनैः ३३
अभ्यज्य स्वेदयित्वा तु वेणुनाढ्या शनैः शनैः
विमर्दयेद्भिषङ् मन्दं तलेनाङ्गुष्ठकेन वा ३४
वेदनोपशमार्थाय तथा पाकशमाय च
अचिरोत्पतिते शोथे शोणितस्रावणं चरेत् ३५
एकतस्तु क्रियाः सर्वा रक्तमोचणमेकतः
रक्तं हि वेदनामूलं तच्चेन्नास्ति न चास्ति रुक् ३६
विवर्णःकठिनः श्यावो व्रणोयश्चाल्पवेदनः
विषाणैश्च विशेषेण जलौकाभिः पदैरपि ३७
रुजावतां दारुणानां कठिनानां तथैव च
शोथानां स्वेदनं कार्यं ये चाप्येवंविधा व्रणाः ३८
शोथयोरुपनाहश्च दद्यादामविदग्धयोः
प्रशाम्यत्यविदग्धस्तु विदग्धः पक्वतां व्रजेत् ३९
दशमूली बला रास्ना वाजिगन्धा प्रसारिणी
मूलं वातरिपोः सिन्धुर्वारिपूर्णे घटे चिपेत् ४०
शोभाञ्जनः कणा चापि सैन्धवं विश्वभेषजम्
शणकार्पासयोर्बीजमतसी च कुलत्थिका ४१
तिला यवाश्च सिद्धार्थः कुठेरो मूलकं मिसिः
यथाप्राप्तैरमीभिश्च द्रव्यैरम्लेन संयुतैः ४२
कल्कीकृतैः सुखोष्णैश्च स्वेदयेद्विधिवच्छनैः
अनेन प्रशमं याति वातशोथो न संशयः ४३
पुनर्नवा दारु शुराठी शिग्रुः सिद्धार्थ  एव च
अम्लपिष्टः सुखोष्णोऽय प्रलेपः सर्वशोथहा ४४
न प्रशाम्यति यः शोथः प्रलेपादिविधानतः

द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने ४५
शणमूलकशिग्रुणां फलानि तिलसर्षपाः
अतसी शक्तवः किरावमुष्णद्रव्यञ्च पाचनम् ४६
अन्तः पूयेष्ववक्त्रेषु तथा चोत्सङ्गवत्स्वपि
गतिमत्सु च रोगेषु भेदनं सम्प्रयुज्यते ४७
रोगे व्यधेन साध्येतु यथादेशं प्रमाणतः
शस्त्रं विधाय दोषांस्तु स्त्रावयेत्कथितं यथा ४८
बालवृद्धासहक्षीणभीरूणां योषितामपि
व्रणेषु मर्मजातेषु भेदनं द्रव्यलेपनम् ४९
चिरबिल्वोऽग्निको दन्ती चित्रको हयमारकः
कपोतकाकगृध्राणां मललेपेन भेदनम् ५०
क्षारद्रव्यं तथा क्षारो दारणः परिकीर्तितः
हस्तिदन्तो जले पिष्टो बिन्दुमात्रप्रलेपितः
अत्यर्थं कठिने शोथे कथितो भेदनः परः ५१
द्रव्याणां पिच्छिलानान्तु त्वङ्मूलातिप्रपीडनम्
यवगोधूममाषाणां चूर्णानि च समासतः ५२
शुष्यमाणमुपेक्षेत प्रलेपं पीडनं प्रति
न चापिमुखमालिम्पेत्तथा दोषः प्रसिच्यते ५३
व्रणस्य तु विशुद्धस्य क्वाथः शुद्धिकरः परः
पटोलनिम्बपत्रोत्थः सर्वत्रैव प्रयुज्यते ५४
वातिके दशमूलानां क्षीरिणां पैत्तिके व्रणे
आरग्वधादेः कफजे कषायः शोधने हितः ५५
अश्वत्थोदुम्बरप्लक्षवटवेतसजं शृतम्
व्रणशोथोपदंशानां नाशनं क्षालनात्स्मृतम् ५६
तिलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुगैः
त्रिवृद्घृतयुतैः पिष्टैः प्रलेपो व्रणशोधनः ५७
एकं वा सारिवामूलं सर्वव्रणविशोधनम् ५८
निम्बपत्रं तिला दन्ती त्रिवृत्सैन्धवमाक्षिकम्
दुष्टव्रणप्रशमनो लेपः शोधनकेशरी ५९
लेपान्निम्बदलैः कल्को व्रणशोधनरोपणः

भन्नणाच्छर्दिमन्दाग्निपित्तश्लेष्मकृमीन्हरेत्
व्रणान्विशोधयेद्वत्तर्या सून्दमान् हि सन्धिमर्मजान् ६०
अभयात्रिवृतादन्ती लाङ्गलीमधुसैन्धवैः ६१
निम्बपत्रघृत न्नौद्रदार्वीमधुकसंयुतैः
वर्त्तिस्तिलानां कल्को वा शोधयेद्रोपयेद् व्रणम् ६२
अपेतपूतिमांसानां मांसस्थानामरोहताम्
कल्कस्तु रोपणोदेयस्तिलजो मधुसंयुतः ६३
अश्वगन्धा रुहा लोध्रं कट्फलं मधुयष्टिका
समङ्गा धातकीपुष्पं परमं व्रणरोपणम् ६४
मधुयुक्ता सुरा पुंसां कथिता व्रणरोपणी
सुषवीपत्रधत्तूर बलामोटाकुठेरकाः
पृथगेतैः प्रलेपेन गम्भीरव्रणरोपणम् ६५
ककुभोदुम्बराश्वत्थजम्बू कफललोध्रजैः
त्वक्चूर्णैर्धूलिताः न्निप्रं संरोहन्ति व्रणा ध्रुवम् ६६
प्रियङ्गुधातकीपुष्पं यष्टीमधुजतूनि च
सून्दमचूर्णीकृतानि स्यू रोपणान्यवधूलनात् ६७
यवचूर्णं समधुकं सतैलं सह सर्पिषा
दद्यादालेपनं कोष्णं  दाहशूलोपशान्तये ६८
करञ्जारिष्टनिर्गुराडीलेपो हन्याद् व्रणकृमीन्
लशुनस्याथवा लेपो हिङ्गुनिम्बकृतोऽथवा ६९
निम्बपत्रवचाहिङ्गुसर्पिर्लवणसर्षपैः
धूपनं स्याद् व्रणे रुन्नकृमिकराडूरुजाऽपहम् ७०
ये क्लेदपाकस्रुतिगन्धवन्तो व्रणाश्चिरोत्थाः सतताश्च शोथाः
प्रयान्ति ये गुग्गुलुमिश्रितेन पीतेन शान्तिं त्रिफलाशृतेन ७१
पटोलनिम्बासनसार धात्रीपथ्याऽन्ननिर्यूहमहर्मुखेषु
पिबेद्युतं गुग्गुलुना विसर्पविस्फोट दुष्टव्रणशान्तिमिच्छन् ७२
मनःशिला समञ्जिष्ठा सलान्ना रजनीद्वयम्
प्रलेपः सघृतन्नौद्रस्त्वचः सावरार्यकृत्स्मृतः ७३
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवान्तरम्
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ७४

तण्डुलीयकजीवन्तीवास्तूकसुनिषण्णकैः
बालमूलकवार्त्ताकुपटोलैः कारवेल्लकैः ७५
सदाडिमैः सामलकैर्घृतभृष्टैः ससैन्धवैः
अन्यैरेवङ्गुणैर्वाऽपि मुद्गादीनां रसेन वा ७६
अम्लं दधि च शाकञ्च मांसमानूपमौदकम्
क्षीरं गुरूणि चान्नानि व्रणे च परिवर्जयेत् ७७
व्रणे श्वयथुरायासात्स च रागश्च जागरात्
तौ च रुक्च दिवास्वापात्ते च मृत्युश्च मैथुनात् ७८
क्रुद्धे सद्योव्रणे कुर्यादूर्ध्वं चाधश्च शोधनम्
क्रिया शीता प्रयोक्तव्या रक्तपित्तोष्मनाशिनी ७९
लङ्घनञ्च बलं ज्ञात्वा भोजनं चास्रमोक्षणम्
घृष्टे विदलिते चैव सुतरामिष्यते विधिः ८०
छिन्ने भिन्ने तथा विद्धे क्षते वाऽसृगतिस्रवेत्
रक्तक्षयात्तत्र रुजः करोति पवनो भृशम् ८१
परिषेकं स्नेहपानं लेपं तत्रोपनाहनम्
कुर्वन्ति स्नेहवस्तिञ्च रुजाघ्नं चौषधं पृथक् ८२
खड्गादिच्छिन्नगात्रस्य तत्काले पूरितो व्रणः
गाङ्गेरुकीमूलरसैः सद्यः स्याद्गतवेदनः ८३
कषाया मधुराः शीताः क्रियाः सर्वाः प्रयोजयेत्
सद्योव्रणानां सप्ताहात्पश्चात्पूर्वोक्तमाचरेत् ८४
आमाशयस्थे रुधिरे विदध्याद्वमनं नरः
तस्मिन्पक्वाशयस्थे तु प्रकुर्वीत विरेचनम् ८५
क्वाथो वंशत्वगैरण्डश्वदंष्ट्राऽश्मभिदा कृतः
हिङ्गुसैन्धवसंयुक्तः कोष्ठस्थं स्रावयेदसृक् ८६
यवकोलकुलत्थानां निःस्नेहेन रसेन च
भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ८७
जातीनिम्बपटोलपत्रकटुकादार्वीनिशासारिवा
मञ्जिष्ठाऽभयसिक्थ तुत्थमधुकैर्नक्ताह्वबीजं समैः
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुध्यन्ति रोहन्ति च ८८

वृद्धवैद्योपदेशेन पारम्पर्योपदेशतः
जातीवृते तु संसिद्धं ज्ञेयव्यं सिक्थकं बुधैः ८९
जातीनिम्बपटोलानां नक्तमालस्य पल्लवाः
सिक्थकं मधुकं कुष्ठं द्वे निशे कटुरोहिणी ९०
मञ्जिष्ठा पद्मकं पथ्या लोध्रत्वङ्नीलमुत्पलम्
सारिवा तुत्थकञ्चापि नक्तमालफलं तथा
एतानि समभागानि कल्कीकृत्य प्रयत्नतः
तिलतैलं पचेत्सम्यग्वैद्यः पाकविचक्षणः ९२
विषव्रणे समुत्पन्ने स्फोटके कुष्ठरोगिणी
दद्रुवीसर्परोगेषुकीटदष्टेषु सर्वथा ९३
सद्यः शस्त्रप्रहारेण दग्धविद्धेषु चैव हि
नखदन्तक्षते देहे दुष्टमांसापकर्षणे ९४
म्रक्षणेन हितं तैलमिदं शोधनरोपणम्
तैलं जात्यादिनाम्नैतत्प्रसिद्धं भिषगादृतम् ९५
चित्रकरसोनरामठशरपुङ्खालाङ्गलीकसिन्दूरैः
सविषैस्तथा सकुष्ठैः कटुतैलं साधु सम्पक्वम् ९६
विपरीतमल्लसंज्ञं तैलं दुष्टव्रणं तथा नाडीम्
बहुभेषजैरसाध्यामपथ्यभोक्तुश्च निस्तुदति ९७
अमृतापटोलमूलत्रिफलात्रिकटुककृमिघ्नानाम्
समभागानां चूर्णं सर्वसमो गुग्गुलोर्भागः ९८
प्रतिवासरमेकैकां गुटिकां खादेदिहापि परिमाणम्
जेतुं व्रणवातासृग्गुल्मोदरशोथवातरोगांश्च ९९
प्लुष्टस्याग्निषु तपनं कार्यमुष्णं तथौषधम्
सम्यक् स्विन्ने शरीरे तु स्विन्नं भवति शोभनम् १००
प्रकृत्या सलिलं शीतं स्कन्दयत्यतिशोणितम्
तस्मात्सुखयति ह्युष्णं न तु शीतं कदाचन १०१
शीतामुष्णाञ्च दुर्दग्धे क्रियां कुर्यात्ततः पुनः
घृतलेपप्रदेहांश्च शीतानेवास्य कारयेत् १०२
सम्यदग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः
सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक्

ग्राम्यानूपौदकैर्मांसैः पिष्टैरेनं प्रलेपयेत् १०३
अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम्
क्रियां कुर्यात्ततः पश्चाच्छालितण्डुलकण्डनैः १०४
तिन्दुक्याश्च कषायैर्वा घृतमिश्रैर्प्रलेपयेत्
सर्वेषामग्निदग्धानामेतद्रोपणमुत्तमम् १०५
सिक्थककर्दमजीरकमधुपथ्यासर्वमिश्रितं लेपात्
गव्यं घृतमपहरति विपाकजनितं व्रणं सद्यः १०६
सिद्धं कषायकल्काभ्यां पटोल्याः कटुतैलकम्
दग्धव्रणरुजास्त्रावदाहविस्फोटनाशनम् १०७
वातास्रमस्रतं दुष्टं सशोथं ग्रथितं व्रणम्
कुर्यात्सदाहंकण्ड्वाद्यं व्रणग्रन्थिस्तु स स्मृतः १०८
कम्पिल्लकं विडङ्गानि त्वचं दार्व्यास्तथैव च
पिष्ट्वा तैलं पचेत्तत्तु व्रणग्रन्थिहरं परम् १०९
इति सप्तचत्वारिंशत्तमो व्रणशोथाधिकारो वा व्रणशोथा
गन्तुव्रणाग्निदग्धव्रणाधिकारः समाप्तः ४७

अथाष्टचत्वारिंशत्तमो भग्नाधिकारः ४८

भग्नं समासाद् द्विविधं हुताश काण्डे च सन्धावपि तत्र सन्धौ
उत्पिष्टविश्लिष्टविवर्त्तितानि तिर्यग्गतं क्षिप्तमधश्च भग्नम् १
प्रसारणाकुञ्चनवर्त्तनोग्रा रुक् स्पर्शविद्वेषणमेतदुक्तम्
सामान्यतः सन्धिगतस्य लिङ्गमुत्पिष्टसन्धेः श्वयथोः समन्तात्
विशेषतो रात्रिभवा रुजा च विश्लिष्टकेतौ च रुजा च नित्यम् २
विवर्त्तिते पार्श्वरुजश्च तीव्रास्तिर्यग्गते तीव्ररुजो भवन्ति
क्षिप्तेऽतिशूलं विगमं रुजश्च क्षिप्ते त्वधोरुग्विघटश्च सन्धेः ३
भग्नन्तु काण्डे बहुधा प्रयाति विशेषतो नामभिरेव तुल्यम् ४
काण्डे त्वतः कर्कटकाश्वकर्णौ विचूर्णितं पिच्चितमस्थिखल्लितम्
काण्डेषु भग्नं ह्यतिपातितञ्च मज्जागतं विस्फुटितञ्च वक्रम् ५
छिन्नं द्विधा द्वादशधाऽपि काण्डे सामान्यमग्रे किल तस्य लिङ्गम् ६
स्रस्ताङ्गता शोथरुजाऽतिवृद्धिस्तथा व्यथावृद्धिरतीव नित्यम्
सम्पीड्यमाने भवतीह शब्दः स्पर्शासहं स्पन्दनतोदशूलाः

सर्वास्ववस्थासु न शर्मलाभो भग्नस्य काण्डे खलु चिह्नमेतत् ७
अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ८
भिन्नं कपालं कट्यान्तु सन्धिमुक्तं तथा च्युतम्
जघनं प्रतिपिष्टञ्च वर्जयेत्तु चिकित्सकः ९
असंश्लिष्टकपालञ्च ललाटे चूर्णितञ्च यत्
भग्नं स्तने गुदे पृष्ठे शङ्खे मूर्द्धनि वर्जयेत् १०
सम्यक्संहितमप्यस्थि दुर्न्यासाद् दुष्टबन्धनात्
सङ्क्षोभाद्वाऽपि यद्गच्छेद्विक्रियां तच्च वर्जयेत् ११
तरुणास्थीनि नम्यन्ते भिद्यन्ते नलकानि तु
कपालानि विभज्यन्ते स्फुटन्ति रुचकानि च १२
पाण्योः पार्श्वयुगे पृष्ठे वक्षोजठरपायुषु
पादयोरपि चास्थीनि वलयानि बभाषिरे १३
आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना
पङ्केनालेपनं कार्यं बन्धनञ्च कुशाऽन्वितम् १४
अवनामितमुन्नह्येदुन्नतं चावपीडयेत्
आञ्छेदतिक्षिप्तमधो गतं चोपरिवर्त्तयेत् १५
मधूकोदुम्बराश्वत्थकदम्बनिचुलत्वचः
वंशसर्जार्जुनानाञ्च कुशार्थमुपसंहरेत् १६
पटस्योपरि बध्नीयान्न गाढं शिथिलं न च
सप्तसप्तदिनाच्छीते घर्मे मुञ्चेत्त्र्यहात्त्र्यहात्
मासान्ते पञ्चपञ्चाहाद्भग्नदोषवशेन वा १७
आलेपनार्थं मञ्जिष्ठा मधूकं चाम्बुपेषितम्
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम् १८
सद्योऽभिघातजनिता आगन्तुश्वयथवः प्रशाम्यन्ति
पिष्टकलवणालेपादम्लीकाफलरसाभ्यां वा १९
आम्रातकजटाऽम्लीकाफलं पत्राणि शिग्रुजम् २०
मूलं पौनर्नवं वर्द्धमानस्यापि च केम्बुकात्
सर्वं संक्षुद्य तक्रेण काञ्जिकेन तथैव च २१
पाचयित्वा चरेच्छ्रेष्ठं तेन पीडा प्रणश्यति

शोथश्चास्थि च शीघ्रेण सन्धानं याति वै ध्रुवम् २२
न्यग्रोधादिकषायन्तु सुशीतं परिषेचने
पञ्चमूलीकषायं सक्षीरं दद्यात्सवेदने २३
सुखोष्णमवचार्यं वा चक्रतैलं विजानता
अविदाहिभिरन्नैश्च पिष्टकैः समुपाचरेत् २४
ग्लानिर्हि निहता तस्य सन्धिविश्लेषकारिका
मांसं मांसरसः क्षीरं सर्पिर्यूषःसतीनजः
बृहणञ्चान्नपानञ्च देयं भग्नाय जानता २५
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम्
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः २६
सघृतेनास्थिसंहारं लाक्षागोधूममर्जुनम्
सन्धिमुक्तेऽस्थिसम्भग्ने पिबेत्क्षीरेण वा पुनः २७
रसोन  मधुलाक्षाऽज्यसिताकल्कं समश्नताम्
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् २८
चूर्णं पुरेण संयोज्य घृतेनार्जुनलाक्षयोः
भग्नःसन्धानमायाति लीढं क्षीरघृताशिना २९
मूलं शृगालविन्नायाः पीत्वा मांसरसेन तु
चूर्णीकृत्य त्रिसप्ताहादस्थिभग्नमपोहति ३०
आभाचूर्णं मधुयुतमस्थिभग्नस्त्र्यहं पिबेत्
पीते चास्थि भवेत्सम्यग्वज्रसारनिभं दृढम् ३१
अम्लीकाफलकल्कैः सौवीरैस्तैलमिश्रितैः स्वेदात्
भग्नाभिहतरुजाघ्नैरथ वौषधसाधितं श्वयथौ ३२
आभाफलत्रिकव्योषैः सर्वैरेतैः समांशकैः
तुल्यं गुग्गुलुना योज्यं भग्नसन्धिप्रसाधनम् ३३
लाक्षाऽस्थिसंहृत्ककुभोऽश्वगन्धा चूर्णीकृता नागबला पुरश्च
सम्भग्नमुक्तास्थिरुजं निहन्यादङ्गानि कुर्यात्कुलिशोपमानि ३४
रात्रौ रात्रौ तिलान्कृष्णान्वासयेदस्थिरे जले
दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत् ३५
तृतीयं सप्तरात्रन्तु भावयेन्मधुकाम्बुना
ततः क्षीरं पुनः पीताञ्छुष्कान्सूक्ष्मान्विचूर्णयेत् ३६

काकोल्यादि सयष्ट्याह्वां मञ्जिष्ठां सारिवां तथा ३७
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम्
शतपुष्पाञ्च सञ्चूर्ग्य तिलचूर्णेन योजयेत् ३८
पीडनार्थं तु कर्त्तव्यं सर्वगन्धैः शृतं पयः
चतुर्गुणेन पयसा तत्तैलं पाचयेत्पुनः ३९
यष्टीमंशुमतीम्पत्रं जीवन्तीं तुरगं तथा
रोध्रं प्रपौराडरीकञ्च तथा कालानुसारिवाम् ४०
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम्
पिष्ट्वा शृङ्गाटकञ्चैव प्रागुक्तान्यौषधानि च ४१
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाऽग्नि
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ४२
ग्राक्षेपके पक्षघाते तालुशोषे तथाऽदिते
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ४३
बाधिर्ये तिमिरे चैव ये च स्त्रीषु क्षयङ्गताः
पथ्यं पाने तथाऽभ्यङ्गे नस्ये वस्तिषु भोजने ४४
ग्रीवास्कन्धोरसां वृद्धिरेतेनैव प्रजायते
मुखञ्च पद्मप्रतिमं ससुगन्धिसमीरणम् ४५
राजार्हमेतत्कर्त्तव्यं राज्ञामेव चिकित्सकैः
तिलचूर्णसमं तत्र मिलितं चूर्णमिष्यते ४६
पूर्वे वयसि जातं हि भग्नं सुकरमादिशेत्
ग्रल्पदोषस्य जन्तोश्च काले तु समशीतले ४७
प्रथमे वयसि त्वेवं मासात्सन्धिः स्थिरो भवेत्
मध्यमे द्विगुणात्कालादन्तिमे त्रिगुणात्तथा ४८
नैति पाकं यथा भग्नं तथा यत्नेन रक्षयेत्
पक्वमांसशिरास्नायु तद्धि कृच्छ्रेण सिध्यति ४९
पतनादभिघाताद्वा शूनभङ्गं यदक्षतम्
शीतान्सेकान्प्रदेहांश्च भिषक्तस्यावचारयेत् ५०
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः
प्रतिसार्य कषायैश्च शेषं भग्नवदाचरेत्
वातव्याधिविनिर्दिष्टान्स्नेहांस्तत्रापि योजयेत् ५१

लवणं कटुकक्षारमम्लमायासमैथुनम्
व्यायामञ्च न सेवेत भग्नो रुक्षान्नमेव च ५२
भग्नसन्धिमनाविद्धमहीनाङ्गमनुल्वणम्
शुभचेष्टाप्रचारञ्च सम्यक्सन्धितमादिशेत् ५३

इति श्री मिश्रलटकनतनयश्रीमन्मिश्रभावविरचिते भावप्रकाशे
मध्यखण्डेऽष्टचत्वारिंशत्तमो भग्नाधिकारः समाप्तः ४८
तृतीयोभागेऽपि समाप्तः

## चतुर्थो भागः

### अथैकोनपञ्चाशत्तमो नाडीव्रणाधिकारः ४९

यः शोथमाममिति पक्वमुपेक्षतेऽज्ञो यो वा व्रणं प्रचुरपूयमसाधुवृत्तः
अभ्यन्तरं प्रविशति प्रविदार्य तस्य स्थानानि पूर्वविहितानि ततः स पूयः
तस्यातिमात्रगमनाद् गतिरिष्यते तु नाडीव यद्वहति तेन मता च नाडी १
दोषैस्त्रिभिर्भवति सा पृथगेकशश्च सम्मूर्च्छितैरपि च शल्यनिमित्ततोऽन्या २
तत्रानिलात्परुषसूक्ष्ममुखी सशूला फेनानुविद्धमधिकं स्रवति क्षपासु ३
पित्तात्तु तृड्ज्वरकरी परिदाहयुक्ता पीतं स्रवत्यधिकमुष्णमहःसु चापि ४
ज्ञेया कफाद् बहुघना सितपिच्छिलास्त्रां स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा
५
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा यस्यां भवन्त्यभिहितानि च लक्षणानि
तामादिशेत्पवनपित्तकफप्रकोपाद् घोरां गतिं त्वसुहरामिव कालरात्रिम् ६
नष्टं कथञ्चिदणुमार्गमुदीरितेषु स्थानेषु शल्यमचिरेण गतिं करोति
सा फेनिलं मथितमुष्णमसृग्विमिश्रं स्रावं करोति सहसा सरुजञ्च नित्यम्
७
नाडी त्रिदोषप्रभवा न सिध्येदन्त्याश्चतस्रः खलु यत्नसाध्याः ८
अथ नाडीव्रणचिकित्सा
तत्रानिलोत्थामुपनाह्य पूर्वमशेषतः पूयगतिं विदार्य
तिलैरपामार्गफलैः सुपिष्टैः ससैन्धवैः सम्परिपूर्य बन्धेत्
प्रक्षालने वाऽपि सदा व्रणस्य योज्यं महद्यत्खलु पञ्चमूलम् ९
हिंस्रां हरिद्रां कटुकां बलाञ्च गोजिह्विकाञ्चापि सबिल्वमूलाम्
संहृत्य तैलं विपचेद् व्रणस्य संशोधनं पूरणरोपणञ्च १०

पित्तात्मिकां प्रागुपनाह्य धीमानुत्कारिकाभिः सपयोघृताभिः
निपात्य शस्त्रं तिलनागदन्तीयष्ट्याह्वकल्कैः परिपूरयेच्च
प्रक्षालने चापि ससोमनिम्बा निशा प्रयोज्या कुशलेन नित्यम् ११
श्यामात्रिभगडी त्रिफलासुसिद्धं हरिद्रया तिल्वकवृक्षकेण
घृतं सदुग्धं व्रणतर्पणेन हन्याद्गतिं कोष्ठगताऽपि या स्यात् १२
नाडीं कफोत्थामुपनाह्य पूर्वं कुलत्थसिद्धार्थकसक्तुकिरवैः
मृदूकृतामेष्यगतिं विदित्वा निपातयेच्छस्त्रमशेषकारि १३
दद्याद् व्रणे निम्बतिलाग्निदन्तीसुराष्ट्रजाः सैन्धवसम्प्रयुक्ताः
प्रक्षालने चापि करञ्जनिम्बजात्यर्कपीलुस्वरसाः प्रयोज्याः १४
स्वर्जिकासिन्धुदन्त्यग्नियूथिका जलनीलिका
खरमञ्जरिबीजेषु तैलं गोमूत्रसाधितम्
दुष्टव्रणप्रशमनं कफनाडीव्रणापहम् १५
सैन्धवार्कमरिचज्वलनाख्यैर्मार्कवेण रजनीद्वयसिद्धम्
तैलमेतदचिरेण निहन्याद् दूरगामपि कफानिलनाडीम् १६
नाडीं तु शल्यप्रभवां विदार्य निष्कास्य शल्यं प्रतिशोध्य मार्गम्
बन्धेद् व्रणं क्षौद्रघृतप्रगाढैस्तिलैस्ततो रोपणमस्य कुर्यात् १७
कुम्भीकखर्जूरकपित्थबिल्ववनस्पतीनाञ्च शलाटुवर्गे
कृत्वा कषायं विपचेत्तु तैलमावाप्य मुस्तं सरलां प्रियङ्गुम् १८
सौगन्धिकं मोचरसाहिपुष्पं लोध्राणि दत्वा खलु धातकीञ्च
एतेन शल्यप्रभवा हि नाडी रोहेद् व्रणो वा सुखमाशु चैव १९
इति कुम्भीकाद्यतैलम्
स्नुह्यर्कदुग्धदार्वीणां वर्त्तिं कृत्वा प्रपूरयेत्
एष सर्वशरीरस्थां नाडीं हन्यात्प्रयोगराट् २०
आरग्वधनिशाकाला चूर्णाज्यक्षौद्रसंयुता
सूत्रवर्त्तिव्रणे योज्या शोधनी गतिनाशिनी २१
वर्त्तीकृतं माक्षिकसम्प्रयुक्तं नाडीघ्नमुक्तं लवणोत्तमं वा
दुष्टव्रणे यद्विहितं तु तैलं तत्सेव्यमानं गतिमाशु हन्ति २२
जात्यर्कसम्पाक करञ्जदन्ती सिन्धूत्थसौवर्चलयावशूकैः
वर्त्तिः कृता हन्त्यचिरेण नाडीं स्नुक्क्षीरपिष्टा तु सचित्रकेण २३
बिभीतकाम्रास्थि वटप्रवाल हरेणुकाशङ्खिनिबीजमिश्रा

वाराहविट्सूक्ष्ममसी प्रदेया नाडीषु तैलेन च मिश्रयित्वा २४
मेषरोममसीतुम्ब्या कटुतैलं विपाचितम्
नाडीव्रणं चिरोद्भूतं जयेत्तु तूलसङ्गमात् २५
कर्चूरकस्य स्वरसे कटुतैलं विपाचयेत्
सिन्दूरकल्कितं नाडीदुष्टव्रणविसर्पनुत् २६
कर्चूरकरसे तैलं पुरसिन्दूरकल्कितम्
पामादुष्टव्रणं नाडीं हन्यात्सर्वव्रणान्तकृत् २७
भल्लातकार्कमरिचैर्लवणोत्तमेन सिद्धं विडङ्गरजनीद्वयचित्रकैश्च
स्यान्मार्कवस्य च रसेन निहन्ति तैलं नाडीं कफानिलकृतामपचीं व्रणांश्च
२८
स्वर्जिका सैन्धवं दन्ती नीलीमूलं फलं तथा
मूत्रे चतुर्गुणे सिद्धं तैलं नाडीव्रणापहम्
सर्वो व्रणक्रमः कार्यः शोधनारोपणादिकः २९
गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितैः
अक्षप्रमाणां गुटिकां खादेदेकामतन्द्रितः ३०
नाडीं दुष्टव्रणं शूलमुदावर्त्तं भगन्दरम्
गुल्मञ्च गुदजान्हन्यात्पक्षिराट् पन्नगानिव ३१
या द्विव्रणीये विहितास्तु वर्त्तयस्ताः
सर्वनाडीषु भिषग्विदध्यात् ३२
कृशदुर्बलभीरूणां नाडीं मर्माश्रितामपि
क्षारसूत्रेण तां छिन्द्यान्न शस्त्रेण कदाचन ३३
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम्
सूचीं निदध्याद्गत्यन्ते प्रोन्नाम्याशु विनिर्हरेत् ३४
सूत्रस्यान्तं समानीय गाढं बन्धनमाचरेत्
ततः क्षारबलं वीक्ष्य सूत्रमन्यत्प्रवेशयेत् ३५
क्षाराक्तं मतिमान्वैद्यो यावन्न च्छिद्यते गतिः
भगन्दरेष्वेष विधिः कार्यो वैद्येन जानता ३६
अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत्
सूचीभिर्यववक्त्राभिराचितं वा समन्ततः
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद् व्रणम् ३७

इत्येकोनपञ्चाशत्तमो नाडीव्रणाधिकारः समाप्तः ४९

अथ पञ्चाशत्तमो भगन्दराधिकारः ५०

कटीकपालनिस्तोददाह कराडूरुजाऽदयः
भवन्ति पूर्वरूपाणि भविष्यति भगन्दरे १
गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिडकाऽत्तिकृत्
भिन्नो भगन्दरो ज्ञेयः स च पञ्चविधो भवेत् २
भगन्दरशब्दस्य निरुक्तिमाह भोजः
भगं परिसमन्ताच्च गुदं वस्तिं तथैव च
भगवद् दारयेद्यस्मात्तस्मादेष भगन्दरः ३
कषायरुक्षैरतिकोपितोऽनिलस्त्वपानदेशे पिडकां करोति याम्
उपेक्षणात्पाकमुपैति दारुणं रुजा च भिन्नाऽरुणफेनवाहिनी
तत्रागमो मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत् ४
प्रकोपनैः पित्तमतिप्रकोपितं करोति रक्तां पिडकां गुदे गताम्
तदाशुपाकाऽहिमपूतिवाहिनीं भगन्दरं चोष्ट्रशिरोधरं वदेत् ५
कराडूयनो घनस्रावी कठिनो मन्दवेदनः
श्वेतावभासः कफजः परिस्रावी भगन्दरः ६
बहुवर्णरुजास्रावा पिडका गोस्तनोपमा
शम्बूकावर्त्तगतिकः शम्बूकावर्त्तको मतः ७
क्षताद्गतिः पायुगता विवर्द्धते ह्यपेक्षणात्स्युः कृमयो विदार्य ते
प्रकुर्वते मार्गमनेकधा मुखैर्व्रणैस्तमुन्मार्गिभगन्दरं वदेत् ८
घोराः साधयितुं दुःखाः सर्व एव भगन्दराः
तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्चविशेषतः ९
वातमूत्रपुरीषाणि शुक्रञ्च कृमयस्तथा
भगन्दरात्स्रवन्तस्तु नाशयन्ति तमातुरम् १०
अथास्य पिडकामेव तथा यत्नादुपाचरेत्
शुद्ध्यस्रस्रुतिसेकाद्यैर्यथा पाकं न गच्छति ११
वटपत्रेष्टका शुराठीसगुडूचीपुनर्नवाः
सुपिष्टः पिडकाऽवस्थे लेपः शस्तो भगन्दरे १२
पिडकानाम पक्वानामपतर्पणपूर्वकम्

कर्म कुर्याद्विरेकान्तं भिन्नानां वक्ष्यते क्रिया १३
एषणीपाटनक्षारवह्निदाहादिकं क्रमम्
विधाय व्रणवत्कार्यं यथादोषं यथाक्रमम् १४
पयः पिष्टैस्तिलारिष्टमधुकैश्च सुशीतलैः
भगन्दरे प्रशस्तोऽय सरक्ते वेदनावति १५
सुमना वटपत्राणि गुडूची विश्वभेषजम्
ससैन्धवस्तक्रपिष्टो लेपो हन्ति भगन्दरम् १६
त्रिवृत्तिला नागदन्ती मञ्जिष्ठा सह सर्पिषा
उत्सादनं भवेदेतत्सैन्धवक्षौद्रसंयुतम् १७
खदिराम्बुरतो भूत्वा कषायं त्रैफलं पिबेत्
महिषाक्षविडङ्गानां भगन्दरविनाशनम् १८
शम्बूकमांसं भुञ्जीत प्रकारैर्व्यञ्जनादिभिः
अजीर्णवर्जी मासेन मुच्यते तु भगन्दरात् १९
न्यग्रोधादिर्गणो यस्तु हितः शोधनरोपणः
तैलं घृतं वा तत् पक्वं भगन्दरविनाशनम् २०
तिला ज्योतिष्मती कुष्ठं लाङ्गली गिरिकर्णिका
शताह्वात्रिवृतादन्त्यः शोधनाश्च भगन्दरे २१
तिलाभयालोध्रमरिष्टपत्रं निशे बला लोध्रमगारधूमम्
भगन्दरे चाप्युपदंशजे च दुष्टव्रणे रोपणशोधनाय २२
स्नुह्यर्कदुग्धदार्वीभिर्वर्त्तिं कृत्वा विचक्षणः
भगन्दरगतिं ज्ञात्वा पूरयेत्तां प्रयत्नतः २३
एषा सर्वशरीरस्थां नाडीं हन्यान्नसंशयः
त्रिफलारससंयुक्तं विडालास्थिप्रलेपनम् २४
भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम्
त्रिवृत्तेजोवतीदन्तीकल्को नाडीव्रणापहः २५
ज्योतिष्मती लाङ्गलकी श्यामा दन्ती त्रिवृत्तिलाः
कुष्ठं शताह्वा गोलोमी तिल्वको गिरिकर्णिका २६
कासीसकाञ्चनक्षीर्यौ वर्गः शोधन इष्यते २७
मधुतैलयुता विडङ्गसारत्रिफलामागधिकाकणाश्च लीढाः
कृमिकुष्ठभगन्दरप्रमेहक्षयनाडीव्रणरोपणा भवन्ति २८

चित्रकार्कौ त्रिवृत्पाठे मलयूहयमारकौ
सुधां वचां लाङ्गलकीं हरितालं सुवर्चिकाम् २९
ज्योतिष्मतीञ्च संहृत्य तैलं धीमान्विपाचयेत्
एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे
शोधनं रोपणञ्चैव सवर्णकरणं तथा ३०
निशाऽर्कक्षीर सिन्धूत्थपुराश्वहरवत्सकैः
सिद्धमभ्यञ्जनं तैलं भगन्दरहरं परम् ३१
करवीरनिशा दन्तीलाङ्गलीलवणाग्निभिः
मातुलुङ्गकवत्साह्वैः पचेत्तैलं भगन्दरे ३२
त्रिफलापुरकृष्णानां त्रिपञ्चकांशयोजिता
गुटिका शोथगुल्मार्शोभगन्दरवतां हिता ३३
नाड्यन्तरे व्रणान्कुर्याद्भिषक् तु शतपोनके
ततस्तेष्ववरूढेषु शेषा नाडीरुपाचरेत् ३४
व्याधौ तत्र बहुच्छिद्रे भिषजा तु विजानता
अर्द्धलाङ्गलकच्छेदः कार्यो लाङ्गलकोऽपि वा ३५
सर्वतोभद्रको वाऽपि कार्यो गोतीर्थकोऽपि वा ३६
द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलको मतः
ह्रस्वमेकतरं यत्तु सोऽर्द्धलाङ्गलकः स्मृतः ३७
सेवनीं वर्जयित्वा तु चतुर्द्धा दारिते गुदे
सर्वतोभद्रकं छेदमाहुश्छेदविदो जनाः
पार्श्वादागतशस्त्रेण च्छेदो गोतीर्थको मतः ३८
सर्वानास्त्रावमार्गांस्तु दहेद्वैद्यस्तथाऽग्निना
अथोष्ट्रग्रीवमेषिण्या छित्वा क्षारं निपातयेत् ३९
उत्कृत्यास्त्रावमार्गन्तु परिस्राविणि बुद्धिमान्
क्षारेण वा स्त्रावगतिं दहेद्धुतवहेन वा ४०
गतिमन्विष्य शस्त्रेण च्छिन्द्यात्खर्जूरपत्रकम् ४१
चन्द्रार्द्ध चन्द्रचक्रञ्च सूचीमुखमवाङ्मुखम्
छित्वाऽग्निना दहेत्सम्यगेवं क्षारेण वा पुनः ४२
एषां तु शस्त्र पतनाद्वेदना यत्र जायते
तत्राणुतैलेनोष्णेन परिषेकः प्रशस्यते ४३

आगन्तुजे भिषङ् नाडीं शस्त्रेणोत्कृत्य यत्नतः ४४
जम्ब्वोष्ठेनाग्निवर्णेन तप्तया वा शलाकया
दहेद्यथोक्तं मतिमांस्तं व्रणं सुसमाहितः ४५
व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च
संवत्सरं परिहरेदुपरूढव्रणो नरः ४६
इति पञ्चाशत्तमो भगन्दराधिकारः समाप्तः ५०

अथैकपञ्चाशत्तम उपदंशाधिकारः ५१
हस्ताभिघातान्नख दन्तघातादधावनादत्युपसेवनाद्वा
योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधापचारैः १
सतोदभेदस्फुरणैः सकृष्णैः स्फोटैर्व्यवस्येत्पवनोपदंशम्
पीतैर्बहुक्लेदयुतैः सदाहैः पित्तेन रक्तैः पिशितावभासैः २
स्फोटैः सकृष्णै रुधिरं स्रवन्तं रक्तात्मकं पित्तसमानलिङ्गम्
सकण्डुरैः शोथयुतैर्महद्भिः शुक्लैर्घनैः स्रावयुतैः कफेन
नानाविधस्रावरुजोपपन्नमसाध्यमाहुस्त्रिमलोपदंशम् ३
प्रशीर्णमांसं कृमिभिःप्रजग्धं मुष्कावशेषं परिवर्जनीयम् ४
सञ्जातमात्रे न करोति मूढः क्रियां नरो यो विषये प्रसक्तः
कालेन शोथकृमिदाहपाकैः प्रशीर्णशिश्नो म्रियते स तेन ५
उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः
मेढ्रमध्ये शिरां विध्यात्पातयेद्वा जलौकसः ६
हरेदुभयतश्चापि दोषानत्यर्थमूर्च्छितान्
सद्यो निर्हृतदोषस्य रुक्शोथावुपशाम्यतः ७
यदि वा दुर्बलोजन्तुर्न वा प्राप्तविरेचनः
निरूहेण हरेत्तस्य दोषानत्यर्थमूर्च्छितान्
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ८
प्रपौण्डरीकयष्ट्याह्वसरलागुरुदारुभिः
सरास्नाकुष्ठपृथ्वीकैर्वातिके लेपसेचने ९
निचुलैरण्डबीजानि यवगोधूमसक्तवः
एतैश्च वातजं स्निग्धैः सुखोष्णैः सम्प्रलेपयेत् १०
गैरिकाञ्चनमञ्जिष्ठा मधुकोशीरपद्मकैः

सचन्दनोत्पलैः स्निग्धः पैत्तिकं सम्प्रलेपयेत् ११
पद्मोत्पलमृणालैश्च ससर्जार्जुनवेतसैः
सर्पिः स्निग्धैः समधुकैः पैत्तिकं सम्प्रलेपयेत् १२
सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः
अथवाऽपि सुशीतेन कषायेण वटादिना १३
शालाजकर्णाश्वकर्णधवत्वग्भिः कफोत्थितम्
सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत् १४
आरग्वधादिक्वाथेन परिषेकञ्च दापयेत् १५
निम्बार्जुनाश्वत्थकदम्बशालजम्बूवटोदुम्बरवेतसैश्च
प्रक्षालनालेपकृतानिकुर्याच्चूर्णं सपित्तास्त्रभवोपदंशे १६
त्वचो दारुहरिद्रायाः शङ्खनाभी रसाञ्जनम्
लाक्षागोमयनिर्यासस्तैलं क्षौद्रं घृतं पयः १७
एभिस्तु पिष्टैस्तुल्यांशैरुपदंशं प्रलेपयेत्
व्रणाश्च तेन शाम्यन्ति श्वयथुर्दाह एव च १८
उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत्क्रियाम्
तयोरेव च या योग्या वीक्ष्य दोषबलाबलम् १९
शस्त्रेणोल्लेखयेत्क्वापि पाकमागतमाशु वै
तमपोह्य तिलैः सर्पिः क्षौद्रयुक्तैः प्रलेपयेत् २०
वटप्ररोहार्जुनजम्बुपथ्या लोध्रं हरिद्रा च हिताः प्रलेपे
तथोपदंशेष्ववरोहणार्थं चूर्णञ्च कार्यं विमलाञ्जनेन २१
त्रिफलायाः कषायेण भृङ्गराजरसेन वा
व्रणप्रक्षालनं कार्यमुपदंशप्रशान्तये २२
जयाजपाऽश्वमारार्कशम्पाकानां दलैः क्रमात्
कृतं प्रक्षालनं क्वाथं मेढ्रपाके प्रयोजयेत् २३
शम्पाकनिम्बत्रिफलाकिरातक्वाथं पिबेद्वा खदिरासनाभ्याम्
सगुग्गुलुं वा त्रिफलायुतं वा सर्वोपदंशापहरःप्रयोगः २४
नीलोत्पलानि कुमुदं पद्मसौगन्धिकानि च
उपदंशेषु चूर्णानि प्रदेहोऽय प्रशस्यते २५
बन्धूकदलचूर्णेन दाडिमत्वग्रजोऽथवा
गुगडनं वृषणे  शस्तं लेपः पूगफलेन वा २६

सौराष्ट्री गैरिकं तुत्थं पुष्पकासीससैन्धवम्
लोध्रं रसाञ्जनञ्चापि हरितालं मनः शिला २७
हरेणुकैले तु तथा समं संहृत्य चूर्णयेत्
तच्चूर्णं क्षौद्रसंयुक्तमुपदंशेषु पूजितम् २८
पुटदग्धं कृतं भस्म हरितालं मनःशिला
उपदंशविसर्पाणामेतद्धानिकरं परम् २९
दहेत्कटाहे त्रिफलां तां मसीं मधुसैन्धवम्
उपदंशे प्रलेपोऽय सद्यो रोपयति व्रणम् ३०
तिरीटाञ्जनवज्राक्षकोविदारेभकेशरैः
लेपनं पुरुषव्याधौ जलपिष्टैः प्रशस्यते ३१
रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम्
सक्षौद्रं लेपनं योज्यं सर्वाङ्गगदापहम् ३२
भार्गीसम्भवशिखरिजमूलं भद्रश्रियं सुसम्पिष्टम्
मनःशिला वै मधुना शमयत्युपदंशमचिरेण ३३
शतधौतं प्रयत्नेन लिङ्गोत्थमवचूर्णयेत्
रोगं कासीसचूर्णेन पुरुषः सुखमाप्नुयात् ३४
करवीरस्य मूलेन परिपिष्टेन वारिणा
असाध्याऽपि व्रजत्यस्तं लिङ्गोत्था रुक्प्रलेपनात् ३५
वरानिम्बार्जुनाश्वत्थखदिरासनवासकैः
चूर्णितैर्गुग्गुलुसमैर्वटका अक्षसंमिताः ३६
कर्त्तव्या नाशयन्त्याशु सर्वांल्लिङ्गसमुत्थितान्
उपदंशानसृग्दोषांस्तथा दुष्टव्रणानपि ३७
करञ्जनिम्बार्जुनशालजम्बूवटादिभिः कल्ककषायसिद्धम्
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकस्त्रुतिरागयुक्तम् ३८
भूनिम्बनिम्बत्रिफलापटोलकरञ्जधात्रीखदिरासनानाम्
सतोयकल्कैर्घृतमाशु पक्वं सर्वोपदंशापहरं प्रदिष्टम् ३९
घृतानि यानि वक्ष्यामि कुष्ठे नाडीव्रणे व्रणे
उपदंशे प्रयोज्यानि सेकाभ्यञ्जनभोजनैः ४०
आगारधूमो रजनी सुराकिट्टं च तैस्त्रिभिः
यथोक्तैः पचेत्तैलं कण्डूशोथरुजाऽपहम्

शोधनं रोपणं चैव ह्युपदंशहरं परम् ४१
गोजीविडङ्गयष्टीभिः सर्वगन्धैश्च संयुतम्
एतत्सर्वोपदंशेषु तैलं रोपणमिष्यते ४२
जम्बुवेतसपत्राणि धात्रीपत्रं तथैव च
नक्तमालस्य पत्राणि तद्वत्पद्मोत्पलानि च ४३
एला चातिविषाऽम्रास्थि मधुकञ्च प्रियङ्गवः
लाक्षा कालीयकं लोध्रं चन्दनं त्रिवृताह्वया ४४
एतान्येकीकृतान्येव बस्तमूत्रेण पेषयेत्
अक्षमात्रैरिमैर्द्रव्यैस्तैलप्रस्थं विपाचयेत् ४५
सर्वव्रणहरं तैलमेतत्सिद्धं न संशयः
उपदंशहरं श्रेष्ठं मुनिभिः परिकीर्तितम् ४६
यस्य लिङ्गस्य मांसं तु शीर्यते मुष्कशेषतः ४७
तिक्तकोशातकीलाबुबीजं नागरसाधितम्
तैलं हन्त्यविशेषेण व्रणं दुष्टमनेकधा ४८
सेवेन्नित्यं यवान्नञ्च  पानीयं कौपमेव च
अर्शसां च्छिन्नदग्धानां क्रियां चात्र प्रयोजयेत् ४९
इत्येकपञ्चाशत्तम उपदंशाधिकारः समाप्तः ५१
अथ द्विपञ्चाशत्तमो लिङ्गार्शोऽधिकारः ५२
अङ्कुरैरिव सञ्जातैरुपर्युपरि संस्थितैः
क्रमेण जायते वर्त्तिस्ताम्रचूडशिखोपमा १
कोषस्याभ्यन्तरे सन्धौ पर्वसन्धिगतापि वा
लिङ्गवर्त्तिरिति ख्याता लिङ्गार्श इति चापरे
सवेदनापिच्छिला च दुश्चिकित्स्या त्रिदोषजा २
क्षारेण प्रदहेच्छित्त्वा लिङ्गवर्त्तिमशेषतः
व्रणवच्चाचरेत्सम्यक्  समं चूर्णमुपद्रवान् ३
स्वर्जिकातुत्थशैलेयमञ्जनं सरसाञ्जनम्
मनःशिलाऽले च समं चूर्णं मांसाङ्कुरापहम् ४
हरति घृतकुमारीपत्रमावेष्टेनेन ग्रथनविधिविशेषांश्चर्मकीलांस्तृतीये
अहनि गुरुतरानप्यङ्गलब्धप्रतिष्ठान् विधिरिव विपरीतः पौरुषस्य प्रकारान् ५
शुभे तु चारटीमूलं वृषमूत्रेण पेषयेत्

चर्मकीलान्निहन्त्याशु प्रलेपात्साधनोद्भवान् ६

इति द्विपञ्चाशत्तमो लिङ्गार्शोऽधिकारः समाप्तः ५२

अथ त्रिपञ्चाशत्तमः शूकदोषाधिकारः ५३

अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः
व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः १
शूकदोषा दश चाष्टौ च भवन्ति
गौरसर्षपसंस्थाना शूकदुर्भगहेतुका
पिडिका श्लेष्मवाताभ्यां ज्ञेया सर्षपिका तु सा २
कठिना विषमैर्भुग्नैर्वायुनाष्ठीलिका भवेत् ३
शूकैर्यत्पूरितं शश्वद् ग्रथितं नाम तत्कफात् ४
कुम्भिका रक्तपित्तात्स्याज्जाम्बुवास्थिनिभा सिता ५
अलजी स्यात्तथा यादृक्प्रमेहपिडका तथा
सा च रक्तासिता स्फोटचिता च कथिता बुधैः ६
मृदितं पीडितं यत्तु संरब्धं वातकोपतः ७
पाणिभ्यां भृशसंमूढे संमूढ पिडिका भवेत् ८
दीर्घा बह्व्यश्चपिडका दीर्यन्ते मध्यतस्तु याः
सोवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत् ९
पिडिका पिडिकाव्याप्ता पित्तशोणितसम्भवा
पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिकेति सा १०
स्पर्शहानिन्तु जनयेच्छोणितं शूकदूषितम् ११
मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा च या
एषोत्तमाख्यपिडका शूकाजीर्णसमुद्भवा १२
छिद्रैरणुमुखैलिङ्गं चिरं यस्य समन्ततः
वातशोणितजो व्याधिर्विज्ञेयःशतपोनकः १३
वातपित्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहकृत् १४
कृष्णैः स्फोटैः सरक्ताभिः पिडकाभिर्निपीडितम्
लिङ्गं वास्तुरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् १५
मांसदुष्टं विजानीयादर्बुदं मांससम्भवम् १६
शीर्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः
विद्यात् तं मांसपाकं तु सर्वदोषकृतं भिषक् १७

विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत् १८
कृष्णानि चित्राण्यथवा शुक्लानि सविषाणि तु
पातितानि पचन्त्याशु मेढ्रं निरवशेषतः १८
कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः
सन्निपातसमुत्थांश्च तान्विद्यात्तिलकालकान् १९
तत्र मांसार्बुदं यच्च मांसपाकश्च यःस्मृतः
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः २०
शूकदोषेषु सर्वेषु विषघ्नीं कारयेत्क्रियाम्
जलौकाभिर्हरेद्रक्तं रेचनं लघु भोजयेत्
गुग्गुलुं पाचयेच्चापि त्रिफलाक्वाथसंयुतम्
क्षीरेण लेपसेकांश्च शीतेनैव हि कारयेत् २१
दार्वीसुरसयष्ट्याह्वैर्गृहधूमनिशायुतैः
सम्पक्वं तैलमभ्यङ्गान्मेढ्ररोगं हि नाशयेत् २२
रसाञ्जनं साह्वयमेकमेव प्रलेपमात्रेण नयत्प्रशान्तिम्
सपूतिपूयव्रणशोथकण्डूशूलान्वितं सर्वमनङ्गरोगम् २३
इति त्रिपञ्चाशत्तमः शूकदोषाधिकारः समाप्तः ५३

अथ चतुष्पञ्चाशत्तमः कुष्ठरोगाधिकारः ५४

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च
भजतामागतां छर्दिं वेगांश्चान्यान्प्रतिघ्नताम् १
व्यायाममग्नितापञ्चाप्यतिभुक्त्वा निषेविणाम्
शीतोष्णलङ्घनाहारान्क्रमं मुक्त्वा निषेविणाम् २
घर्मश्रमभयार्त्तानां द्रुतं शीताम्बुसेविनाम्
अजीर्णाध्यशिनां चापि पञ्चकर्मापचारिणाम् ३
नवान्नदधिमत्स्यादिलवणाम्लनिषेविणाम्
माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ४
व्यवायं चाप्यजीर्णेऽन्ने दिवानिद्रां निषेविणाम्
विप्रान्गुरून्धर्षयतां पापं कर्म च कुर्वताम् ५
वातादयस्त्रयो दोषास्त्वग्रक्तं मांसमम्बु च
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसङ्ग्रहः

अतः कुष्ठानि जायन्ते सप्तधैकादशैव च ६
पूर्वं त्रिकं तथा सिध्मं ततः काकणकं तथा
पुण्डरीकर्क्षजिह्वके महाकुष्ठानि सप्त च ७
एककुष्ठं स्मृतं पूर्वं गजचर्म ततः स्मृतम्
ततश्चर्मदलं प्रोक्तं ततश्चापि विचर्चिका ८
विपादिकाऽभिधा सैव पामा कच्छूस्ततः परम्
दद्रुविस्फोटकिटिभालसकानि च वेष्टितम् ९
क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैः १०
कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ११
अतिश्लक्ष्णः खरस्पर्शः स्वेदास्वेदविवर्णता
दाहःकण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः क्लमः १२
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम्
रोमहर्षोऽसृजः काष्ण्यं कुष्ठलक्षणमग्रजम् १३
दूषयन्ति श्लथीकृत्य निश्चलत्वादितस्ततः
त्वचः कुर्वन्ति वैवर्ण्यं दोषाः कुष्ठमुशन्ति तम् १४
वातेन कुष्ठं कापालं पित्तेनौदुम्बरं कफात्
मण्डलाख्यं विचर्ची च ऋक्षाख्यं वातपित्ततः १५
चर्मैककुष्ठकिटिभसिध्मालसविपादिकाः
वातश्लेष्मोद्भवाः पित्तकफाद्दद्रुशतारुषी १६
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा
सर्वैरेवोल्वणैर्दोषैराहुः काकणकं बुधाः १७
कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु
कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् १८
उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत्
रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम् १९
श्वेतरक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम्
कृच्छ्रमन्योऽन्यसंसक्तं कुष्ठं मण्डलमुच्यते २०
श्वेतताम्रञ्च तनु यद्रजो घृष्टं विमुञ्चति

प्रायेणोरसि तत्सिध्ममलाबुकुसुमोपमम् २१
यत्काकणन्तिकावर्णमपाकं तीव्रवेदनम्
त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिध्यति २२
तच्छ्वेतं रक्तपर्यन्तं पुगडरीकदलोपमम्
सरागञ्चैव सोत्सेधं पुगडरीकं कफोल्वणम् २३
कर्कशं रक्तपर्यन्तमन्तः श्यावं सवेदनम्
यदृक्षजिह्वासंस्थानमृक्षजिह्वं तदुच्यते २४
अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम्
तदेककुष्ठं चर्माख्यं बहलं गजचर्मवत् २५
रक्तं सशूलं कगडूमत्सस्फोटं दलयत्यपि
तच्चर्मदलमाख्यातं स्पर्शस्यासहनञ्च यत् २६
सकगडूः पिडका श्यावा बहुस्रावा विचर्चिका २७
वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् २८
सूक्ष्मा बह्व्यः स्राववत्यः प्रदाहाः पामेत्युक्ताः पिडकाः कगडुमत्यः २९
सैव स्फोटस्तीव्रदाहैरुपेता ज्ञेया पागयोः कच्छुरुग्रा स्फिचोश्च ३०
सकगडूरागपिडकं दद्रुर्मगडलमुद्गतम् ३१
स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ३२
श्यामं किणखरस्पर्शं परुषं किटिभं स्मृतम् ३३
कगडूमद्भिः सरागैश्च गगडैरलसकं चितम् ३४
रक्तश्यावं सदाहार्त्ति शतारुःस्याद् बहुव्रणम् ३५
त्वक्स्थे वैवगर्यमङ्गेषु कुष्ठे रौक्ष्यञ्च जायते
त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम् ३६
कगडूर्विपूयकश्चैव कुष्ठे शोणितसम्भवे ३७
बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः
तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते ३८
कौगयं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम्
मेदः स्थानगते लिङ्गं प्रागुक्तानि तथैव च ३९
नासाभङ्गोऽक्षिरागश्च क्षतेषु कृमिसम्भवः
स्वरोपघातः पीडा च भवेत्कुष्ठेऽस्थिमज्जगे ४०
दम्पत्योः कुष्ठबाहुल्याद् दुष्टशोणितशुक्रयोः

यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ४१
खरं श्यावारुणं रूक्षं वातकुष्ठं सवेदनम्
पित्तात्प्रकुथितं दाहरागस्रावान्वितं मतम्
कफोत्क्लेदि घनं स्निग्धं सकण्डूशैत्यगौरवम्
द्विलिङ्गं द्वन्द्वजं कुष्ठं त्रिलिङ्गं सान्निपातिकम् ४२
साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकञ्च यत्
मेदोगं द्वन्द्वजं याप्यं वर्ज्यं मज्जास्थिसंश्रितम्
कृमिकृद् दाहमन्दाग्निसंयुक्तं यत् त्रिदोषजम् ४३
प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम्
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ४४
कुष्ठैकसम्भवं श्वित्रं किलासं चारुणं भवेत्
निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ४५
वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत्
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु
सकण्डूकं क्रमाद्रक्तमांसमेदःसु चादिशेत्
वर्णैनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ४६
अशुक्लरोमाबहलमसंश्लिष्टमथो नवम्
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ४७
गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम्
वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता ४८
प्रसङ्गाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनात्
एकशय्याऽसनाच्चापिवस्त्रमाल्यानुलेपनात्
कण्डूकुष्ठोपदंशाश्च भूतोन्मादव्रणज्वराः
औपसर्गिकरोगाश्च सङ्क्रामन्ति नरान्नरम् ४९
म्रियते यदि कुष्ठेन पुनर्जातस्य तद्भवेत्
अतो निन्दितरोगोऽय कुष्ठं कष्टं प्रकीर्त्तितम् ५०
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु
पित्तोत्तरेषु लेपः सेको रक्तस्य मोचनं श्रेष्ठम् ५१
पथ्याकरञ्जसिद्धार्थनिशाऽवल्गुजसैन्धवैः
विडङ्गसहितैः पिष्टैर्लेपो मूत्रेण कुष्ठनुत् ५२

सोमराजीभवं चूर्णं शृङ्गबेरसमन्वितम्
उद्वर्त्तनमिदं हन्ति कुष्ठमुग्रं कृतास्पदम् ५३
रसायनं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम्
मार्कण्डेयप्रभृतिभिर्यत्प्रयुक्तं महर्षिभिः ५४
पुष्पकाले तु पुष्पाणि फलकाले फलानि च
संगृह्य पिचुमर्दस्य त्वङ्मूलानि दलानि च ५५
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत्
त्रिफला त्र्यूषणं ब्राह्मी श्वदंष्ट्राऽरुष्कराग्नयः ५६
विडङ्गसारवाराहीलोहचूर्णामृताः समाः
निशाद्वयावल्गुजकं व्याधिघातः सशर्करः ५७
कुष्ठमिन्द्रयवाः पाठाः चूर्णमेषां तु संयुतम्
खादिरासननिम्बानां घनक्वाथेन भावयेत्
सप्तधा पञ्चनिम्बं तु मार्कवस्यरसेन च
स्निग्धः शुद्धतनुर्धीमान्योजयेत्तच्छुभे दिने ५८
मधुना तिक्तहविषा खदिरासनवारिणा
लेह्यमुष्णाम्भसा वाऽपि कालवृद्ध्या पलं भवेत्
जीर्णे तस्मिन्समश्नीयात्स्निग्धं लघु हितञ्च यत् ५९
विचर्चिकौदुम्बर पुण्डरीककापालदद्रूकिटिभालसादि
शतारुविस्फोटविसर्पमालाः कफप्रकोपं त्रिविधं किलासम् ६०
भगन्दरश्लीपदवातरक्तजडान्ध नाडीव्रणशीर्षरोगान्
सर्वान्प्रमेहान्प्रदरांश्च सर्वान्दंष्ट्राविषं मूलविषं निहन्ति ६१
स्थूलोदरः सिंहकृशोदरः स्यात्सुश्लिष्टसन्धिर्मधुनोपयोगात्
सदोपयोगादपि ये दशन्ति सर्पादयो यान्ति विनाशमाशु ६२
जीवेच्चिरं व्याधिजराविमुक्तः शुभे रतश्चन्द्रसमानकान्तिः ६३
शशिलेखा पञ्चपलं तावद्गिरिजस्य गुग्गुलोस्तु दश
ताप्यस्य पलत्रितयं द्वे लोहस्त्रावणीकयोश्च पले ६४
त्रिफलाकरञ्जपल्लवखदिरगुडूचीत्रिवृद्दन्त्यः
मुस्ताविडङ्गरजनीकुटजत्वङ्निम्बवह्निसंपाकाः ६५
एतै रचितां वटिकां मधुसंमिश्रां गिलेत्प्रातः
गोमूत्रेण च कुष्ठं नुदत्यसृग्वातमचिरेण ६६

श्वित्राणि पाराडुरोगं विषमानुदरप्रमेहगुल्मांश्च
नाशयति वलीपलितं योगः स्वायम्भुवो नाम्ना ६७
चित्रकं त्रिफला व्योषमजाजी कारवी वचा
सैन्धवातिविषाकुष्ठं चव्यैला च यवासकम् ६८
विडङ्गान्यजमोदा च मुस्ता चामरदारु च
यावन्त्येतानि सर्वाणि तावन्मानन्तु गुग्गुलोः ६९
सङ्कुटय सर्पिषा सार्द्धं गुटिकां कारयेद्भिषक्
प्रातर्भोजनकाले च खादेदग्निबलं यथा ७०
हन्त्यष्टादश कुष्ठानि कृमिदुष्टव्रणानि च
ग्रहरायर्शोविकारांश्च मुखामयगलग्रहान् ७१
गृध्रसीमथ भग्नञ्च गुल्मं चापि नियच्छति
व्याधीन्कोष्ठगतांश्चापि जयेद्विष्णुरिवासुरान् ७२
वातरक्ताधिकारोक्तः पुरः कैशोरकाभिधः
कुष्ठानां वातरक्तानां नाशनं परमौषधम् ७३
भल्लातकप्रस्थयुगं छित्वा द्रोणजले क्षिपेत्
प्रस्थद्वयंगुडूच्याश्च क्षुराणं तत्राम्भसि क्षिपेत्
चतुर्थांशावशेषं तु कषायमवतारयेत्
वस्त्रपूते कषाये तु वक्ष्यमाणं विनिक्षिपेत् ७५
शरावमात्रकंसर्पिर्दुग्धं स्यादाढकं तथा
सितां प्रस्थमितां दद्यात्प्रस्थार्द्धं माक्षिकं क्षिपेत् ७६
सर्वारायेकत्र भाराडे तु पचेन्मृद्वग्निना शनैः
सर्वद्रवे घनीभूते पावकादवतारयेत् ७७
तत्र क्षेप्याणि चूर्णानि ब्रूमो बिल्वविषामृताः
वाकुची चाथ दद्रघ्नुः पिचुमर्दो हरीतकी ७८
अक्षो धात्री च मञ्जिष्ठा मरिचं नागरं कणा
यवानी सैन्धवं मुस्तं त्वगेला नागकेशरम् ७९
पर्पटं पत्रकं बालमुशीरं चन्दनं तथा
गोक्षुरस्य च बीजानि कर्चूरो रक्तचन्दनम् ८०
पृथक्पलार्द्धमानानां चूर्णमेषामिह क्षिपेत्
पलमात्रमितं प्रातः समश्नीयाज्जलेन हि ८१

नाशयेदवलेहोऽय पथ्यान्यन्नानि खादतः
कुष्ठानि वातरक्तानि सर्वारयर्शांसि सेवितः ८२
व्यायाममातपं वह्निमम्लं मांसं दधि स्त्रियम्
तैलाभ्यङ्गं तथाध्वानं नरो भल्लातकी त्यजेत् ८३
निम्बगोपारुणाः कट्वी त्रायन्ती त्रिफला घनम्
पर्पटावल्गुजानन्तावचाखदिरचन्दनम् ८४
पाठाशुराठीशटीभार्गीवासाभूनिम्बवत्सकम्
श्यामेन्द्रवारुणीमूर्वाविडङ्गेन्द्रयवानलम् ८५
हस्तिकर्णामृताद्रेकापटोलरजनीद्वयम्
कणारग्वधसप्ताह्वत्रिवृद्वेत्रोच्चटाफलम् ८६
मञ्जिष्ठा लाङ्गली रास्ना नक्तमालं पुनर्नवा
दन्तीबीजकसारञ्च भृङ्गराजं कुरराटकम् ८७
अङ्कोटकञ्च शाखोटं द्विपलांशं पृथक्पृथक्
गृह्णीयात्तानि सर्वाणि जलद्रोणे पचेच्छनैः ८८
अष्टमांशावशेषन्तु कषायमवतारयेत्
विधाय वाससा पूतं स्थापयेद्भाजने दृढे ८९
भल्लातकसहस्राणि च्छित्वा तु त्र्यर्मणाम्भसि
पचेदष्टावशेषं तत्कषायमवतारयेत् ९०
तच्च वस्त्रेण संशोध्य द्वौ कषायौ विमिश्रयेत्
गुडं शतपलं दत्वा लेहवत्तत्पचेच्छनैः ९१
त्रिकटु त्रिफला मुस्तं विडङ्गं चित्रकं तथा
सैन्धवं चन्दनं कुष्ठं दीप्यकञ्च पलं पृथक्
सौगन्ध्यार्थं क्षिपेत्तत्र चातुर्जातं पलं पलम् ९२
महाभल्लातको ह्येष महादेवेन भाषितः
प्राणिनां हितकामेन जयेच्छीघ्रं प्रयोजितः ९३
श्वित्रमौदुम्बरं दद्रुमृक्षजिह्वन्तु काकणम्
पुराडरीकं सचर्माख्यं विस्फोटं रक्तमराडलम् ९४
कराडूं कपालकं कुष्ठं पामानञ्च विपादिकाम्
वातरक्तं षडर्शांसि पाराडुरोगव्रणान्कृमीन् ९५
रक्तपित्तमुदावर्त्तं कासं श्वासं भगन्दरम्

सदाभ्यासेन पलितमामवातं सुदुस्तरम् ९६
निर्यन्त्रणस्तु कथितो विहाराहारमैथुने
कुरुते परमां कान्तिं प्रदीप्तं जठरानलम्९७
अनुपानं प्रयोक्तव्यं छिन्नातोयं पयोऽथवा
भोजने तु सदा त्याज्यमुष्णमम्लं विशेषतः ९८
मञ्जिष्ठा त्रिफला तिक्ता वचादारुनिशाऽमयाः
निम्बश्चैषां कृतः क्थाथः सर्वकुष्ठं विनाशयेत् ९९
वातरक्तं तथा कण्डूं पामां वै रक्तमण्डलम्
दद्रूं विसर्पं विस्फोटं पानाभ्यासेन नाशयेत् १००
मञ्जिष्ठा वाकुची चक्रमर्दश्च पिचुमर्दकः
हरीतकी हरिद्रा च धात्री वासा शतावरी १०१
बला नागबला यष्टीमधुकं क्षुरकोपि च
पटोलस्य लतोशीरं गुडूची रक्तचन्दनम् १०२
मञ्जिष्ठादिरयं क्वाथः कुष्ठानां नाशनः परः
वातरक्तस्य संहर्त्ता कण्डूमण्डलनाशनः १०३
मञ्जिष्ठाकुटजामृताघन वचामुण्डीहरिद्राद्वयं
क्षुद्रारिष्टपटोलतिक्तकटु काभार्गीविडङ्गाग्निकम्
मूर्वादारुकलिङ्गभृङ्गम गधात्रायान्तपाठावरी गायत्री
त्रिफलाकिरातकमहानिम्बासनारग्वधाः १०४
श्यामावल्गुजचन्दनं वरुणकं दन्तीकशाखोटकं-
वासासर्पटसारिवा प्रतिविषानन्ताविशालाजलम्
मञ्जिष्ठाप्रथमं कषायमिति यः संसेवते तस्य तु त्वग्दोषाः सुचिरेण यान्ति
विलयं कुष्ठानि चाष्टादश १०५
नाशं गच्छति वातरक्तमखिला नश्यन्ति रक्तामयाः
वीसर्पस्त्वचि शून्यता नयनजा रोगाः प्रशाम्यन्ति च १०६
मरिचं त्रिवृता मुस्तं हरितालं मनः शिला
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् १०७
विशाला करवीरञ्च क्षीरमर्कसमुद्भवम्
गोमयस्य रसं कुर्यात्प्रत्येकं कर्षसम्मितम्१०८
विषस्यार्द्धपलं देयं तैलं प्रस्थमितं कटु

पचेच्चतुर्गुणे नीरे गोमूत्रे द्विगुणे तथा १०९
मरिचाद्यमिदं तैलमभ्यङ्गात्कुष्ठनाशनम्
एतस्याभ्यङ्गतः श्वित्रं विवर्णं तत्क्षणाद्भवेत् ११०
तैलमेतज्जयेत्कण्डूं पामां सिध्मविचर्चिकाम्
पुण्डरीकं तथा दद्रुं शून्यतां नित्यसेविनाम् १११
मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ११२
विशाला करवीरञ्च हरितालं मनःशिला
चित्रकं लाङ्गली मुस्तं विडङ्गं चक्रमर्दकः ११३
शिरीषःकुटजो निम्बः सप्तपर्णोऽमृता स्नुही
श्यामाको नक्तमालश्च खदिरो वाकुची वचा ११४
ज्योतिष्मती च पलिका विषं द्विपलिकं भवेत्
आढकं कटुतैलस्य गोमूत्रञ्च चतुर्गुणम् ११५
मृत्पात्रे लोहपात्रे च शनैर्मृद्वग्निना पचेत्
मरिचाद्यमिदं तैलं महन्मुनिभिरीरितम् ११६
भिषगेतेन तैलेन म्रक्षयेत्कौष्ठिकान्व्रणान्
पामाविचर्चिकादद्रूकण्डूविस्फोटकानि च ११७
वलयः पलितं छाया नीलं व्यङ्गं तथैव च
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्यञ्च जायते ११८
प्रथमे वयसि स्त्रीणां यासां नस्यं प्रदीयते
तासामपि जरां प्राप्य न स्यातां स्खलितौ स्तनौ ११९
बलीवर्दस्तुरङ्गो वा गजो वा वायुपीडितः
त्रिभिरभ्यञ्जनैरस्य भवेन्मारुतविक्रमः १२०
तालताप्यशिलासूतटङ्कणाः सिन्धुसंयुताः
गन्धको द्विगुणः सूताच्छङ्खचूर्णञ्च तत्समम् १२१
जम्बीराद्भिर्दिनं घृष्ट्वा त्रिंशदंशं विषं क्षिपेत्
अस्य माषद्वयं खादेन्महिषीघृतसंयुतम् १२२
मध्वाज्यैर्वाकुचीबीजकर्षं लिह्यात्ततः परम्
तालकेश्वरनामाऽय सर्वकुष्ठहरो रसः १२३
रसो वलिस्ताम्रमयः पुरोग्निः शिलाजतु स्याद्विषतिन्दुकश्च

वरा च तुल्यं गगनञ्च सर्वैः करञ्जबीजं सचतुष्टयञ्च १२४
सम्मर्द्य सर्वं मधुना घृतेन घृतस्य पात्रे निहितं प्रयत्नात्
कर्षं भजेत्प्रत्यहमस्य पथ्यं शाल्योदनं दुग्धमधुत्रयञ्च १२५
विशीर्णकर्णाङ्गुलिनासिकोऽपि भवेदनेन स्मरतुल्यमूर्त्तिः
दारापरित्याग इह प्रदिष्टो जलौदनं तत्र निबद्धमूले १२६
कुष्ठं मूलकबीजं प्रियङ्गवः सर्षपास्तथा रजनी
एतत्केशरषष्ठं निहन्ति चिरकालजं सिध्मम् १२७
शिखरीरसेन पिष्टं मूलकबीजं प्रलेपतः सिध्मम्
क्षारेण वा कदल्या रजनीमिश्रेण नाशयति १२८
दार्वीमूलकबीजानि तालकं सुरदारु च
ताम्बूलपत्रं सर्वाणि कार्षिकाणि पृथक्पृथक् १२९
शङ्खचूर्णन्तु शाणं स्यात्सर्वाण्येकत्र वारिणा
प्रलेपयेत्प्रलेपोऽय सिध्मनाशन उत्तमः १३०
सलिले चाम्रपेशी तु किञ्चित्सैन्धवसंयुता
ताम्रपात्रे विनिर्घृष्टा लेपाच्चर्मदलापहा १३१
सलिलेन तु शुष्काणि घृष्ट्वा धात्रीफलानि च
कराभ्यां सुखमाप्नोति नरश्चर्मदलान्वितः १३२
जीरकस्य पलं पिष्टं सिन्दूरार्द्धपलं तथा
कटुतैलं पचेदाभ्यां सर्वपामाहरं परम् १३३
मञ्जिष्ठात्रिफलालाक्षालाङ्गली रात्रिगन्धकैः
चूर्णितैस्तैलमादित्यपाकं पामाहरं परम् १३४
सैन्धवं चक्रमर्दश्च सर्षपाः पिप्पली तथा
आरनालेन संपिष्टाः पामाकण्डूहराः पराः १३५
अर्कपत्ररसे पक्वं हरिद्राकल्कसंयुतम्
नाशयेत्सार्षपं तैलं पामाकच्छूविचर्चिकाः १३६
मनः शिलाऽल कासीसं गन्धाश्म सिन्धुजन्म च
स्वर्णक्षीरी शिलाभेदी शुण्ठी कुष्ठञ्च मागधी १३७
लाङ्गली करवीरञ्च दद्रुघ्नः कृमिहाऽनलः
दन्ती निम्बदलं चैभिः पृथक्कर्षमितैर्भिषक् १३८
कल्लीकृत्य पचेत्तैलं कटु प्रस्थद्वयोन्मितम्

अर्कसेहुराडदुग्धेन पृथक्पलमितेन च १३९
गोमूत्रस्याढकेनापि शनैर्मृद्वग्निना पचेत्
अभ्यङ्गेन हरेदेतत्कच्छू दुःसाध्यतामपि १४०
पामानञ्च तथा कराडूं त्वग्व्याधिरुधिरामयान्
कराडूराक्षसनामेदं तैलं हारीतभाषितम् १४१
कृतमालस्य पत्राणि नक्तमालदलानि च
द्रोणपुष्पीपलाशानि सर्षपा राजिका निशा १४२
कुटजो मधुकं मुस्तं नागरं रक्तचन्दनम्
धांत्री यवानिका दारु कल्क एष प्रकल्पितः १४३
उद्वर्त्तनादयं कल्कः कटुतैलसमन्वितः
कच्छूं पामां हरत्येव शीतपित्तादिकान्गदान् १४४
कुष्ठं कृमिघ्नो दद्रुघ्नो निशासैन्धवसर्षपाः
अम्लपिष्टः प्रलेपोऽय दद्रुकुष्ठनिषूदनः १४५
दूर्वाभयासैन्धवचक्रमर्दकुठेरकाः काञ्जिकतक्रपिष्टाः
त्रिभिः प्रलेपैरपि बद्धमूलां दद्रूञ्च कुष्ठञ्च विनाशयन्ति १४६
गराडलिकाख्यं तृणमपि सिद्धार्थकश्च स्नुहीपत्रम्
त्रयमपि समभागं स्यादेषां द्विगुणस्तु दद्रुघ्नः १४७
अष्टगुणे गोतक्रे तानि प्रकृतानि सन्दध्यात्
दिवसत्रितयादूर्ध्वं सम्यङ्निष्पेषयेत्तानि१४८
वन्योपलेन घृष्ट्वा च दद्रुमालेपयेत्तेन
सप्ताहाल्लेपोऽय दद्रूमचिराद्विनाशयति १४९
बिभीतकत्वङ्मलयूजटानां क्वाथेन पीतं गुडसंयुतेन
आवल्गुजं बीजमपाकरोति श्वित्राणि कृच्छ्रारायपि पुराडरीकम् १५०
कुडवमवल्गुणबीजं हरितालचतुर्थभागसम्मिश्रम् १५१
मनः शिलां तोलकार्द्धं गुञ्जाफलमग्निमूलञ्च
मूत्रेण गवां पिष्टं सवर्णताकारकं श्वित्रे १५२
श्वेतं कुष्ठं व्रजत्यस्तं पक्षार्द्धेनाधिकेन वा
गिरिकरार्यास्तु कृष्णाया मूलेन परिलेपितम् १५३
क्वाथः सवाकुचीचूर्णो धात्रीखदिरसारयोः
शङ्खेन्दुकुन्दधवलं श्वित्रं संसेवितो हरेत् १५४

मथितेन पिबेच्चूर्णं काकोदुम्बर्यवल्गुजम्
तैलाक्तो घर्मसेवी स्यात्तक्राशी श्वित्रहृद्भवेत् १५५
चतुष्पलं सोमराज्याः खदिरस्य पलं तथा
पटोलमूलं त्रिफला त्रायमाणा दुरालभा १५६
कल्कार्थं कटुकं चापि कार्षिकान्सूक्ष्मपेषितान्
पलद्वयं कौशिकस्य शुद्धस्यात्र प्रदापयेत् १५७
सिद्धं सर्पिरिदं श्वित्रं हन्यादम्भ इवानलम्
अष्टादशानां कुष्ठानां परमं चैतदौषधम् १५८
सोमराजीघृतं नाम निर्मितं ब्रह्मणा पुरा
लोकानामुपकाराय श्वित्रकुष्ठादिरोगिणाम् १५९
इति चतुष्पञ्चाशत्तमः कुष्ठाधिकारः समाप्तः ५४

अथ पञ्चपञ्चाशत्तमः शीतपित्तोदर्दकोठोत्कोठाधिकारः ५५

शीतमारुतसम्पर्कात्प्रवृद्धौ कफमारुतौ
पित्तेन सह सम्भूय बहिरन्तर्विसर्पतः १
पिपासाऽरुचिहृल्लास देहसादाङ्गगौरवम्
रक्तलोचनता तेषां पूर्वरूपस्य लक्षणम् २
वरटीदष्टसंस्थानः शोथः सञ्जायते बहिः
सकण्डूतोदबहुलश्छर्दि ज्वरविदाहवान्
वाताधिकतमं विद्याच्छीतपित्तमिमं भिषक् ३
सोत्सङ्गैश्च सरागैश्च कण्डूमद्भिश्च मण्डलैः
शैशिरः श्लेष्मबहुल उदर्दइति कीर्त्तितः ४
असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ५
मण्डलानि सकण्डूनि रागवन्ति बहूनि च
सानुबन्धस्तु स प्राज्ञैरुत्कोठ इति कथ्यते ६
शीतपित्ते तु वमनं पटोलारिष्टवासकैः
त्रिफलापुरकोष्णाभिर्विरेकश्च प्रशस्यते ७
अभ्यङ्गः कटुतैलेन सेकश्चोष्णेन वारिणा
त्रिफलां क्षौद्रसंयुक्तां खादेच्च नवकार्षिकम् ८
त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता

गुटिका शीतपित्तार्शोभगन्दरवतां हिता ९
इति नव कार्षिकः
सितां त्रिकटुसंयुक्तां गुडमामलकैः सह
यवानीं खादयेच्चापि सव्योषक्षारसंयुताम् १०
आर्द्रकस्य रसःपेयः पुराणगुडसंयुतः
शीतपित्तापहः श्रेष्ठो वह्निमान्द्यविनाशनः ११
सिद्धार्थरजनीकल्कैः प्रपुन्नाटतिलैः सह
कटुतैलेन सम्मिश्रमेतदुद्वर्त्तनं हितम् १२
सुगुडं दीप्यकं यस्तु खादेत्पथ्यान्नभुङ्नरः
तस्य नश्यति सप्ताहादुदर्दःसर्वदेहजः १३
घृतं पीत्वा महातिक्तं शोणितं मोक्षयेत्तथा
स्निग्धस्विन्नस्य संशुद्धिमादौ कोठे समाचरेत्
उत्कोठे शुद्धदेहस्य कुष्ठघ्नीं कारयेत्क्रियाम् १४
निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राणि नरः प्रयुञ्ज्यात्
विस्फोटकराड्कृमिशीतपित्तमुदर्दकोठौ च कफञ्च हन्यात् १५
आर्द्रकं प्रस्थमेकं स्याद् गोघृतं कुडवद्वयम्
गोदुग्धं प्रस्थयुगलं तदर्द्धं शर्करा मता १६
पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम्
चित्रकञ्च विडङ्गञ्च मुस्तकं नागकेशरम् १७
त्वगेलापत्रकर्चूरं प्रत्येकं पलमात्रकम्
विधाय पाकं विधिवत्खादेत्तत्पलसम्मितम् १८
इदमार्द्रकखराडं हि प्रातर्भुक्तं व्यपोहति
शीतपित्तमुदर्दञ्च कोठमुत्कोठमेव च
यक्ष्माणं रक्तपित्तञ्च कासं श्वासमरोचकम्
वातगुल्ममुदावर्तं शोथं कराडूं कृमीनपि २०
दीपयेदुदरे वह्निं बलं वीर्यञ्च वर्द्धयेत्
वपुः पुष्टं प्रकुरुते तस्मात्सेव्यमिदं सदा २१
इति पञ्चपञ्चाशत्तमः शीतपित्तोदर्दकोठोत्कोठाधिकारः समाप्तः ५५

## अथ षट्पञ्चाशत्तमो विसर्पाधिकारः ५६

लवणाम्ल कटूष्णादिसेवनाद्दोषकोपतः
विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात् १
विसर्पस्य सप्तधात्वं विवृणोति
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः २
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः
यस्तु कर्दमको घोरः स पित्तकफसम्भवः ३
रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः
विसर्पाणां समुत्पत्तौ हेतवः सप्त धातवः ४
तत्र वातात्परीसर्पो वातज्वरसमव्यथः
शोफस्फुरणनिस्तोदभेदायामार्त्तिहर्षवान् ५
पित्ताद् द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ६
कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ७
सन्निपातसमुत्थश्च सर्वरूपसमन्वितः ८
वातपित्ताज्ज्वरच्छर्दिमूर्च्छाऽतीसारतृड्भ्रमैः
अस्थिभेदाग्निसदनतमकारोचकैर्युतः
करोति सर्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत्
यं यं देशं विसर्पश्च विसर्पति भवेत्स सः ९
शीताङ्गारासितो नीलो रक्तो वाऽशूपचीयते
अग्निदग्ध इव स्फोटः शीघ्रगत्वाद् द्रुतञ्च सः १०
मर्मानुसारी वीसर्पःस्याद्वातोऽतिबलस्ततः
व्यथेताङ्गं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत् ११
हिध्माञ्च स गतोऽवस्थामीदृशीं लभते न ना
क्वचिच्छर्मारतिग्रस्तो भूमिशय्याऽसनादिषु १२
चेष्टमानस्ततः क्लिष्टो मनोदेहसमुद्भवाम्
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते १३
कफेन रुद्धः पवनो भित्वा तं बहुधा कफम्
रक्तं वा वृद्धरक्तस्य त्वक्शिरास्नायुमांसगम् १४
दूषयित्वा तु दीर्घाणां वृत्तस्थूलखरात्मनाम्
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् १५

श्वासकासातिसारास्य शोषहिक्कावमिभ्रमैः
मोहवैवर्ण्यमूर्च्छाऽङ्ग भङ्गाग्निसदनैर्युतः
इत्ययं ग्रन्थिवीसर्पो वातश्लेष्मप्रकोपजः १६
कफपित्ताज्ज्वरस्तम्भनिद्रातन्द्राशिरोरुजाः
अङ्गावसादविक्षेपप्रलेपारोचकभ्रमाः १७
मूर्च्छाऽग्निहानिर्भेदोऽस्थ्ना पिपासेन्द्रियगौरवम्
सामोपवेसनं लेपः स्रोतसां स च सर्पति १८
प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक्
पिडकैरवकीर्णोऽतिपीतलोहितपाण्डुरः १९
स्निग्धोऽसितो मेचकाभो मलिनः शोफवान्गुरुः
गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते २०
पङ्कत्वक्शीर्णमांसश्च स्पष्टस्नायुशिरागणः
शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम् २१
सन्निपातसमुत्थस्तु सर्वरूपसमन्वितः २२
बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पित्तमीरयन्
विसर्पं मारुतः कुर्यात्कुलत्थसदृशैश्चितम्
स्फोटः शोथज्वररुजादाहाढ्यं श्यावशोणितम् २३
ज्वरातिसारौ वमथुस्त्वङ्मांसदरणक्लमाः
अरोचकाविपाकौ च विसर्पाणामुपद्रवाः २४
सिद्ध्यन्ति वातकफपित्तकृता विसर्पाः सर्वात्मकः क्षतकृतश्च न सिद्धिमेति
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः कृच्छ्राश्च मर्मसु भवन्ति हि सर्व एव २५
विरेकवमनालेप सेचनास्रविमोक्षणैः
उपाचरेद्यथादोषं विसर्पानविदाहिभिः २६
रास्ना नीलोत्पलं दारु चन्दनं मधुकं बला
घृतक्षीरयुतो लेपो वातवीसर्पनाशनः २७
कशेरुशृङ्गाटकपद्मगुन्द्रः सशैवलैः सोत्पलकर्दमैश्च
वस्त्रान्तरैः पित्तकृते विसर्पे लेपो विधेयः सघृतः सुशीतः २८
त्रिफलापद्मकोशीर समङ्गाकरवीरकम्
नलमूलमनन्ता च लेपः श्लेष्मविसर्पके २९
वातपित्तप्रशमनमग्निवीसर्पणे हितम्

वातश्लेष्महरं कर्म ग्रन्थिविसर्पणे हितम् ३०
पित्तश्लेष्मप्रशमनं हितं कर्दमसंज्ञके
त्रिदोषजे क्रियां कुर्याद्विसर्पे त्रितयापहाम् ३१
शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठबालैः
लेपो दशाङ्गः सघृतः प्रयोज्यो विसर्पकुष्ठज्वरशोथहारी ३२
परिषेकाः प्रलेपाश्च शस्यन्ते पञ्चवल्कलैः
पद्मकोशीरमधुकैश्चन्दनैर्वा विसर्पणे ३३
भूनिम्बवासाकटुकापटोलीफलत्रयीचन्दननिम्बसिद्धः
विसर्पदाहज्वरशोथकण्डूविस्फोटतृष्णावमिहृत्कषायः ३४
कुष्ठेषु यानि सर्पींषि व्रणेषु विविधेषु च
विसर्पे तानि योज्यानि सेकालेपनभोजनैः ३५
करञ्जसप्तच्छदलाङ्गली कस्नुह्यर्कदुग्धानलभृङ्गराजैः
तैलं निशामूत्रविषैर्विपक्वं विसर्पविस्फोटविचर्चिकाघ्नम् ३६
कुष्ठामयस्फोटमसूरिकोक्तचिकित्सयाऽप्याशु हरेद्विसर्पान्
सर्वान्विपक्वान्परिशोध्य धीमान्व्रणक्रमेणोपचरेद्यथोक्तम् ३७
इति षट्पञ्चाशत्तमो विसर्पाधिकारः समाप्तः ५६

अथ सप्तपञ्चाशत्तमो स्नायुरोगाधिकारः ५७

शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत्
भित्वैव तं क्षते तत्र सोष्म मांसं विशोष्य च १
कुर्यात्तन्तुनिभं सूत्रं तत्पिण्डैस्तक्रशक्तुजैः
शनैः शनैः क्षताद्याति च्छेदात्तत्कोपमावहेत् २
तत्पाताच्छोथशान्तिः स्यात्पुनः स्थानान्तरे भवेत्
स स्नायुरिति विख्यातः क्रियोक्ताऽत्र विसर्पवत् ३
बाह्वोर्यदि प्रमादेन त्रुटयते जङ्घयोरपि
सङ्कोचं खञ्जतां चापि च्छिन्नो नूनं करोत्यसौ ४
स्नेहस्वेदप्रलेपादि कर्म कुर्याद्यथोचितम्
रामठं शीततोयेन पीतं स्नायुकरोगनुत् ५
स्वेदात्स्नायुकमत्युग्रं भेकः काञ्जिकसाधितः
तद्वद् बब्बूलजं बीजं पिष्टं हन्ति प्रलेपनात् ६

गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुरडीस्वरसं त्र्यहम्
पिबेत्स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ७
मूलं सुषव्या हिमवारिपिष्टं पानादिदं तन्तुकरोगमुग्रम्
शान्तिं नयेत्सव्रणमाशु पुंसां गन्धर्वगन्धेन घृतेन पीत्वा ८
अतिविषमुस्तकभर्गीविश्वौषधपिप्पलीबिभीतक्यः
चूर्णमिदं तन्तुघ्नं पुंसामुष्णेन वारिणा पीतम् ९
शिग्रुमूलदलैः पिष्टैः काञ्जिकेन ससैन्धवैः
लेपनं स्नायुकव्याधेः शमनं परमं मतम् १०
अहिंस्त्रकमूलकल्केन तोयपिष्टेन यत्नतः
लेपसम्बन्धनात्तन्तुर्निःसरेन्नैव संशयः ११

इति सप्तपञ्चाशत्तमः स्नायुरोगाधिकारः समाप्तः ५७

अथाष्टपञ्चाशत्तमो विस्फोटकाधिकारः ५८

कट्वम्लतीक्ष्णोष्णविदाहिरुक्षक्षारैरजीर्णाध्यशनातपैश्च
तथर्त्तुदोषेण विपर्ययेण कुप्यन्ति दोषाः पवनादयस्तु १
त्वचमाश्रित्य ते रक्तं मांसास्थीनि प्रदूष्य च
घोरान्कुर्वन्ति विस्फोटान्सर्वाञ्ज्वरपुरःसरान् २
अग्निदग्धा इव स्फोटाः सज्वरा रक्तपित्तजाः
क्वचित्सर्वत्र वा देहे विफोटा इति ते स्मृताः ३
शिरोरुक् शूलभूयिष्ठं ज्वरतृट्पर्वभेदनम्
सकृष्णवर्णता चेति वातविस्फोटलक्षणम् ४
ज्वरदाहरुजापाकस्त्रावतृष्णासमन्वितम्
पीतलोहितवर्णञ्च पित्तविस्फोटलक्षणम् ५
छर्द्यरोचकजाड्यानिकराडू काठिन्यपाराडुताः
यस्मिन्न रुक् चिरात्पाकः स विस्फोटः कफात्मकः ६
कराडूर्दाहो ज्वरश्छर्दिरेतैश्च कफपैत्तिकः ७
वातपित्तकृतो यस्तु तत्र स्यात्तीव्रवेदना ८
कराडूस्तैमित्यगुरुभिर्जानीयात्कफवातिकम् ९
मध्यनिम्नोन्नतान्तश्च  कठिनः स्वल्पपाकवान्
दाहरागतृषामोहच्छर्दिमूर्च्छारुजाज्वराः

प्रलापो वेपथुस्तन्द्रा सोऽसाध्यश्च त्रिदोषजः १०
वेदितव्याश्च रक्तेन पैत्तिकेन च हेतुना
गुञ्जाफलसमा रक्ता रक्तस्रावा विदाहिनः
न ते सिद्धिं समायान्ति सिद्धैर्योगशतैरपि ११
एते चाष्टविधा बाह्या श्रान्तरोऽपि भवेदयम्
तस्मिन्नन्तर्व्यथातीव्रा ज्वरयुक्ताऽभिजायते १२
यस्मिन्बहिर्गते स्वास्थ्यं न वा तस्य बहिर्गतिः
तत्र वातिकविस्फोटक्रिया कार्या विजानता १३
तृट्श्वासमांससङ्कोथदाह हिक्कामदज्वराः
विसर्पमर्मसंरोधास्तेषामुक्ता उपद्रवाः १४
हिक्का श्वासोऽरुचिस्तृष्णा साङ्गमर्दा हृदि व्यथा
विसर्पज्वरहृल्लासा विस्फोटानामुपद्रवाः १५
एकदोषो स्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः
सर्वरूपान्वितो घोरो ह्यसाध्यो भूर्युपद्रवः १६
विस्फोटे लङ्घनं कार्यं वमनं पथ्यभोजनम्
यथादोषबलं वीक्ष्य युक्तमुक्तं विरेचनम् १७
जीर्णशालियवा मुद्गा मसूराश्चाढकी तथा
एतान्यन्नानि विस्फोटे हितानि मुनयोऽब्रुवन् १८
द्वे पञ्चमूल्यौ रास्ना च दार्व्युशीरं दुरालभा
गुडूची धान्यकं मुस्तमेषां क्वाथं पिबेन्नरः
विस्फोटान्नाशयन्त्याशु समीरणनिमित्तकान् १९
द्राक्षाकाश्मर्य खर्जूरपटोलारिष्टवासकैः
कटुकालाजदुःस्पर्शैः सितायुक्तं तु पैत्तिके २०
भूनिम्बसवचावासा त्रिफलेन्द्रजवत्सकैः
पिचुमर्दपटोलाभ्यां कफजे मधुयुक्शृतम् २१
किराततिक्तकारिष्टयष्ट्या ह्वाम्बुदवासकैः
पटोलपर्पटोशीरत्रि फलाकौटजान्वितैः
क्वथितैर्द्वादशाङ्गन्तु सर्वविस्फोटनाशनम् २२
विस्फोटव्याधिनाशाय तण्डुलाम्बुप्रपेषितैः
बीजैः कुटजवृक्षस्य लेपः कार्यो विजानता २३

छिन्नापटोलभूनिम्ब वासकारिष्टपर्पटैः
खदिराब्दयुतैः क्वाथो हन्ति विस्फोटकज्वरम् २४
चन्दनं नागपुष्पञ्च सारिवा तराडुलीयकम्
शिरीषवल्कलं जातीलेपः  स्याद्दाहनाशनः २५
उत्पलं चन्दनं लोध्रमुशीरंसारिवाद्वयम्
जलपिष्टेन लेपेन स्फोटदाहार्त्तिनाशनम् २६
पुत्रजीवस्य मज्ञानं जले पिष्ट्वा प्रलेपयेत्
कालस्फोटं च विस्फोटं सद्यो हन्ति सवेदनम् २७
कत्तग्रन्थिं गलग्रन्थिं कर्णग्रन्थिञ्च नाशयेत्
हन्याच्च स्फोटकं ताम्रं पुत्रजीवो विनाशयेत् २८
इत्यष्टपञ्चाशत्तमोविस्फोटकाधिकारः समाप्तः ५८

अथैकोनषष्टितमः फिरङ्गरोगाधिकारः ५९

फिरङ्गसंज्ञके देशे बाहुल्येनैव यद्भवेत्
तस्मात्फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः १
गन्धरोगः फिरङ्गोऽय जायते देहिनां ध्रुवम्
फिरङ्गिणोऽङ्गसंसर्गात्फिरङ्गिरायाः प्रसङ्गतः २
व्याधिरागन्तुजो ह्येष दोषाणामत्र सङ्क्रमः
भवेत्तं लत्तयेत्तेषां लत्तणैर्भिषजां वरः ३
फिरङ्गस्त्रिविधो ज्ञेयो बाह्य आभ्यन्तरस्तथा
बहिरन्तर्भवश्चापि तेषां लिङ्गानि च ब्रुवे ४
तत्र बाह्यः फिरङ्गः स्याद्विस्फोटसदृशोऽल्परुक्
स्फुटितोव्रणवद्वेद्यः सुखसाध्योऽपि स स्मृतः ५
सन्धिष्वाभ्यन्तरः स स्यादामवात इव व्यथाम्
शोथञ्च जनयेदेष कष्टसाध्यो बुधैः स्मृतः ६
कार्श्यं बलत्तयो नासाभङ्गो बह्नेश्च मन्दता
अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी ७
बहिर्भवो भवेत्साध्यो नवीनो निरुपद्रवः
आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः
बहिरन्तर्भवो जीर्णः त्तीणस्योपद्रवैर्युतः

व्याप्तो व्याधिरसाध्योऽयमित्याहुर्मुनयः पुरा ९
अथ फिरङ्गरोगस्य चिकित्सा
फिरङ्गसंज्ञकं रोगं रसः कर्पूरसंज्ञकः
अवश्यं नाशयेदेतदूचुः पूर्वाश्चिकित्सकाः १०
लिख्यते रसकर्पूरप्राशने विधिरुत्तमः
अनेन विधिना खादेन्मुखे शोथं न विन्दति ११
गोधूमचूर्णं सन्नीय विदध्यात्सूक्ष्मकूपिकाम्
तन्मध्ये निक्षिपेत्सूतं चतुर्गुञ्जामितं भिषक् १२
ततस्तु गुटिकां कुर्याद्यथा न दृश्यते बहिः
सूक्ष्मचूर्णे लवङ्गस्य तां वटीमवधूलयेत् १३
दन्तस्पर्शो यथा न स्यात्तथा तामम्भसा गिलेत्
ताम्बूलं भक्षयेत्पश्चाच्छाकाम्ललवणांस्त्यजेत्
श्रममातपमध्वानं विशेषात्स्त्रीनिषेवणम् १४
पारदष्टङ्कमानः स्यात्खदिरष्टङ्कसंमितः
आकारकरभश्चापि ग्राह्यष्टङ्कद्वयोन्मितः १५
टङ्कत्रयोन्मितं क्षौद्रं खल्वे सर्वं विनिक्षिपेत्
संमर्द्य तस्य सर्वस्य कुर्यात्सप्तवटीर्भिषक् १६
स रोगी भक्षयेत्प्रातरेकैकामम्बुना वटीम्
वर्जयेदम्ललवणं फिरङ्गस्तस्य नश्यति १७
पारदः कर्षमात्रः स्यात्तावानेव हि गन्धकः
तण्डुलाश्चाक्षमात्राः स्युरेषां कुर्वीत कज्जलीम् १८
तस्याःसप्त वटीः कुर्यात्ताभिर्धूमं प्रयोजयेत्
दिनानि सप्त तेन स्यात्फिरङ्गान्तो न संशयः १९
पीतपुष्पबलापत्ररसैष्टङ्कमितं रसम्
हस्ताभ्यां मर्दयेत्तावद्यावत्सूतो न दृश्यते २०
ततः संस्वेदयेद्धस्तावेवं वासरसप्तकम्
त्यजेल्लवणमम्लञ्च फिरङ्गस्तस्य नश्यति २१
चूर्णयेन्निम्बपत्राणि पथ्या निम्बाष्टमांशिका
धात्री च तावती रात्रिर्निम्बषोडशभागिका २२
शाणमानमिदं चूर्णमश्नीयादम्भसा सह

फिरङ्गं नाशयत्येव बाह्यमाभ्यन्तरं तथा २३
चोपचीनीभवं चूर्णं शाणमानं समाक्षिकम्
फिरङ्गव्याधिनाशाय भक्षयेल्लंवणं त्यजेत् २४
लवणं यदि वा त्यक्तुं न शक्नोति यदा जनः
सैन्धवं स हि भुञ्जीत मधुरं परमं हितम् २५
पारदः कर्षमात्रः स्यात्तावन्मात्रं तु गन्धकम्
तावन्मात्रस्तु खदिरस्तेषां कुर्यात्तु कज्जलीम् २६
रजनी केशरं त्रुट्यौ जीरयुग्मं यवानिका
चन्दनद्वितयं कृष्णा वांशी मांसी च पत्रकम् २७
अर्द्धकर्षमितं सर्वं चूर्णयित्वा च निक्षिपेत्
तत्सर्वं मधुसर्पिर्भ्यां द्विपलाभ्यां पृथक्पृथक् २८
मर्दयेदथ तत्खादेदर्द्धकर्षमितं नरः
व्रणः फिरङ्गरोगोत्थस्तस्यावश्यं विनश्यति २९
अन्योऽपि चिरजातोऽपि प्रशाम्यति महाव्रणः
एतद्भक्षयतः शोथो मुखस्यान्तर्न जायते ३०
वर्जयेदत्र लवणमेकविंशतिवासरान् ३१

इत्येकोनषष्टितमः फिरङ्गरोगाधिकारः समाप्तः ५९

अथ षष्टितमो मसूरिकाशीतलाऽधिकारः ६०

कट्वम्ललवणक्षार विरुद्धाध्यशनाशनैः
दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः १
क्रूरग्रहेक्षणाच्चापि देशे दोषाः समुद्धताः
जनयन्ति शरीरेऽस्मिन्दुष्टरक्तेन सङ्गताः
मसूराकृतिसंस्थानाः पिडकास्ता मसूरिकाः २
तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरतिर्भ्रमः
त्वचि शोथः सवैवर्ण्यो नेत्ररागस्तथैव च ३
स्फोटाः कृष्णारुणा रुक्षास्तीव्रवेदनयान्विताः
कठिनाश्चिरपाकाश्च भवन्त्यनिलसम्भवाः ४
सन्ध्यस्थिपर्वणां भेदः कासः कम्पोऽरतिर्भ्रमः
शोषस्ताल्वोष्ठजिह्वानां तृष्णा चारुचिसंयुता ५

रक्ताः पीताः सिताः स्फोटाः सदाहस्तीव्रवेदनाः
भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवाः ६
विड्भेदश्चाङ्गमर्दश्च दाहस्तृष्णाऽरुचिस्तथा ७
मुखपाकोऽक्षिपाकश्च ज्वरस्तीव्रः सुदारुणः
रक्तजासु भवन्त्येते विकाराः पित्तलक्षणाः ८
कफप्रसेकः स्तैमित्यं शिरोरुग्गात्रगौरवम्
हृल्लासः सारुचिर्निद्रा तन्द्राऽलस्यसमन्विता ९
श्वेताः स्निग्धा भृशं स्थूलाः कण्डूरा मन्दवेदनाः
मसूरिकाः कफोद्भूताश्चिरपाकाः प्रकीर्त्तिताः १०
नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुजः
पूतिस्रावाश्चिरात्पाकाः प्रभूताः सर्वदोषजाः ११
अथ सप्तधातुगतमसूरिकाणां पृथक् पृथक् लक्षणानि
मसूरिकास्त्वचं प्राप्तास्तोयबुद्बुदसन्निभाः
स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च १२
रक्तस्था लोहिताकाराः शीघ्रपाकास्तनुत्वचः
साध्या नात्यर्थदुष्टास्तु भिन्ना रक्तं स्रवन्ति च १३
मांसस्थाः कठिनाः स्निग्धाश्चिरपाका घनत्वचः
गात्रशूलतृषाकण्डूज्वरारतिसमन्विताः १४
मेदोजा मण्डलाकारा मृदवः किञ्चिदुन्नताः
घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः
सम्मोहारतिसन्तापाः कश्चिदाभ्यो विनिस्तरेत् १५
क्षुद्रा गात्रसमा रुक्षाश्चिपिटाः किञ्चिदुन्नताः
मज्जोत्था भृशसम्मोहा वेदनाऽरतिसंयुताः १६
भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि सर्वतः
छिन्दन्ति मर्मधामानि प्राणानाशु हरन्ति च १७
पक्वाभाः पिडकाः स्निग्धाः श्लक्ष्णाश्चात्यर्थवेदनाः
स्तैमित्यारतिसंमोहदाहोन्मादसमन्विताः १८
शुक्रजायां मसूर्यान्तु लक्षणानि भवन्ति हि
निर्दिष्टं केवलं चिह्नं जीवनं न तु दृश्यते १९
दोषमिश्रास्तु सप्तैता द्रष्टव्या दोषलक्षणैः २०

कराठरोधारुचिस्तम्भ प्रलापारतिसंयुताः
दुश्चिकित्स्याः समुद्दिष्टाः पिडकाश्चर्मसंज्ञिताः २१
रोमकूपोन्नतिसमा रागिरायः कफपित्तजाः
कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्विकाः २२
त्वग्गता रक्तगाश्चैव पित्तजाः श्लेष्मजास्तथा
श्लेष्मपित्तकृताश्चैव सुखसाध्या मसूरिकाः
एता विनाऽपि क्रियया प्रशाम्यन्ति शरीरिणाम् २३
वातजा वातपित्तोत्था वातश्लेष्मकृताश्च याः
कष्टसाध्यतमास्तस्माद् यत्नादेता उपाचरेत् २४
असाध्याः सन्निपातोत्थास्तासां वद्यामि लत्तणम्
प्रवालसदृशाः काश्चित्काश्चिज्जम्बूफलोपमाः २५
लोहजालसमाः काश्चिदतसीफलसन्निभाः
आसां बहुविधा वर्णा जायन्ते दोषभेदतः २६
कासो हिक्का प्रमेहश्च ज्वरस्तीव्रः सुदारुणः
प्रलापारतिमूर्च्छाश्च तृष्णा दाहोऽतिघूर्णता २७
मुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चत्तुषा
कराठे घुर्घुरकं कृत्वा श्वसित्यत्यर्थदारुणम् २८
मसूरिकाऽभिभूतस्य यस्य तानि भिषग्वरैः
लत्तणानीह दृश्यन्ते न देयं तस्य भेषजम् २९
मसूरिकाऽभिभूतो यो भृशं घ्राणेन निःश्वसेत्
स भृशंत्यजति प्राणांस्तृष्णावान्वायुदूषितः ३०
मसूरिकिऽन्ते शोथः स्यात्कूर्परे मणिबन्धके
तथांऽसफलके वाऽपि दुश्चिकित्स्यः सुदारुणः ३१
काश्चिद्विनाऽपि यत्नेन सिध्यन्त्याशु मसूरिकाः ३२
दृष्टाः कृच्छ्रतराः काश्चित्काश्चित्सिध्यन्ति वा न वा
काश्चिन्नैव तु सिध्यन्ति साध्यपाकाः प्रयत्नतः ३३
मसूरिकायां कुष्ठेषु लेपनादिक्रियाहिता
पित्तश्लेष्मविसर्पोक्ता क्रिया चात्र प्रशस्यते ३४
श्वेतचन्दनकल्कोत्थं हिलमोचीभवं द्रवम्
पिबेन्मसूरिकाऽरम्भे नैव वा केवलं रसम् ३५

द्वौ पञ्चमूल्यौ रास्ना च धात्र्युशीरं दुरालभा
सामृता धान्यकं मुस्तं जयेद्वातमसूरिकाम् ३६
मञ्जिष्ठाबहुपात्प्लक्ष शिरीषोदुम्बरत्वचः
वातजायां मसूर्यां स्यात्प्रलेपः सर्वतो हितः ३७
गुडूची मधुकं द्राक्षा मोरटं दाडिमैः सह
पाककाले प्रदातव्यं भेषजं गुडसंयुतम्
तेन कुप्यति नो वायुः पाकं यान्ति मसूरिकाः ३८
मसूरिकासु भुञ्जीत शालीन्मुद्गमसूरकान् ३९
रसं मधुरमेवाद्यात्सैन्धवं चाल्पमात्रकम्
पटोलमूलं क्वथितं मोरटस्वरसं तथा
आदावेव मसूर्यां तु पित्तजायां प्रयोजयेत् ४०
निम्बः पर्पटकः पाठा पटोलश्चन्दनद्वयम् ४१
उशीरं कटुका धात्री तथा वासा दुरालभा
एषां पानं शृतं शीतमुत्तमं शर्कराऽन्वितम् ४२
मसूर्यां पित्तजायान्तु प्रयोक्तव्यं विजानता
दाहे ज्वरे विसर्पे च व्रणे पित्ताधिकेऽपि च ४३
मसूर्यो रक्तजा नाशं यान्ति शोणितमोक्षणैः
वासामुस्तकभूनिम्बत्रिफलेन्द्रयवासकम् ४४
पटोलारिष्टकं चापि क्वाथयित्वा समाक्षिकम्
पिबेत्तेन प्रशाम्यन्ति मसूर्यः कफसम्भवाः ४५
शिरीषोदुम्बरत्वग्भ्यां खदिरारिष्टजैर्दलैः
कफोत्थासु मसूरीषु लेपः पित्तोत्थितासु च ४६
निम्बः पर्पटकः पाठा पटोलः कटुरोहिणी
चन्दने द्वे उशीरञ्च धात्री वासा दुरालभा ४७
एष निम्बादिकः क्वाथः पीतः शर्करयाऽन्वितः
मसूरीं सर्वजां हन्ति विसर्पज्वरसंयुताम् ४८
उत्थिता प्रविशेद्या च तां पुनर्बाह्यतो नयेत्
काञ्चनारत्वचः क्वाथस्ताप्यचूर्णावचूर्णितः ४९
धात्रीफलं समधुकं क्वथितं मधुसंयुतम्
मुखे कण्ठे व्रणे जाते गण्डूषार्थं प्रशस्यते

अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ५०
मधुकं त्रिफला मूर्वा दार्वीत्वङ्नीलमुत्पलम्
उशीरलोध्रमञ्जिष्ठाः प्रलेपाश्च्योतने हिताः ५१
नश्यन्त्यनेन  दृग्जाता मसूर्यो न भवन्ति च
प्रलेपं चक्षुषोर्दद्याद् बहुवारस्य वल्कलैः ५२
पञ्चवल्कलचूर्णेन क्लेदिनीमवधूलयेत्
भस्मनाकेचिदिच्छन्ति केचिद्गोमयरेणुना ५३
सुषवीपत्रनिर्यासं हरिद्राचूर्णसंयुतम्
रोमान्तीज्वरवीसर्पव्रणानां शान्तये पिबेत् ५४
इति मसूरिकाधिकारः समाप्तः
अथ मसूरिकाभेदशीतलाऽधिकारः
देव्या शीतलयाऽक्रान्ता मसूर्येव ही शीतला
ज्वरयेच्च यथा भूताधिष्ठितो विषमज्वरः ५५
सा च सप्तविधा ख्याता तासां भेदान्प्रचक्ष्महे
ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत् ५६
सप्ताहान्निःसरत्येव सप्ताहात्पूर्णतां व्रजेत्
ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ५७
तासां मध्ये यदा काचित्पाकं गत्वा स्फुटेत्स्रवेत्
तत्रावधूलनं कुर्याद्वनगोमयभस्मना ५८
निम्बसत्पत्र शाखाभिर्मक्षिकामपसारयेत्
जलञ्च शीतलं दद्याज्ज्वरेऽपि न तु तत्पचेत् ५९
स्थापयेत्तं स्थले पूते रम्ये रहसि शीतले
नाशुचिः संस्पृशेत्तन्तु नच तस्यान्तिकंव्रजेत् ६०
बहवो भिषजो नात्र भेषजं योजयन्ति हि
केचित्प्रयोजयन्त्येव मतं तेषामथ ब्रुवे ६१
ये शीतलेन सलिलेन विपिष्य सम्यङ् निम्बाक्षबीजसहितां रजनीं पिबन्ति
तेषां भवन्ति न कदाचिदपीह देहे पीडाकराजगति शीतलिकाविकाराः ६२
मोचारसेन सहितं सितचन्दनेन वासारसेन मधुकं मधुकेन चाथ
आदौ पिबन्ति सुमनास्वरसेन मिश्रं ते नाप्नुवन्ति भुवि शीतलिकाविकारान्
६३

शीतलासु क्रिया कार्या शीतला रक्षया सह
बध्नीयान्निम्बपत्राणि परितो भवनान्तरे ६४
कदाचिदपि नो कार्यमुच्छिष्टस्य प्रवेशनम् ६५
स्फोटेष्वपि सदाहेषु रक्षारेणूत्करो हितः
तेन ते शोषमायान्ति प्रपाकं न भजन्ति च ६६
चन्दनं वासको मुस्तं गुडूची द्राक्षया सह
एषां शीतकषायस्तु शीतलाज्वरनाशनः ६७
जपहोमोपहारैश्च दानस्वस्त्ययनार्चनैः
विप्रगोशम्भुगौरीणां पूजनैस्ताः शमं नयेत्
स्तोत्रञ्च शीतलादेव्याः पठेच्छीतलिकाऽन्तिके
ब्राह्मणः श्रद्धया युक्तस्तेन शाम्यन्ति शीतलाः ६८
अस्य श्रीशीतलास्तोत्रस्य महादेवऋषिरनुष्टुपछन्दः
शीतला देवता शीतलोपद्रव शान्त्यर्थं जपे विनियोगः ६९
स्कन्द उवाच
भगवन्देवदेवेश शीतलायाः स्तवं शुभम्
वक्तुमर्हस्यशेषेण विस्फोटकभयापहम् ७०
ईश्वर उवाच
वन्देऽह शीतलां देवीं रासभस्थां दिगम्बराम्
यामासाद्य निवर्त्तेत विस्फोटकभयं महत् ७१
शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः
विस्फोटकभयं घोरं क्षिप्रं तस्य प्रणश्यति ७२
यस्त्वामुदकमध्ये तु ध्यात्वासम्पूजयेन्नरः
विस्फोटकभयं घोरं कुले तस्य न जायते ७३
शीतले ज्वरदग्धस्य पूतिगन्धयुतस्य च
प्रणष्टचक्षुषः पुंसस्त्वामाहुर्जीवितौषधम् ७४
नमामि शीतलां देवीं रासभस्थां दिगम्बराम्
मार्जनीकलशोपेतां शूर्पालङ्कृतमस्तकाम् ७५
शीतले तनुजान्रोगान्नृणां हरसि दुस्तरान्
विस्फोटकविशीर्णानां त्वमेकाऽमृतवर्षिणी ७६
गलगण्डग्रहा रोगा ये चान्ये दारुणा नृणाम्

त्वदनुध्यानमात्रेण शीतले यान्ति ते क्षयम् ७७
न मन्त्रो नौषधं किञ्चित्पापरोगस्य विद्यते
त्वमेका शीतले धात्री नान्यां पश्यामि देवताम् ७८
मृणालतन्तुसदृशीं नाभिहृन्मध्यसंस्थिताम्
यस्त्वां सञ्चिन्तयेद्देवि तस्य मृत्युर्न जायते ७९
अष्टकं शीतलादेव्या यःपठेन्मानवः सदा
विस्फोटकभयं घोरं कुले तस्य न जायते ८०
श्रोतव्यं पठिव्यञ्च नरैर्भक्तिसमन्वितैः
उपसर्गविनाशाय परं स्वस्त्ययनं महत् ८१
शीतलाऽष्टकमेतद्धि न देयं यस्य कस्यचित्
किन्तु तस्मै प्रदातव्यं भक्तिश्रद्धाऽन्वितो हि यः ८२
इति श्रीकाशीखराडे शीतलाष्टकस्तोत्रं सम्पूर्णम्
अथ शीतलाया भेदाः
वातश्लेष्मसमुद्भूता कोद्रवा कोद्रवाकृतिः
तां कश्चित्प्राह पक्वेति सातु पाकं न गच्छति ८३
जलशूकवदङ्गानि सा विध्यति विशेषतः
सप्ताहाद्द्वादशाहाद्वा शान्तिं याति विनौषधम् ८४
यदि वा भेषजं दद्यात्खदिराष्टकनिर्मितम्
कषायं हि तदा दद्यात्कोद्रवायाः प्रशान्तये ८५
ऊष्मणा तूष्मजारूपा सकराडूः स्पर्शनप्रिया
नाम्ना पाणिसहा ख्याता सप्ताहाच्छुष्यति स्वयम् ८६
चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी
नाम्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत् ८७
किञ्चिदूष्मनिमित्तेन जायते राजिकाऽकृतिः
एषा भवति बालानां सुखं शुष्यति च स्वयम् ८८
कोठवज्जायते षष्ठी लोहितोन्नतमराडला
ज्वरपूर्वा व्यथायुक्ता ज्वरस्तिष्ठेद्दिनत्रयम्
स्फोटानां मेलनादेषा बहुस्फोटाऽपि दृश्यते ८९
एकस्फोटा च कृष्णा च बोद्धव्या चर्मजाऽभिधा ९०
एताः सप्तापि बोद्धव्याः शीतलादेब्यधिष्ठिताः

शीतलोचितमाचारमासु सर्वासु वा चरेत् ९१
काश्चिद्विनाऽपि यत्नेन सुखं सिद्ध्यन्ति शीतलाः
दृष्टाः कष्टतराः काश्चित्काश्चित्सिध्यन्ति वा न वा
काश्चिन्नैव तु सिद्ध्यन्ति यत्नतोऽपि चिकित्सिताः ९२
इति षष्टितमः शीतलामसूरिकाऽधिकारः समाप्तः ६०

अथैकषष्टितमः क्षुद्ररोगाधिकारः ६१
क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः
पित्तञ्च केशान्पचति पलितं तेन जायते १
लोहचूर्णस्य कर्षं तु दशार्द्धं चूतमज्जतः
धात्रीपलद्वयं पथ्ये द्वे तथैकं बिभीतकम् २
पिष्ट्वा लोहमये भाण्डे स्थापयेन्निशि वासयेत्
लेपोऽयमचिराद्धन्ति पलितं नात्र संशयः ३
काश्मर्या मूलमादौ सहचरकुसुमं केतकस्यापि मूलं
लौहं चूर्णं सभृङ्गं त्रिफलपलयुतं तैलमेभिः पचेद्यः
कृत्वा लौहस्य भाण्डे क्षितितलनिहितं स्थापयेन्मासमेकं
केशाः काशप्रकाशा अपि मधुपनिभा अस्य योगाद्भवन्ति ४
त्रिफला नीलिकापत्रं भृङ्गराजोऽयसो रजः
अविमूत्रेण संपिष्टं लेपात्कृष्णीकरं परम् ५
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ६
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः
तदिन्द्रलुप्तं खालित्यं रुह्येति च विभावयेत् ७
तिक्तपटोलीपत्रस्वरसैर्घृष्ट्वा शमं याति
चिरकालजाऽपि रुह्या नियतं दिवसत्रयेणापि ८
गोक्षुरस्तिलपुष्पाणि तुल्ये च मधुसर्पिषी
शिरः प्रलेपितं तेन केशैः समुपचीयते ९
हस्तिदन्तमसीं कृत्वा छागीदुग्धं रसाञ्जनम्
लोमान्येतेन जायन्ते लेपात्पाणितलेष्वपि १०
यष्टीन्दीवरमृद्वीकातैलाज्यक्षीरलेपनैः

इन्द्रलुप्तं शमं याति केशाः स्युश्च घना दृढाः ११
जातीकरञ्जवरुण करवीराग्निपाचितम्
तैलमभ्यञ्जनाद्धन्यादिन्द्रलुप्तं न संशयः १२
स्नुहीपयः पयोऽकस्य लाङ्गली मार्कवो विषम्
अजामूत्रं सगोमूत्रं रक्तिका सेन्द्रवारुणी १३
सिद्धार्थकस्तीच्णगन्धा सम्यगेभिर्विपाचितम्
तैलं भवति नियमात्खालित्यव्याधिनाशनम् १४
दारुणा कराडुरा रूचा केशभूमिः प्रजायते
मारुतश्लेष्मकोपेन विद्याद्दारुणकन्तु तत् १५
कार्यो दारुणके मूर्ध्नि प्रलेपोमधुसंयुतः
प्रियालबीजमधुककुष्ठमाषैः ससैन्धवैः १६
आम्रबीजं तथा पथ्या द्वयं स्यान्मात्रया समम्
दुग्धेन पिष्टं तल्लेपो दारुणं हन्ति दारुणम्
दुग्धेन खाखसं बीजं प्रलेपाद्दारुणं हरेत् १७
गुञ्जाफलैः शृतं तैलम्भृङ्गराजरसेन च
कराडूदारुणहृत्कुष्ठकापालव्याधिनाशनम् १८
अरुंषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धनि
कफासृक्कृमिकोपेन तानि विद्यादरुंषिकाम् १९
नीलोत्पलस्य किञ्जल्को धात्रीफलसमन्वितः
यष्टीमधुकयुक्तश्च लेपाद्धन्यादरूषिकाम् २०
त्रिफलाऽयोरजोयष्टीमार्कवोत्पलसारिवाः
सैन्धवं पक्वमेतैस्तु तैलं हन्यादरुंषिकाम् २१
पिडकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम्
सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम् २२
पैत्तिकस्य विसर्पस्य याचिकित्सा प्रकीर्त्तिता
तयैव भिषगेताञ्च चिकित्सेदिरिवेल्लकाम् २३
कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनाम्
स्थिरां पनसिकां तान्तु विद्याद्वातकफोत्थिताम् २४
भिषक् पनसिकां पूर्वं स्वेदयेदथ लेपयेत् २५
कल्कैर्मनः शिलाकुष्ठनिशातालकदारुभिः

पक्वां विज्ञाय तां भित्त्वा व्रणवत्समुपाचरेत् २६
वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः
स्थिरो मन्दरुजः स्निग्धः ज्ञेयः पाषाणगर्दभः २७
पाषाणगर्दभं पूर्वं स्वेदयेत्कुशलो भिषक्
ततः पनसिकाप्रोक्तैः कल्कैरुष्णैः प्रलेपयेत् २८
गतश्लैष्मिकशोथघ्नैः कल्कैरन्यैश्च लेपयेत्
परिपाकगतं भित्वा व्रणवत्तमुपाचरेत् २९
जलौकोभिर्हृते रक्ते स शाम्यति  विनौषधम्
एतत्स्थलेषु बहुषु प्रेक्षितं लिखितं ततः ३०
शाल्मलीकण्टकप्रख्याः कफमारुतरक्तजाः
जायन्ते पिडका यूनां ज्ञेयास्ता मुखदूषिकाः ३१
अथ मुखदूषिकाचिकित्सा
अङ्गुलस्य चतुर्थांशो मुखलेपो विधीयते
मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो भवेत् ३२
स्थितिकालोऽपि तस्योक्तो यावत्कल्को न शुष्यति
शुष्कस्तु गुणहीनः स्यात्तथा दूषयति त्वचम् ३३
लोध्रधान्यवचालेपस्तारुण्यपिडकाऽपहः
तद्वद्ग्रोरोचनायुक्तं मरिचं मुखलेपितम् ३४
सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम्
वमनञ्च निहन्त्याशु पिडकां यौवनोद्भवाम् ३५
केवलाः पयसा पिष्टास्तीक्ष्णाः शाल्मलिकण्टकाः
आलिप्तं त्र्यहमेतेन भवेत्पद्मोपमं मुखम् ३६
क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः
मुखमागत्य सहसा मण्डलं प्रसृजत्यतः
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ३७
कृष्णमेवङ्गुणं वक्त्रे गात्रे वा नीलिकां विदुः ३८
शिरोवेधैः प्रलेपैश्च तथाऽभ्यङ्गैरुपाचरेत्
व्यङ्गं च नीलिकां वाऽपि न्यच्छञ्च तिलकालकम् ३९
वटङ्कुरा मसूराश्च प्रलेपाद्व्यङ्गनाशनम्
व्यङ्गे मञ्जिष्ठया लेपः प्रशस्तो मधुयुक्तया ४०

ग्रथवा लेपनं शस्तं शशस्य रुधिरेण च
व्यङ्गहृद्वरुणत्वक्स्यादजामूत्रेण पेषिता ४१
जातीफलस्य लेपस्तु हरेद्व्यङ्गञ्च नीलिकाम्
ग्रर्कक्षीरहरिद्राभ्यां मर्दयित्वा प्रलेपनात्
मुखकाष्णर्यं शमं याति चिरकालोद्भवं ध्रुवम् ४२
मसूरैः क्षीरसम्पिष्टैर्लिप्तमास्यं घृतान्वितैः
सप्तरात्राद्भवेत्सत्यं पुराडरीकदलोपमम्
वटस्य पारडुपत्राणि मालती रक्तचन्दनम् ४४
कुष्ठं कालीयकं लोध्रमेभिर्लेपं प्रयोजयेत्
युवानपिडकानां तु व्यङ्गानां तु विनाशनम्
स्यादेतेन मुखञ्चापि वर्जितं नीलिकादिभिः ४५
कुङ्कुमं चन्दनं लोघ्रं पतङ्गं रक्तचन्दनम्
कालीयकमुशीरञ्च मञ्जिष्ठा मधुयष्टिका ४६
पत्रकं पद्मकं पद्मं कुष्ठं गोरोचना निशा
लाक्षा दारुहरिद्रा च गैरिकं नागकेशरम् ४७
पलाशकुसुमञ्चापि प्रियङ्गुश्च वटाङ्कुराः
मालती च मधूच्छिष्टं सर्षपः सुरभिर्वचा ४८
चतुर्गुणपयः पिष्टैरेतैरक्षमितैः पृथक्
पचेन्मन्दाग्नि वैद्यस्तैलं प्रस्थद्वयोन्मितम् ४९
वदनाभ्यञ्जनादेतद्व्यङ्गं नीलिकया सह
तिलकं माषकं न्यच्छं नाशयेन्मुखमदूषिकाम् ५०
पद्मिनीकराटकञ्चापि हरेज्जतुमणिं तथा
विदध्याद्वदनं पूर्णचन्द्रमराडलसुन्दरम् ५१
ग्रीवांसकक्षाकरपाददेशे सन्धौ गले वा त्रिभिरेव दोषैः
ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमेणैवगतः प्रवृद्धिम् ५२
मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत्सर्पति चोन्नताग्रैः
वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात् ५३
पाणिपादोपरिष्टात्तु च्छिद्रैर्बहुभिरावृतम्
वल्मीकं यत्सशोफं स्याद्वर्ज्यं तद्धि विजानता ५४
शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्

विधानेनार्बुदोक्तेन शोधयित्वा च रोपयेत् ५५
वल्मीकं तु भवेद्यस्य नातिवृद्धममर्मजम्
तत्र संशोधनं कृत्वा शोणितं मोक्षयेद्भिषक् ५६
कुलत्थकानां मूलैश्च गुडूच्या लवणेन च
आरेवतस्य मूलैश्च दन्तीमूलैस्तथैव च ५७
श्यामामूलैःसपललैः सक्तुमिश्रैः प्रलेपयेत्
सुस्निग्धैश्च सुखोष्णैश्च भिषक्तमुपनाहयेत् ५८
पक्वं तदा विजानीयाद्गतीः सर्वायथाक्रमम्
अभिज्ञाय गतिं छित्वा प्रदिह्यान्मतिमान्भिषक् ५९
संशोध्यदुष्टमांसानि क्षारेण प्रतिसारयेत्
व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान्भिषक् ६०
मनः शिलालभल्लातसूक्ष्मैलाऽगुरुचन्दनैः
जातीपल्लवतक्रैश्च निम्बतैलं विपाचयेत् ६१
वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुव्रणम् ६२
बाहुकक्षांऽसपार्श्वेषु कृष्णस्फोटां सवेदनाम्
पित्तप्रकोपसम्भूतां कक्षां तामिति निर्दिशेत् ६३
एकान्तु तादृशीं दृष्ट्वा पिडकां स्फोटसन्निभाम्
त्वग्जातां पित्तकोपेन गन्धनाम्नीं मालां प्रचक्षते ६४
कक्षाञ्च गन्धनाम्नीं मालाञ्च चिकित्सेच्च चिकित्सकः
पैत्तिकस्य विसर्पस्य क्रियया पूर्वमुक्तया ६५
कक्षाभागेषु विस्फोटा जायन्ते मांसदारणाः
अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ६६
सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम्
तामग्निरोहिणीं विद्यादसाध्यां सान्निपातिकीम् ६७
पित्तवीसर्पविधिना साधयेदग्निरोहिणीम्
रोहिरयां लङ्घनं कुर्याद्रक्तमोक्षणरूक्षणम्
शरीरस्य च संशुद्धिं तान्तु वृद्धां परित्यजेत् ६८
विदारीकन्दवद् वृत्तां कक्षावङ्क्षणसन्धिषु
रक्तां विदारिकां विद्यात्सर्वजां सर्वलक्षणाम् ६९
विदारिकायां प्रथमं जलौकायोजनं हितम्

पाटनञ्च विपक्वायां ततो व्रणविधिः स्मृतः ७०
नखमांसमधिष्ठाय वातःपित्तञ्च देहिनाम्
करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ७१
अभिघातात्प्रदुष्टो यो नखो रूक्षःसितः खरः
भवेत्तं कुनखं विद्यात्कुलीरं वाभिधानतः ७२
चिप्पं रुधिरमोक्षेण शोधनेनाप्युपाचरेत्
गतोष्माणमथैनन्तु सेचयेदुष्णवारिणा ७३
शस्त्रेणापि यथायोग्यमुच्छिद्य स्त्रावयेत्ततः
व्रणोक्तेन विधानेन रोपयेत्तं विचक्षणः ७४
स्वरसेन हरिद्रायाः पात्रे कृत्वायसेऽभयाम्
घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्पं पुनः पुनः ७५
काश्मर्याः सप्तभिः पत्रैः कोमलैः परिवेष्टितः
अङ्गुलीवेष्टकः पुंसां ध्रुवमाशु प्रशाम्यति ७६
श्लेष्मविद्रधिकल्पेन कुनखं समुपाचरेत् ७७
नखकोटिप्रविष्टेन टङ्कणेन न शाम्यति
कुनखश्चेत्तदा शैलः सलिले प्लवतेऽपि च ७८
मर्दनात्पीडनाद्वापि तथैवाप्यभिघाततः
मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरन् ७९
तदा वातोपसृष्टन्तु तच्चर्म परिवर्त्तते
सवेदनं सदाहं च पाकञ्च व्रजति क्वचित् ८०
मणेरधस्तात्कोषस्तु ग्रन्थिरूपेण लम्बते
सरुजां वातसम्भूतां विद्यात्तां परिवर्त्तिकाम्
सकण्डूः कठिना चापि सैव श्लेष्मसमन्विता ८१
परिवर्त्तिं घृताभ्यक्तां सुस्विन्नामुपनाहयेत्
त्रिरात्रं पञ्चरात्रञ्च वातघ्नैः शाल्वणादिभिः ८२
ततोऽभ्यज्य शनैश्चर्म पाटयेत्पीडयेन्मणिम्
प्रविष्टे चर्मणि मणौ स्वेदयेदुपनाहनैः ८३
दद्याद्वातहरान्वस्तीन् स्निग्धान्यन्नानि भोजयेत् ८४
अल्पीयःखां यदा हर्षाद् बलाद्गच्छेत्स्त्रियं नरः
हस्ताभिघातादथवा चर्मण्युद्वर्त्तिते बलात् ८५

मर्दनात्पीडनाद्वापि शुक्रवेगाभिघाततः
यस्यावपाट्यते चर्म तं विद्यादवपाटिकाम् ८६
वातेन कर्कशा रूक्षा सूक्ष्मा कृष्णा रुगन्विता
पित्तेन पीता रक्ता वा दाहतृष्णासमन्विता
श्लेष्मणा कठिना स्निग्धा कण्डूमत्स्वल्पवेदना ८७
स्नेहस्वेदैरिमां वैद्यश्चिकित्सेदवपाटिकाम् ८८
वातोपसृष्टे मेढ्रे तु चर्म संश्रयते मणिम्
मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च
निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम्
मूत्रं प्रवर्त्तते जन्तोर्मणिर्विव्रियते न च ९०
निरुद्धप्रकशं विद्यात्सरुजं वातसम्भवम् ९१
निरुद्धप्रकशे नाडीं लौहीमुभयतोमुखीम्
दारवीं जतुकृतां वा घृताक्तां सम्प्रवेशयेत् ९२
परिषिञ्चेद्वसां मज्ञां शिशुमारवराहयोः
चक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम् ९३
त्र्यहात्स्थूलतरां सम्यङ् नाडीं मार्गे प्रवेशयेत्
स्रोतो विवर्द्धयेदेवं स्निग्धमन्नञ्च भोजयेत्
भित्वा वा सेवनीं मुक्त्वा सद्यः क्षतवदाचरेत् ९४
वेगसन्धारणाद्वायुर्विहतो गुदसंश्रितः
निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च ९५
मार्गस्य सौक्ष्म्यात्कृच्छ्रेण पुरीषं तस्य गच्छति
सन्निरुद्ध गुदं व्याधिमेतं विद्यात्सुदुस्तरम् ९६
सन्निरुद्धगुदे तैलैः सेको वातहरैर्हितः
तथा निरुद्धप्रकशक्रियाऽपि कथिताऽथवा ९७
स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः
प्रक्लिद्यते यदा स्वेदात्कण्डूं जनयते तदा ९८
ततः कण्डूयनात्क्षिप्रं स्फोटः स्रावश्च जायते
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ९९
सर्जाह्वकुष्ठसैन्धवसितसिद्धार्थैः प्रकल्पितो योगः
उद्वर्त्तनेन नियतं शमयति वृषणस्य कण्डूतिम् १००

भिषग्वृषणकच्छूं तु चिकित्सेत्पामरोगवत्
अहिपूतननिर्दिष्टक्रिययाऽपि च तां हरेत् १०१
शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्
स्विन्ने वाऽस्नाप्यमानस्य कराडू रक्तकफोद्भवा १०२
कराडूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् १०३
तत्र संशोधनैः पूर्वं धात्रीस्तन्यं विशोधयेत्
त्रिफलाखदिरक्वाथैर्व्रणानां क्षालनं हितम्
शङ्खसौवीरयष्ट्याह्वैर्लेपः कार्योऽहिपूतने १०४
प्रवाहिकाऽतिसाराभ्यां निर्गच्छति गुदं बहिः
रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत् १०५
गुदभ्रंशे गुदं स्विन्नं स्नेहेनाक्तं प्रवेशयेत्
प्रविष्टं रोधयेद्यत्नाद्गव्यसच्छिद्रचर्मणा १०६
पद्मिन्याः कोमलं पत्रं यः खादेच्छर्करान्वितम्
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः १०७
मूषकाणां वसाभिर्वा गुदभ्रंशे प्रलेपनम्
सुस्विन्नं मूषिकामांसेनाथवा स्वेदयेद् गुदम् १०८
वृक्षाम्लानलचङ्गेरीबिल्वपाठायवाग्रजम्
तक्रेण शीलयेत् पायुभ्रंशार्त्तोऽनलदीपनम् १०९
मूषका दशमूलानि गृह्णीयादुभयं समम्
तयोः क्वाथेन कल्केन पचेत्तैलं यथोदितम् ११०
अभ्यङ्गात्तस्य तैलस्य गुदभ्रंशो विनश्यति
विनश्यति तथाऽनेन गुदशूलं भगन्दरम् १११
सदाहो रक्तपर्यन्तस्त्वपाकी तीव्रवेदनः
कराडूमाञ्ज्वरकारी च स स्याच्छूकरदंष्ट्रकः ११२
भृङ्गराजकमूलस्य रजन्या सहितस्य च
चूर्णन्तु सहसा लेपाद्वाराहद्विजनाशनम् ११३
राजीवमूलकल्कःपीते गव्येन सर्पिषा प्रातः
शमयति शूकरदंष्ट्रं दंष्ट्रोद्भूतंज्वरं घोरम् ११४
रजनी मार्कवं मूलं पिष्टं शीतेन वारिणा

तल्लेपाद्धन्ति वीसर्पवाराहदशनाह्वयम् ११५
गम्भीरामल्पशोथां च सवर्णामुपरिस्थिताम्
पाकस्यानुशयीं तान्तु विद्यादन्तः प्रपाकिनीम् ११६
हरेदनुशयीं वैद्यः क्रियया श्लेष्मविद्रधेः ११७
क्लिन्नाङ्गुल्यन्तरौ पादौ कराडूदाहसमन्वितौ
दुष्टकर्दमसंस्पर्शादलसं तं विभावयेत् ११८
पादौ सिक्त्वाऽरनालेन लेपनं त्वलसे हितम्
पटोलकुनटीनिम्बरोचनामरिचैस्तिलैः ११९
ज्ञुद्रास्वरससिद्धेन कटुतैलेन लेपयेत्
ततः कासीसकुनटीतिलचूर्णैर्विचूर्णयेत् १२०
करञ्जबीजं रजनी कासीसं पद्मकं मधु
रोचना हरितालञ्च लेपोऽयमलसे हितः १२१
परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः
पादयोः कुरुते दारीं सरुजां तलसंश्रिताम् १२२
पाददार्यां शिरां प्राज्ञो मोचयेत्तलशोधिनीम्
स्नेहस्वेदोपपन्नौ तु पादौ वा लेपयेन्मुहुः
मधूच्छिष्ठवसामज्जाघृतैः ज्ञारविमिश्रितैः १२३
सर्जाह्वसिन्धूद्भवयोश्चूर्णं घृतमधुप्लुतम्
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जने १२४
मधुसिक्थकगैरिकवृतगुडमहिषाक्षशालनिर्यासैः
गैरिकसहितैर्लेपः पाकस्फुटनापहः सिद्धः १२५
उन्मत्तकस्य बीजेन मानकक्षारवारिणा
विपक्वं कटुतैलन्तु हन्याद्दारीं न संशयः १२६
शर्करोन्मथिते पादे क्षते वा कराटकादिभिः
ग्रन्थिः कोलवदुत्सन्नो जायते कदरस्तु सः १२७
दहेत्कदरमुद्धृत्य तैलेन दहनेन वा १२८
कृष्णानि तिलमात्राणि नीरुजानि तमानिच
वातपित्तकफोद्रेकात्तान्विद्यात्तिलकालकान् १२९
अवेदनं स्थिरञ्चैव यत्तु गात्रे प्रदृश्यते
माषवत्कृष्णमुत्सन्नमनिलान्मशकं दिशेत् १३०

वित्वचस्तनवः स्फोटाः सूक्ष्माग्राः श्यावपिण्डिकाः
भवन्ति कफपित्ताभ्यां क्षिप्रं नाशं प्रयान्ति च १३१
सममुत्सन्नमरुजं मण्डलं कफरक्तजम्
सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिश्च सः १३२
कृष्णः स्निग्धो जतुमणिर्ज्ञेयः श्लेष्मोत्तरैस्त्रिभिः
अरुजं त्वपरे रक्तं लक्ष्मेत्याहुर्भिषग्वराः १३३
चर्मकीलं जतुमणिं मशकांस्तिकालकान्
उत्कृत्य शस्त्रेण दहेत्क्षाराग्निभ्यामशेषतः १३४
महद्वा यदि वा चाल्पं श्यावं वा यदि वाऽसितम्
नीरुजं मण्डलं गात्रे न्यच्छं तदभिधीयते १३५
शिरावेधैः प्रलेपैश्च तथाऽभ्यङ्गैरुपाचरेत्
न्यच्छं लिम्पेत्पयः पित्तैः कल्कैः क्षीरतरूद्भवैः १३६
त्रिभुवनविजयापत्रं मूलं स्थविरस्य शिंशपा चैभिः
उद्वर्त्तनं विरचितं न्यच्छव्यङ्गापहं सिद्धम् १३७
कण्टकैराचितं वृत्तं कण्डूमत्पाण्डु मण्डलम्
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् १३८
पद्मिनीकण्टके रोगे छर्दयेन्निम्बवारिणा
तेनैव सिद्धं सक्षौद्रं सर्पिः पातुं प्रदापयेत् १३९
निम्बारग्वधकल्कैर्वा मुहुरुद्वर्त्तनं हितम् १४०
चतुर्गुणेन निम्बोत्थपत्रक्वाथेन गोघृतम्
पचेत्ततस्तु निम्बस्य कृतमालस्य पत्रजैः १४१
कल्कैर्भूयः पचेत्सिद्धं तत्पिबेत्पलसम्मितम्
पद्मिनीकण्टकाद्रोगान्मुक्तो भवति नान्यथा १४२
स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा
कफवातोत्थिता ज्ञेया बालानामजगल्लिका १४३
तत्राजगल्लिकां सामां जलौकोभिरुपाचरेत्
शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेपयेन्मुहुः
कठिनां क्षारयोगेन द्रावयेदजगल्लिकाम् १४४
यवाकारा प्रकठिना ग्रथिता मांससंश्रया
पिडका श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते १४५

घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम्
अन्त्रालजीमल्पपूयां तां विद्यात्कफवातजाम् १४६
अन्त्रालजीयवप्रख्ये पूर्वं स्वेदैरुपाचरेत्
मनःशिलादेवदारुकुष्ठकल्कैः प्रलेपयेत्
पक्वां व्रणविधानेन तथोक्तेन प्रसाधयेत् १४७
विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम्
विवृतामिति तां विद्यात्पित्तोत्थां परिमण्डलम् १८८
पद्मकर्णिकवन्मध्ये पिडकां पिडकाचिताम्
इन्द्रविद्धान्तु तां विद्याद्वातपित्तोत्थितां भिषक्
मण्डलं वृतमुत्सन्नं सरक्तं पिडकाचितम्
रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम्
विसर्पवत्सर्पति यः शोथस्तनुरपाकवान्
दाहज्वरकरः पित्तात्सज्ञेयो जालगर्दभः १५१
विवृतामिन्द्रविद्धाञ्च गर्दभीं जालगर्दभम्
पैत्तिकस्य विसर्पस्य क्रिययासाधयेद् भिषक्
पाके तु रोपयेदाज्यैः पक्वैर्मधुरभेषजैः १५२
ग्रथिताः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः
कफानिलाभ्यां पिडकाः सा स्मृता कच्छपी बुधैः १५३
कच्छपीं स्वेदयेत्पूर्वं तत एव प्रलेपयेत् १५४
कल्कीकृतैर्निशा कुष्टसितातालकदारुभिः
तां पक्वां साधयेच्छीघ्रं भिषग्व्रणचिकित्सया १५५
प्राप्य मांसशिरास्नायुमेदः श्लेष्मा तथाऽनिलः
ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम् १५६
स्रवति स्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः
मांसं विशोष्य ग्रथितां शर्करां जनयत्यतः १५७
दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः शिराः
स्रवन्ति सहसा रक्तं तां विद्याच्छर्कराऽबुदम् १५८
मेदोऽबुदविधानेन साधयेच्छर्कराऽबुदम् १५९
शक्तस्य चाप्यनुत्साहः कर्मण्यालस्यमुच्यते
अस्वास्थ्यं चिन्तयाऽत्यर्थमरतिः कथ्यते बुधैः १६०

उत्क्लिश्यान्नं न निर्गच्छेत्प्रसेकः ष्ठीवनोरितम्
हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् १६१
वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः
न चान्नं रोचते यस्मै ग्लानिं तस्य विनिर्दिशेत्
ग्लानिरोजःक्षयाद् दुःखादजीर्णाच्च श्रमाद्भवेत् १६२
उदानकोपादाहारसुस्थितत्वाच्च यद्भवेत्
पवनस्योर्ध्वगमनं तमुद्गारं प्रचक्षते १६३
आटोपो गुडगुडाशब्दः प्रोक्तो जठरसम्भवः
तमःस्थस्येव यज्ज्ञानं तत्तमः कथ्यते बुधैः १६४
इत्येक षष्टितमः क्षुद्ररोगाधिकारः समाप्तः ६१

अथ द्विषष्टितमः शिरोरोगाधिकारः ६२

शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः
सन्निपातेन रक्तेन क्षयेण कृमिभिस्तथा १
सूर्यावर्त्तानन्तवातशङ्ख कार्द्धावभेदकाः
एकादशविधस्यास्य लक्षणानि प्रचक्षते २
यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम्
बन्धोपतापैः प्रशमो भवेच्च शिरोऽभितापः स समीरणेन ३
यस्योष्णमङ्गारचितं यथैव भवेच्छिरो दह्यति चाक्षिनासम्
शीतेन रात्रौ च भवेच्छ्रमश्च शिरोऽभितापः स तु पित्तकोपात् ४
शिरो भवेद् यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिमञ्च
शूनाक्षिनासावदनञ्च यस्य शिरोऽभितापः स कफप्रकोपात् ५
शिरोऽभितापे त्रितयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवन्ति ६
रक्तात्मकः पित्तसमावलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च ७
वसाबलासक्षतसम्भवानां शिरोगतानामतिसङ्क्षयेण
क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम्
संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ८
अङ्गं भ्रमति तुद्येत शिरो विभ्रान्तनेत्रता
मूर्च्छा गात्रावसादश्च शिरोरोगे क्षयात्मके ९
निस्तुद्यते यस्य शिरोऽतिमात्रं सम्भक्ष्यमाणं स्फुरतीव चान्तः

घ्राणाच्च गच्छेद्रुधिरं सपूयं शिरोऽभितापः कृमिभिः स घोरः १०
सूर्योदयं या प्रति मन्दमन्दमक्षिभ्रुवौ रुक् समुपैति गाढम्
विवर्द्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्त्तते च ११
शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाद्वा
सर्वात्मकं कष्टतमं विकारं सूर्यापवर्त्तं तमुदाहरन्ति १२
दोषास्तु दुष्टास्त्रय एव मन्यां सम्पीडय गाढं स्वरुजां सुतीव्राम्
कुर्वन्ति योऽक्ष्णि भ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु १३
गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजान्विकारान्
अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् १४
पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः
तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम् १५
स शिरो विषवद्वेगान्निरुध्याशु गलं तथा
त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः
त्र्यहं जीवति भैषज्यं प्रत्याख्यायास्य कारयेत् १६
रूक्षाशनाद्यध्यशनप्राग्वातावश्यमैथुनैः
वेगसन्धारणायासव्यायामैः कुपितोऽनिलः १७
केवलः सकफो वाऽर्द्ध गृहीत्वा शिरसो बली
मन्याभ्रूशङ्खकर्णाक्षिललाटार्द्धेषु वेदनाम् १८
शस्त्राशनिनिभां कुर्यात्तीव्रां सोऽर्द्धावभेदकः
नयनं वाऽथवा श्रोत्रमतिवृद्धो विनाशयेत् १९
वातजातशिरोरोगे स्नेहस्वेदं विघर्षणम्
पानाहारोपनाहांश्च कुर्याद्वातामयापहान् २०
कुष्ठमेरण्डमूलञ्च नागरं तक्रपेषितम्
कदुष्णं शिरसः पीडां भाले लेपनतो हरेत् २१
रसः श्वासकुठारो यस्तस्य नस्यं विशेषतः
शिरः शूलं हरत्येव विधेयो नात्र संशयः २२
आ शिरो व्यायतं चर्म षोडशाङ्गुलमुच्छ्रितम्
तेनावेष्टय शिरोऽधस्तान्माषकल्केन लेपयेत् २३
निश्चलस्योपविष्टस्य तैलैः कोष्णैः प्रपूरयेत्
धारयेदारुजः शान्तेर्यामंयामार्द्धमेव वा २४

शिरोवस्तिर्हरत्येष शिरोरोगं मरुद्भवम्
हनुमन्याऽक्षिकर्णार्त्तिमर्दितं मूर्द्धकम्पनम् २५
विना भोजनमेवैष शिरोवस्तिः प्रयुज्यते
दिनानि पञ्च वा सप्त रुचितोऽग्रे ततोऽपि च २६
ततोऽपनीतस्नेहस्तु मोचयेद्वस्तिबन्धनम्
शिरोललाटवदनं ग्रीवांऽसादीन्विमर्दयेत् २७
सुखोष्णेनाम्भसा गात्रं प्रक्षाल्याश्नाति यद्धितम्
आमिषं जाङ्गलं पथ्यं तत्र शाल्यादयोऽपि च २८
मुद्गमाषान्कुलत्थांश्च खादेद्वा निशि केवलान्
कटुकोष्णान्ससर्पिष्कानुष्णं क्षीरं पिबेत्तथा २९
पित्तात्मके शिरोरोगे शीतानां चन्दनाम्भसा
कुमुदोत्पलपद्मानां स्पर्शाः सेव्याश्च मारुताः ३०
सर्पिषः शतधौतस्य शिरसा धारणं हितम्
रसः श्वासकुठारोऽल्प कर्पूरः कुङ्कुमं नवम् ३१
सिता छागीपयः सर्वं चन्दनेनानुघर्षयेत्
तस्य नस्यं भिषग्दद्यात्पित्तजायां शिरोरुजि
किन्तु मस्तकशूलेषु सर्वेष्वेवं हितं मतम् ३२
गुडनागरकल्कस्य नस्यं मस्तकशूलनुत् ३३
रक्तजे पित्तवत्सर्वं भोजनालेपसेचनम्
शीतोष्णयोश्च विन्यस्य विशेषो रक्तमोक्षणम् ३४
कफजे लङ्घनं स्वेदो रूक्षोष्णैः पावकात्मकैः
सन्निपातभवे कार्या सन्निपातहरी क्रिया
पुराणसर्पिषः पानं विशेषेण दिशन्ति हि ३५
एरगडमूलं तगरं शताह्वा जीवन्तिका रास्निकसैन्धवं च
भृङ्गं विडङ्गं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम् ३६
अजापयस्तैलविमिश्रितञ्च चतुर्गुणं भृङ्गरसे विपक्वम्
षड्बिन्दवो नासिकया प्रदेयाः सर्वान्निहन्युः शिरसो विकारान् ३७
च्युतांश्च केशान्पलितांश्च दन्तान्निर्बन्धमूलान्सुदृढीकरोति
सुपर्णगृध्रप्रतिमञ्च चक्षुः कुर्वन्ति बाह्वोरधिकं बलञ्च ३८
क्षयजे क्षयनाशाय कर्त्तव्यो बृंहणो विधिः

पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम् ३९
कृमिजे व्योषनक्ताह्वशिग्रुबीजैश्च नावनम्
अजामूत्रयुतं नस्यं कर्त्तव्यं कृमिनुत्परम् ४०
सूर्यावर्त्ते विधातव्यं नस्यकर्मादि भेषजम् ४१
कुमार्याः स्वरसप्रस्थे धत्तूरस्य रसे तथा
भृङ्गराजस्य च रसे प्रस्थद्वयसमायुते ४२
चतुःप्रस्थमिते क्षीरे तैलप्रस्थं विपाचयेत्
कल्कैर्मधुकह्रीबेरमञ्जिष्ठा भद्रमुस्तकैः ४३
नखकर्पूरभृङ्गैलाजीवन्ती पद्मकुष्ठकैः
मार्कवासकतालीस सर्जनिर्यासपत्रकैः ४४
विडङ्गशतपुष्पाऽश्व गन्धागन्धर्वहस्तकैः
शोथहृन्नारिकेलाभ्यां कर्षमानैर्विपाचिते ४५
उत्तार्य वस्त्रपूतं तु शुभे भाण्डे सुधूपिते
त्रिरात्रमथ गुप्तञ्च धारयेद्विधिवद्भिषक् ४६
ततस्तु तैलमभ्यङ्गे मूर्ध्नि क्षेपे नियोजयेत्
शमयेदर्दितं गाढं मन्यास्तम्भशिरोगदान् ४७
तालुनासाऽक्षिजातन्तु शोषं मूर्च्छां हलीमकम्
हनुग्रहगदार्त्तिं वा बाधिर्यं कर्णवेदनाम् ४८
योजयेत्सगुडं सर्पिर्घृतपूरांश्च भक्षयेत्
नावनं क्षीरसर्पिर्भ्यां पानञ्च क्षीरसर्पिषोः ४९
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते
भृङ्गराजरसश्छागी क्षीरतुल्योऽकतापितः
सूर्यावर्त्तं निहन्त्याशु नस्येनैव प्रयोगराट् ५०
अर्द्धावभेदके पूर्वं स्नेहस्वेदौ हि भेषजम्
विरेकः कायशुद्धिश्च धूपः स्निग्धोष्णभोजनम् ५१
विडङ्गानि तिलान्कृष्णान्समान्पिष्टान्विलेपयेत्
नस्यञ्चाप्याचरेत्तस्मादर्द्धभेदो व्यपोहति ५२
पिबेत्सशर्करं क्षीरं नीरं वा नारिकेलजम्
सुशीतं वाऽपि पानीयं सर्पिर्वा नस्यतस्तयोः ५३
अनन्तवाते कर्त्तव्यः सूर्यावर्तहितो विधिः

शिरावेधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ५४
स्राहारश्च प्रदातव्यो वातपित्तविनाशनः
मधुमस्तकसंयावो घृतपूपो विशेषतः ५५
पथ्याऽत्तधात्रीरजनीगुडूचीभूनिम्बनिम्बैःसगुडः कषायः
भ्रूशङ्खकर्णात्तिशिरोऽर्द्धशूलं निहन्ति नासानिहितः त्तरणेन ५६
दार्वीः हरिद्रा मञ्जिष्ठा सनिम्बोशीरपद्मकम्
एतत्प्रलेपनं कुर्याच्छङ्खकस्य प्रशान्तये ५७
शीततोयाभिषेकश्च शीतलत्तीरसेवनम्
कल्पश्च त्तीरवृत्ताणां शङ्खके लेपनंहितम् ५८
यष्टीमधुकमाषः स्यात्तुर्यांशं तु विषं भवेत्
तयोश्चूर्णं सुसूत्तमं स्यात्तच्चूर्णं सर्षपोन्मितम् ५९
नासिकाऽभ्यन्तरे न्यस्तं सर्वां शीर्षव्यथांहरेत्
दृष्टप्रयोगो योगोऽयमनुभाविभिरादृतः ६०
स्रार्द्रं यच्छुक्तिकाचूर्णं चूर्णितं नवसादरम्
उभयं योजितं तस्य गन्धान्नश्यति शीर्षरुक् ६१
इति द्विषष्टित्तमः शिरोरोगाधिकारः समाप्तः ६२

स्रथ त्रिषष्टितमो नेत्ररोगाधिकारः ६३
विद्याद्द्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसम्मितम्
द्व्यङ्गुलंसर्वतः सार्द्धं भिषङ् नयनमरडलम् १
पत्त्मवर्त्मश्वेतकृष्णदृष्टीनां मरडलानि तु
स्रनुपूर्वन्तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् २
द्वादश व्याधयो दृष्टौ तत्रैवान्यौ गदावुभौ
कृष्णमार्गे तु चत्वारो दशैकः शुक्लभागजाः ३
वर्त्मन्येको विंशतिश्च पत्त्मजौ द्वौ प्रकीर्त्तितौ
नव सन्धिषु सर्वस्मिन्नेत्रे सप्तदशोदिताः
एवं नेत्रे समस्ताः स्युरष्टसप्ततिरामयाः ४
वाताद्दश तथा पित्तात्कफाच्चैव त्रयोदश ५
रक्तात्षोडश विज्ञेयाः सर्वजाः पञ्चविशतिः
बाह्यौ पुनर्द्वौ नयने रोगाः षट्सप्ततिः स्मृताः ६

उष्णाभितप्तस्यजलप्रवेशाद् दूरेक्षणात्स्वप्नविपर्ययाच्च
स्वेदाद्रजोधूमनिषेवणाच्च छर्देर्विघाताद्वमनातियोगात् ७
शुक्तारनालाम्बुकुलत्थमाषाद्विरामूत्रवातागमनिग्रहाच्च
प्रसक्तसंरोदनशोकतापाच्छिरोऽभिघातादतिशीघ्रयानात् ८
तथा ऋतूनाञ्च विपर्ययेण क्लेशाभितापादतिमैथुनाच्च
बाष्पग्रहात्सूक्ष्मनिरीक्षणाच्च नेत्रे विकारं जनयति दोषाः ९
शिराऽनुसारिभिर्दोषैर्विगुणैरूर्ध्वमाश्रितैः
जायन्ते नेत्रभागेषु रोगाः परमदारुणाः १०
मसूरदलमात्रां तु पञ्चभूतप्रसादजाम्
खद्योतविस्फुलिङ्गाभां सिद्धां तेजोभिरव्ययैः ११
आवृतां पटलेनाक्ष्णोर्बाह्येन विवराकृतिम्
शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः १२
तेजोजलाश्रितं बाह्यं तेष्वन्यत्पिशिताश्रितम्
मेदस्तृतीयं पटलमाश्रितं त्वस्थ्नि चापरम्
पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते १३
प्रथमे पटले यस्य दोषो दृष्टेर्व्यवस्थितः
अव्यक्तानि स्वरूपाणि कदाचिदथ पश्यति १४
दृष्टिर्भृशं विह्वलति द्वितीयं पटले गते
मक्षिकामशकान् केशाञ्जालकानीव पश्यति १५
मण्डलानि पताकाश्च मरीचीन्कुण्डलानि च
परिप्लवांश्च विविधान्वर्षमभ्रं तमांसि च १६
दूरस्थानि च रूपाणि मन्यते च समीपतः
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् १७
यत्नवानपि चात्यर्थं सूचीच्छिद्रं न पश्यति १८
ऊर्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते
सुमहान्त्यपि रूपाणि च्छादितानीव चाम्बरैः १९
कर्णनासाऽक्षिरूपाणि विकृतानि च पश्यति
यथादोषञ्च रज्येत दृष्टिर्दोषे बलीयसि २०
अधःस्थे तु समीपस्थं दूरस्थं चोपरिस्थिते
पार्श्वस्थिते पुनर्दोषे पार्श्वस्थानि न पश्यति २१

समन्ततः स्थिते दोषे संकुलानीव पश्यति
दृष्टिमध्यस्थिते दोषे महद्ध्रस्वं च पश्यति २२
दोषे दृष्टिस्थिते तिर्यगेकं वा मन्यते द्विधा
द्विधास्थिते द्विधा पश्येद्बहुधा चानवस्थिते २३
तिमिराख्यः स यो दोषश्चतुर्थं पटलं गतः
रुणद्धि सर्वतो दृष्टिं लिङ्गनाश इति क्वचित् २४
अस्मिन्नपि तमोभूते नातिरूढे महागदे
चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतः २५
निर्मलानि च तेजांसि भ्राजिष्णूनीव पश्यति
स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः २६
दृष्ट्याश्रयाः षट् च षडेव रोगाः षड् लिङ्गनाशा हि भवन्ति तत्र
वातेन पित्तेन कफेन सर्वे रक्तात्परिम्लाय्यभिधश्च षष्ठः २७
तथा नरः पित्तविदग्धदृष्टिः कफेन वाऽन्यस्त्वथ धूमदर्शी
यो ह्रस्वजात्यो नकुलान्ध्यसंज्ञो गम्भीरसंज्ञश्च तथैव दृष्टिः २८
वातेन खलु रूपाणि भ्रमन्तीव च पश्यति
आविलान्यरुणाभानि व्याविद्धानीव मानवः २९
पित्तेनादित्यखद्योत शक्रचापतडिद्गुणान्
नृत्यतश्चैव शिखिनः सर्वं नीलञ्च पश्यति ३०
गौरचामरगौराणि श्वेताभ्रप्रतिमानिच
पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रे चैवाभ्रसंप्लवम् ३१
कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च
सलिलप्लावितानीव जालकानीव मानवः ३२
सन्निपातेन चित्राणि विप्लुतानि च पश्यति
बहुधाऽपि द्विधा वाऽपि सर्वाण्येव समन्ततः
हीनाधिकाङ्गान्यथ वा ज्योतींष्यपि च पश्यति ३३
पश्ये द्रक्तेनरक्तानि तमांसि विविधानि च
हरितान्यथ कृष्णानि पीतान्यपि च मानवः ३४
रक्तेन मूर्च्छितं पित्तंपरिम्लायिनमाचरेत् ३५
तेन पीता दिशः पश्येदुद्यन्तमिव भास्करम्
विकीर्यमाणान्खद्योतैर्वृक्षांस्तेजोभिरेव हि ३६

वातादिजनितैर्नेत्रवर्णैरपि च षड्विधः
लिङ्गनाशो निगदितो वर्णो वातादिजो यथा ३७
रागोऽरुणो मारुतजः प्रदिष्टो म्लायी च नीलश्च तथैव पित्तात्
कफात्सितः शोणितजः सरक्तः समस्तदोषप्रभवो विचित्रः ३८
अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा
पित्ततो मण्डलं नीलं कांस्याभं वा सपीतकम् ३९
श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम् ४०
चलत्पद्मपलाशस्थः शुक्लो बिन्दुरिवाम्भसः
मृद्यमाने तु नयने मण्डलं तद्विसर्पति ४१
मण्डलं तु भवेच्चित्रं लिङ्गनाशे त्रिदोषजे
प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ४२
रक्तजं मण्डलं दृष्टौ स्थूलकाचारुणप्रभम्
परिम्लायिनि रोगे स्यान्म्लानं नीलमथापि वा
दोषक्षयात्स्वयं तत्र कदाचित्स्यात्तु दर्शनम् ४३
यथास्वं दोषलिङ्गानि सर्वेष्वेव भवन्ति हि ४४
पित्तेन दुष्टेन गतेन दृष्टिं पीता भवेद्यस्य नरस्य दृष्टिः
पीतानि रूपाणि च तेन पश्येत्स वै नरः पित्तविदग्धदृष्टिः ४५
प्राप्ते तृतीयं पटलं तु दोषे दिवा न पश्येन्निशि वीक्षते सः
रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावात्सकलानि पश्येत् ४६
तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि हि मन्यते तु
त्रिषु स्थितोऽल्प पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य
दिवा स सूर्यानुगृहीतदृष्टिः पश्येत्तु रूपाणि कफाल्पभावात् ४७
शोकज्वरायासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः
धूमांस्तु यःपश्यति सर्वभावात्स धूमदर्शीति नरः प्रदिष्टः ४८
यो वासरे पश्यति कष्टतोऽथ रूपं महच्चापि निरीक्षतेऽल्पम्
रात्रौ पुनर्यः प्रकृतानि पश्येत्स ह्रस्वजात्यो मुनिभिः प्रदिष्टः ४९
विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत्
चित्राणि रूपाणि दिवा च पश्येत्स वै विकारो नकुलान्ध्यसंज्ञः ५०
दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कोचमभ्यन्तरतः प्रयाति
रुजाऽवगाढा च तमक्षिरोगे गम्भीरिकेति प्रवदन्ति धीराः ५१

बाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च
निमित्ततस्तत्र शिरोऽभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शनैः सः ५२
सुरर्षिगन्धर्वमहोरगाणां सन्दर्शनेनापि च भास्करस्य
हन्येत दृष्टिर्मनुजस्य यस्य स लिङ्गनाशस्त्वनिमित्तसञ्ज्ञः ५३
तत्राक्षि विस्पष्टमिवावभाति वैदूर्यवर्णा विमला च दृष्टिः
विदीर्यते सीदति हीयते वा नृणामभीघातहता तु दृष्टिः ५४
इति दृष्टिगत रोगाः
अथ कृष्णमराडलजा रोगाः
यत्सव्रणं शुक्लमथाव्रणञ्च पाकात्ययश्चाप्यजका तथैव
चत्वार एते नयनामयास्तु कृष्णप्रदेशे नियता भवन्ति ५५
निमग्नरूपं तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै
स्रावं स्रवेदुष्णमतीव चापि तत्सव्रणं शुक्लमुदाहरन्ति ५६
दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेद्यत्
अवेदनं यन्न  च युग्मशुक्लं तत्सिद्धिमायाति कदाचिदेव ५७
स्यन्दात्मकं कृष्णगतन्तु शुक्लं शङ्खेन्दुकुन्दप्रतिमावभासम्
वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्यतमं वदन्ति ५८
गम्भीरजातं बहलञ्च शुक्लं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम् ५९
विच्छिन्नमध्यं पिशितावृतञ्च चलं शिरासूतमदृष्टिकृच्च
द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्जनीयम् ६०
उष्णाश्रुपातः पिडका च कृष्णे यस्मिन्भवेन्मुद्गनिभञ्च शुक्लम्
तदप्यसाध्यं प्रवदन्ति केचिदन्ये तु तत्तित्तिरिपक्षतुल्यम् ६१
श्वेतः समाक्रामति सर्वतो हि दोषेण यस्यासितमराडले तु
तमक्षिपाकात्ययमक्षिकोपं सर्वात्मकं वर्जयितव्यमाहुः ६२
अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलाश्रुः
विगृह्य कृष्णं प्रचयोऽभ्युपैति तं चाजकाजातमिति व्यवस्येत्  ६३
इति कृष्णमराडलजा रोगाः
अथ नेत्रशुक्लभागजा रोगाः
प्रस्तारिशुक्लक्षतजाधिमांसस्नाय्वर्मसंज्ञाः  खलु पञ्च रोगाः
स्याच्छुक्तिका चार्जुनपिष्टकौ च जालं शिराणां पिडकाश्च याः स्युः
रोगा बलासग्रथितेन सार्द्धमेकादशाक्ष्णोः खलु शुक्लभागे ६४

प्रस्तार्यर्म तनु स्तीर्णं श्यावं रक्तनिभं सितम् ६५
सुश्वेतं मृदु शुक्लार्म शुक्ले तद् वर्द्धते चिरात् ६६
पद्माभं मृदु रक्तार्म यन्मांसं चीयते सिते ६७
पृथु मृद्वधिमांसार्म बहलञ्च यकृन्निभम् ६८
स्थिरं प्रसारि मांसाढ्यं शुष्कं स्नाय्वर्म पञ्चमम् ६९
श्यावाः स्युः पिशितनिभाश्च बिन्दवो ये
शुक्लाभाः सितनिचिताः स शुक्तिसञ्ज्ञः ७०
एको यः शशरुधिरप्रभस्तु बिन्दुः शुक्लस्थो भवति तमर्जुनं वदन्ति ७१
श्लेष्ममारुतकोपेन शुक्ले मांसं समुन्नतम्
पिष्टवत्पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ७२
जालाभः कठिनशिरोऽरुणः शिराणां
सन्तानो भवति शिराऽदिजालसञ्ज्ञः ७३
शुक्लस्थाः सितपिडकाःशिरावृता यास्ता विद्यादसितसमीपजाः शिराजाः ७४
कांस्याभोऽमृदुरथ वारिबिन्दुकल्पो विज्ञेयो नयनसिते बलाससञ्ज्ञः ७५
इति शुक्ल भागजा रोगा
अथ वर्त्मजा रोगाः
उत्सङ्गिन्यथ कुम्भीका पोथकी वर्त्मशर्करा
तथाऽर्शोवर्त्म शुष्कार्शस्तथैवाञ्जनदूषिका ७६
अभ्यन्तरमुखी ताम्रा बाह्यतो वर्त्मसंश्रया
सोत्सङ्गोत्सङ्गपिडका सर्वजा स्थूलकण्डुरा ७७
वर्त्मान्ते पिडकाध्माता भिद्यन्ते च स्रवन्ति च
कुम्भीकाबीजसदृशाः कुम्भीकाः सन्निपातजाः ७८
स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः
रुजावत्यश्च पिडकाः पोथक्य इति कीर्त्तिताः ७९
पिडकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता
पिडका या खरा स्थूला वर्त्मस्था वर्त्मशर्करा ८०
एर्वारुबीजप्रतिमाः पिडका मन्दवेदनाः
श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीत्तर्यते ८१
दीर्घाङ्कुरः खरः स्तब्धो दारुणोऽभ्यन्तरोद्भवः

व्याधिरेषोऽभिविख्यातः शुष्कार्शो नाम नामतः ८२
दाहतोदवती ताम्रा पिडका वर्त्मसम्भवा
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जनदूषिका ८३
वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः
सवर्णाभिः स्थिराभिश्च विद्याद्बहलवर्त्म तत् ८४
कण्डूरेणाल्पतोदेन वर्त्मशोफेन मानवः
न समं छादयेदक्षि यत्रासौ वर्त्मबन्धकः ८५
मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च
अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः ८६
क्लिष्टं पुनः पित्तयुतं शोणितं विदहेद्यदा
तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमः ८७
यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम्
सकण्डूकं परिक्लेदि श्याववर्त्मेति तन्मतम् ८८
अरुजं बाह्यतः शूनं वर्त्म यस्य नरस्य हि
प्रक्लिन्नवर्त्म तद्विद्यात्क्लिन्नमत्यर्थमन्ततः ८९
यस्य धौतान्यधौतानि सम्बध्यन्ते पुनः पुनः
वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ९०
विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते
एतद्वातहतं विद्यात्सरुजं यदि वारुजम् ९१
वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम्
आचक्षीतार्बुदमिति सरक्तमवलम्बि च ९२
निमेषिणीः शिरा वायुः प्रविष्टो वर्त्मसंश्रयाः
सञ्चालयति वर्त्मानि निमेषः स न सिध्यति ९३
वर्त्मस्थो यो विवर्द्धेत लोहितो मृदुरङ्कुरः
तद्रक्तजं शोणितार्शश्छिन्नं वाऽपि विवर्द्धते ९४
अपाकी कठिनः स्थूलो ग्रन्थिवर्त्मभवोऽरुजः
सकण्डूः पिच्छिलः कोलप्रमाणो लगणः स्मृतः ९५
त्रयो दोषा बहिः शोथं कुर्युश्छिद्राणि वर्त्मनोः
प्रस्रवन्त्यन्तरुदकं बिसवद्बिसवर्त्म तत् ९६
वाताद्या वर्त्मसंकोचं जनयन्ति मला यदा

तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः ९७
इति वर्त्मजा रोगाः
अथ पद्मरोगाः
पद्मकोपः पद्मशातो रोगौ द्वौ पद्मसंश्रयौ ९८
प्रचालितानि वातेन पद्माण्यक्षि विशन्ति हि
घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च
असिते सितभागे च मूलकोशात्पतन्त्यपि
पद्मकोपः स विज्ञेयो व्याधिः परमदारुणः ९९
यत्पद्मदेहलक्ष्यं मुक्त्वा वर्त्मनोऽन्त प्रजायते
घर्षेत्पद्मासिते श्वेते पद्मकोपः च उच्यते १००
वर्त्मपद्माशयगतं पित्तं लोमानि शातयेत्
कण्डूं दाहं च कुरुते पद्मशातं तमादिशेत् १०१
इति पद्म रोगौ
अथ सन्धिजा रोगाः
पद्मवर्त्मगतः सन्धिर्वर्त्मशुक्ल गतोऽपरः
शुक्लकृष्ण गतश्चान्यः कृष्ण दृष्टिगतोऽपि च
मतः कनीनक गतः षष्ठश्चापाङ्ग संश्रितः १०२
पूयालसः सोपनाहः स्रावाश्चत्वार एव च
पर्वणिकाऽलजी जन्तुग्रन्थिः सन्धौ नवामयाः १०३
पक्वः शोथः सन्धिजः संस्रवेद्यः सान्द्रं पूयं पूति पूयालसाख्यः १०४
ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजश्चोपनाहः १०५
गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्युः स्रावांल्लक्षणैः स्वैरुपेतान्
तं हि स्रावं नेत्रनाडीति चैके लिङ्गं तस्या कीर्त्तयिष्ये चतुर्द्धा १०६
हारिद्राभं पीतमुष्णं जलं वा पित्तस्रावः संस्रवेत्सन्धिमध्यात् १०७
श्वेतं सान्द्रं पिच्छिलं यः स्रवेत्तु श्लेष्मस्रावोऽसौ विकारः प्रदिष्टः १०८
शोथः सन्धौ संस्रवेद्यस्तु पक्वः पूयं स्रावः सर्वजः सम्मतः स्यात् १०९
रक्तास्रावः शोणिताद्यो विकारो गच्छेदुष्णं तत्र रक्तं प्रभूतम् ११०
ताम्रा तन्वी दाहपाकोपपन्ना रक्ताज्ञेया पर्वणी वृत्तशोका
जाता सन्धौ कृष्णशुक्लेऽलजी स्यात्तस्मिन्नेव व्याहृता पूर्वलिङ्गैः १११
जन्तुग्रन्थिर्वर्त्मनः पद्मणश्च कण्डूं कुर्युर्जन्तवः सन्धिजाताः

नानारूपा वर्त्मशुक्लान्तसन्धौ गच्छन्त्यन्तर्लोचनं दूषयन्तः ११२
इति सन्धिजा रोगाः
अथ समस्तनेत्रजा रोगाः
स्यन्दाश्चतुष्का इह सम्प्रदिष्टाश्चत्वार एवेह तथाऽधिमन्थाः
पाकः सशोथः स च शोथहीनो हताधिमन्थोऽनिलपर्ययश्च ११३
शुष्काक्षिपाकस्त्विह कीर्त्तितश्च तथाऽन्यतो वात उदीरितश्च
दृष्टिस्तथाऽम्लाध्युषिता शिराणामुत्पातहर्षौ च समस्तनेत्रे ११४
एवं समस्तनेत्रे स्युरामया दश सप्त च
तेषामिह पृथग्वक्ष्ये यथावल्लक्षणान्यपि ११५
वातात्पित्तात्कफाद्रक्ता दभिष्यन्दश्चतुर्विधः
प्रायेण जायते घोरःसर्वनेत्रामयाकरः ११६
निस्तोदनस्तम्भनरोमहर्षसंघर्षपारुष्यशिरोऽभितापाः
विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ११७
दाहः प्रपाकः शिशिराभिनन्दा धूमायनं वाष्पसमुद्भवश्च
उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ११८
उष्णाभिनन्दा गुरुताऽक्षिशोथः कराडूपदेहावतिशीतता च
स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति ११९
ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च
पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति १२०
वृद्धैरेतैरभिष्यन्दैर्नराणाम क्रियावताम्
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः १२१
उत्पाट्यत इवात्यर्थं तथा निर्मथ्यतेऽपि च
शिरसोऽद्ध तु तं विद्यादधिमन्थं स्वलक्षणैः १२२
हन्याद् दृष्टिं श्लैष्मिकः सप्तरात्राद्योऽधीमन्थो रक्तजः पञ्चरात्रात्
षड्रात्राद्वा वातिको वै निहन्यान्मिथ्याऽचारात्पैत्तिकः सद्य एव १२३
कराडूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः
संरम्भी पच्यते यस्तु नेत्रपाकः सशोथकः
शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथजे १२४
उपेक्षणादक्षि यदाऽधिमन्थो वाताधिकः शोषयति प्रसह्य
रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नाम रोगः १२५

वारंवारञ्च पर्यैति भ्रुवौ नेत्रे च मारुतः
रुजाश्च विविधास्तीव्राः स ज्ञेयो वातपर्ययः १२६
यत्कूणितं दारुणरूक्षवर्त्म सन्दह्यते चाविलदर्शनं यत्
सुदारुणं यत्प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि १२७
यस्यावटूकर्णशिरोहनुस्थो मन्यागतो वाऽप्यनिलोऽन्यतो वा
कुर्याद्रुजोऽति भ्रुवि लोचने च तमन्यतोवातमुदाहरन्ति १२८
श्यावं लोहितपर्यन्तं सर्वमक्षि प्रपच्यते
सदाहशोथं सास्रावमम्लाध्युषितमम्लतः १२९
अवेदना वाऽपि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः
मुहुर्विरज्यन्ति च याः समन्ताद् व्याधिः शिरोत्पात इति प्रदिष्टः १३०
मोहाच्छिरोत्पात उपेक्षितस्तु जायेत रोगः स शिराप्रहर्षः
ताम्राक्षिता स्रावयति प्रगाढं तथा न शक्नोत्यभिवीक्षितुञ्च १३१
उदीर्णवेदनं नेत्रं रागशोथसमन्वितम्
घर्षनिस्तोदशूलाश्रुयुक्तमामान्वितं विदुः १३२
मन्दवेदनताकण्डू संरम्भाश्रुप्रशान्तताः
प्रसन्नवर्णता चाक्ष्णोर्निरामेक्षणलक्षणम् १३३
इति समस्तनेत्रजा रोगाः
द्वे पादमध्ये पृथुसन्निवेशे शिरोगते ते बहुधा हि नेत्रे
ताः प्रोक्षणोत्सादनलेपनादीन्पादप्रयुक्तान्नयनं नयन्ति १३४
मलोष्मसंघट्टनपीडनाद्यैस्ता दूषयन्ते नयनानि दुष्टाः
भजेत्सदा दृष्टिहितानि तस्मादुपानदभ्यञ्जनधावनानि १३५
चक्षुष्याः शालयो मुद्गा यवा मांसन्तु जाङ्गलम्
पक्षिमांसं विशेषेण वास्तूकं तण्डूलीयकम्
पटोलकर्कोटककारवेल्लफलानि सर्पिः परिपाचितानि
तथैव वार्त्ताकफलं नवीनमक्ष्णोर्हितः स्वादुरथापि तिक्तः
कट्वम्लगुरु तीक्ष्णोष्णमाषनिष्पावमैथुनम्
मद्यवल्लूरपिण्याकमत्स्य शाकविरूढजम्
विदाहीन्यन्नपानानि नहितान्यक्षिरोगिणे
सेक आश्च्योतनं पिण्डी विडालस्तर्पणं तथा
पुटपाकोऽञ्जनं चैभिः कल्कैर्नेत्रमुपाचरेत् १३६

सेकस्तु सूक्ष्मधाराभिः सर्वस्मिन्नयने हितः
मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरङ्गुलः १३७
स चापि स्नेहनो वाते पित्ते रक्ते च रोपणः
लेखनस्तु कफे कार्यस्तस्य मात्राऽभिधीयते १३८
षड्भिर्वाचां शतैः स्नेहे चतुर्भिस्तैस्तु रोपणे
तैस्त्रिभिर्लोचने कार्यः सेको नेत्रप्रसादने १३९
निमेषोन्मेषणं पुंसामङ्गुल्या च्छोटिकाऽथवा
गुर्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता बुधैः १४०
सेकस्तु दिवसे कार्यो रात्रावत्यन्तिके गदे
एरराडदलमूलत्वक्छृतमाजं पयो हितम्
सुखोष्णं नेत्रयोः सिक्तं वाताभिष्यन्दनाशनम् १४१
पथ्याऽक्षामलखाखसवल्कलकल्केन सूक्ष्मवस्त्रेण
कृत्वा पोटलिकां तामहिफेनोत्थद्रवेण संयुक्ताम् १४२
निदधीत लोचने स्यात्सर्वाभिष्यन्दसंक्षयः शीघ्रम्
योगोऽयमृषिभिरुक्तो जगदुपकाराय कारुणिकैः १४३
भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते
अचिरेणैव तद्वारि तिमिराणि व्यपोहति १४४
स्नानं कृष्णतिलैश्चापि चक्षुष्यमनिलापहम्
आमलैः सततं स्नानं परं दृष्टिबलावहम् १४५
त्रिफलायाः कषायस्तु धावनान्नेत्ररोगजित्
कवलान्मुखरोगघ्नः पानतः कामलाऽपहः १४६
क्वाथक्षीरद्रवस्नेहबिन्दूनां यत्तु पातनम्
द्व्यङ्गुलोन्मीलिते नेत्रे प्रोक्तमाश्च्योतनं हि तत् १४७
विन्दवोऽष्टौ लेखनेषु रोपणे दश विन्दवः
स्नेहने द्वादश प्रोक्तास्ते शीते कोष्णरूपिणः १४८
उष्णे तु शीतरूपाः स्यु सर्वत्रैवैष निश्चयः
वाते तिक्तं तथा स्निग्धं पित्ते मधुरशीतलम् १४९
कफे तिक्तोष्णरूक्षं स्यात्क्रमादाश्च्योतनं हितम्
आश्च्योतनानां सर्वेषां मात्रा स्याद्वाक्छतोन्मिता १५०
बिल्वादिपञ्चमूलेन बृहत्येरराडशिग्रुभिः

क्वाथ आश्च्योतने कोष्णो वाताभिष्यन्दनाशनः १५१
त्रिफलाऽश्च्योतनं नेत्रे सर्वाभिष्यन्दनाशनम् १५२
उक्तभेषजकल्कस्य पिण्डी च कोलमात्रया
वस्त्रखण्डेन सम्बद्धाऽभिष्यन्दव्रणनाशिनी १५३
स्निग्धोष्णा पिण्डिका वाते पित्ते सा शीतला मता
रूक्षोष्णा श्लेष्मणि प्रोक्ता विधिरुक्तो बुधैरयम् १५४
एरण्डपत्रमूलत्वङ्निर्मिता वातनाशिनी
धात्रीविरचिता पित्ते शिग्रुपत्रकृता कफे १५५
निम्बपत्रकृतापिण्डी पित्तश्लेष्महरी भवेत्
शुण्ठीनिम्बदलैः पिण्डी सुखोष्णा स्वल्पसैन्धवा १५६
धार्या नेत्रेऽनिलकफे शोथकण्डूव्यथाहरी
त्रिफलापिण्डिका नेत्रे वातपित्तकफापहा १५७
पथ्याऽक्षामलखाखसवल्कलकल्कोऽहिफेनजलयुक्तः
तेन विरचिता पिण्डी शमयति सकलानभिष्यन्दान् १५८
विडालको बहिर्लेपो नेत्रे पक्ष्मविवर्जिते
तस्य मात्रा परिज्ञेया मुखालेपविधानवत् १५९
अङ्गुलस्य चतुर्थांशो मुखलेपः कनिष्ठकः
मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो भवेत् १६०
स्थितिकालेऽपि तस्योक्तो यावत्कल्को न शुष्यति
शुष्कस्तु गुणहीनः स्यात्तथा दूषयति त्वचम् १६१
यष्टिगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः
जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः १६२
रसाञ्जनेन वा लेपः पथ्याबिल्वदलैरपि
वचाहरिद्राविश्वैर्वा तथा नागरगैरिकैः १६३
वातातपरजोहीने वेश्मन्युत्तानशायिनः
आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ १६४
समौ दृढावसन्धानौ कर्त्तव्यौ नेत्रकोशयोः
पूरयेद् घृतमण्डेन विलीनेन सुखोदकैः १६५
सर्पिषा शतधौतेन क्षीरजेन घृतेन वा
निमग्नान्यक्षिपक्ष्माणि यावत्स्युस्तावदेव हि १६६

पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः
भिषग्भिरेष कथितः पुराणैस्तर्पणो विधिः १६७
यद्रूक्षं परिशुष्कञ्च नेत्रं कुटिलमाविलम्
शीर्णपक्ष्मशिरोत्पातकृच्छ्रोन्मीलनसंयुतम् १६८
तिमिरार्जुन शुक्राद्यैरभिष्यन्दाधिमन्थकैः
शुष्काक्षिपाकशोथाभ्यां युक्तं पवनपर्ययैः
तन्नेत्रं तर्पयेत्सम्यङ् नेत्ररोगविशारदः १६९
तर्पणं धारयेद्वर्त्मरोगे वाचां शतं बुधः १७०
स्वस्थे कफे सन्धिरोगे वाचां पञ्चशतानि च
षट्शतानि कफे कृष्णरोगे सप्तशतानि हि १७१
दृष्टिगे च शतान्यष्टावधिमन्थे सहस्रकम्
सहस्रं वातरोगेषु धार्यमेवं हि तर्पणम् १७२
ततश्चापाङ्गतः स्नेहं स्रावयित्वाऽक्षिशोधयेत्
स्विन्नेन यवपिष्टेन स्नेहवीर्येरितं ततः १७३
यथास्वं धूमपानेन कफमस्य विरेचयेत्
एकाहं वा त्र्यहं वाऽपि पञ्चाहं वाऽपि तर्पयेत् १७४
तर्पणे तृप्तिलिङ्गानि नेत्रस्यैतानि लक्षयेत् १७५
सुखसुप्तावबोधत्वं वैशद्यं दृष्टिपाटवम्
निर्वृतिर्व्याधिशान्तिश्च क्रियालाघवमेव च १७६
गुर्वाविलमतिस्निग्धमश्रु कराडूपदेहवत्
घर्षतोदयुतं नेत्रमतितर्पितमादिशेत् १७७
आस्रावशोफरोगाढ्यमसहं रूपदर्शने
आविलं परुषं रूक्षं नेत्रं स्याद्धीनतर्पितम् १७८
अनयोर्दोषबाहुल्यात् प्रयत्नेन चिकित्सिते
रुक्षस्निग्धोपचाराभ्यामनयोःस्यात्प्रतिक्रिया १७९
दुर्दिनात्युष्णशीतेषु चिन्तायां सम्भ्रमेषु च
अशान्तोपद्रवे वाऽक्षिण तर्पणं न प्रशस्यते १८०
द्वे बिल्वे स्निग्धमांसस्य परं द्रव्यपलं मतम्
द्रव्यस्य कुडवोन्मानं सर्वमेकत्र पेषयेत् १८१
तदेकत्र समालोड्य पत्रैः सुपरिवेष्टितम्

पुटपाकविधानेन तत्पक्त्वा तद्रसं बुधः १८२
तर्पणोक्तेन विधिना यथावद्विनियोजयेत्
दृष्टिमध्ये निषेक्तव्यो नित्यमुत्तानशायिनः १८३
तेजांस्यनिलमाकाशमातपं भास्करस्य च
नेक्षेत तर्पिते नेत्रे यश्च वा पुटपाकवान् १८४
अथ सम्पक्वदोषस्य प्राप्तमञ्जनमाचरेत्
अञ्जनं क्रियते येन तद् द्रव्यं चाञ्जनं मतम् १८५
वटिकारसचूर्णानि त्रिविधान्यञ्जनानि हि
कुर्याच्छलाकयाऽङगुल्या हीनानि स्युर्यथोत्तरम् १८६
स्नेहनं रोपणं चापि लेखनं तत्त्रिधा पृथक्
मधुरं स्नेहसम्पन्नमञ्जनं स्नेहनं मतम् १८७
कषायतिक्तरसयुक्सस्नेहं रोपणं स्मृतम्
अञ्जनं क्षारतिक्ताम्लरसैर्लेखनमुच्यते १८८
हरेणुमात्रां कुर्वीत वटीं तीक्ष्णाञ्जने भिषक्
प्रमाणं मध्यमे सार्द्धद्विगुणं तु मृदौ भवेत् १८९
रसक्रिया तूत्तमा स्यात् त्रिविडङ्गमिता मता
मध्यमा द्विविडङ्गा सा हीना त्वेकविडङ्गिका १९०
शलाकाः स्नेहने चूर्णे चतस्रः प्राहुरञ्जने
रोपणे तासु तिस्रः स्युस्ते उभे लेखने स्मृते १९१
मुखयोः कुञ्चिता श्लक्ष्णां शलाकाऽष्टाङ्गुलोन्मिता
अश्मजा धातुजा वा स्यात्कलायपरिमण्डला १९२
सुवर्णरजतोद्भूता शलाका स्नेहने स्मृता
तीव्रलोहाश्मसञ्जाता शलाका लेखने मता
अङ्गुली तु मृदुत्वेन रोपणे कथिता बुधैः १९३
त्रिफालाभृङ्गशुण्ठीनां रसैः शुद्धश्च सर्पिषा १९४
गोमूत्रमध्वजाक्षीरैः सिक्तो नागः प्रतापितः
तच्छलाका हरत्येव सकलान्नेत्रजान्गदान् १९५
कृष्णभागादधः कुर्याद्यावन्नयनमञ्जनम्
हेमन्ते शिशिरे चापि मध्याह्नेऽञ्जनमिष्यते १९६
पूर्वाह्णे वाऽपराह्णे वा ग्रीष्मे शरदि चेष्यते

वर्षास्वदभ्रे नात्युष्णे वसन्ते तु सदैव हि १९७
प्रातः सायन्तु तत्कुर्यान्न च कुर्यात्सदैव हि १९८
श्रान्ते प्ररुदिते भीते पीतमद्ये नवज्वरे
अजीर्णे वेगघाते च नाञ्जनं सम्प्रशस्यते १९९
पथ्याऽक्षधात्रीबीजानि एकद्वित्रिगुणानि च
पिष्ट्वाऽम्बुना वटीं कुर्यादञ्जनं द्विहरेणुकम्
नेत्रस्त्रावं हरत्याशु वातरक्तरुजं तथा २००
रसाञ्जनं हरिद्रे द्वे मालतीनिम्बपल्लवाः
गोशकृद्रससंयुक्ता वटी नक्तान्ध्यनाशिनी
एतस्याश्चाञ्जने मात्रा प्रोक्ता सार्द्धं हरेणुका २०१
शङ्खनाभिर्बिभीतस्य मज्ञा पथ्या मनः शिला
पिप्पली मरिचं कुष्ठं वचा चेति समांशकम् २०२
छागीक्षीरेण संपिष्य वटीं कुर्याद्यवोन्मिताम्
हरेणुमात्रं संघृष्य जलेनाञ्जनमाचरेत् २०३
तिमिरं मांसवृद्धिञ्च काचं पटलमर्बुदम्
रात्र्यन्ध्यं वार्षिकं पुष्पं वटी चन्द्रोदया जयेत् २०४
पलाशपुष्पस्वरसैर्बहुशः परिभावितम्
करञ्जबीजं तद्वर्त्तिर्दृष्टेः पुष्पं विनाशयेत् २०५
कतकस्य फलं पिष्ट्वा मधुना नेत्रमञ्जयेत्
ईषत्कर्पूरसहितं तत्स्यान्नेत्रप्रसादनम् २०६
रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला
समुद्रफेनं लवणं गैरिकं मरिचं तथा २०७
एतत्समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मनि
अञ्जनं क्लेदकरडूघ्नं पद्मणाञ्च प्ररोहणम् २०८
दुग्धेन करडूं क्षौद्रेण नेत्रस्त्रावञ्च सर्पिषा
पुष्प तैलेन तिमिरं काञ्जिकेन निशाऽन्धताम् २०९
पुनर्नवा हरत्याशु भास्करस्तिमिरं यथा २१०
बब्बूलदलनिक्वाथो लेहीभूतस्तदञ्जनात्
नेत्रस्त्रावो व्रजेच्छोषं मधुयुक्तान्न संशयः २११
वटक्षीरेण संयुक्तं मुख्यकर्पूरजं रजः

क्षिप्रमञ्जनतो हन्ति कुसुमं तु द्विमासिकम् २१२
क्षौद्राश्वलालासंघृष्टैर्मरिचैर्नेत्रमञ्जयेत्
अतिनिद्रा शमं याति तमः सूर्योदयादिव २१३
अग्नितप्तं हि सौवीरं निषिञ्चेत्त्रिफलारसैः
सप्तवेलं तथा स्तन्यैः स्त्रीणां सिक्तं विचूर्णितम् २१४
अञ्जयेत्तेन नयने प्रत्यहं चक्षुषो हितम्
सर्वानक्षिविकारांस्तु हन्यादेतन्न संशयः २१५
शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा
गृह्णीयात्तज्जलं सर्वं त्यजेच्चूर्णमधोगतम् २१६
शुष्कञ्च तज्जलं सर्व पर्पटीसन्निभं भवेत्
विचूर्ण्य भावयेत्सम्यक्त्रिवेलं त्रिफलारसैः २१७
कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत्
अञ्जयन्नेयने तेन नेत्राखिलगदच्छिदा २१८
दक्षाण्डत्वक्छिलाकाचशङ्खचन्दनसैन्धवैः
चूर्णितैरञ्जनं प्रोक्तं पुष्पादीनां निकृन्तनम् २१९
मुक्ताकर्पूरकाचागुरुमरिचकणासैन्धवं सैलवालं
शुण्ठीकक्लोलकांस्यत्रपुरजनिशिलाशङ्खनाभ्यभ्रतुत्थम्
दक्षाण्डत्वक्च साक्षं क्षतजमथ शिवा क्लीतकं राजवर्त्त
जातीपुष्पं तुलस्याः कुसुममभिनवं बीजकं स्यात्तथैव २२०
पूतीकनिम्बार्जुनभद्रमुस्तं सताम्रसारं रसगर्भयुक्तम्
प्रत्येकमेषां खलु माषकैकं यत्नेन पिष्येन्मधुनाऽतिसूक्ष्मम् २२१
भवन्ति रोगा नयनाश्रिता ये नितान्तमात्रोपचिताश्च तेषाम्
विधीयते शान्तिरवश्यमेव मुक्ताऽदिनाऽनेन महाञ्जनेन २२२
कणा सलवणोषणा सहरसाञ्जना साञ्जना
सरित्पतिकफः सिता सितपुनर्नवासम्भवा
रजन्यरुणचन्दनं मधुकतुत्थपथ्याशिला
ह्यरिष्टदलशावरस्फटिकशङ्खनाभीन्दवः २२३
इमानि तु विचूर्णयेन्निबिडवाससा शोधयेत्
तथाऽयसि विमर्दयेत्समधु ताम्रखण्डेन तत्
इदं मुनिभिरीरितं नयनशोणनामाञ्जनं

करोति तिमिरद्मयं पटलपुष्पनाशं बलात् २२४
हरीतकी वचा कुष्ठं पिप्पली मरिचानि च
बिभीतकस्य मज्ञा च शङ्खनाभिर्मनः शिला २२५
सर्वमेतत्समं कृत्वा गव्यद्मीरेण पेषयेत्
नाशयेत्तिमिरं कगडूपटलान्यर्बुदानि च २२६
अपि त्रिवार्षिकं शुक्लं मासेनैकेन नाशयेत्
अधिकानि च मांसानि रात्रावन्धत्वमेव च २२७
रजनी निम्बपत्राणि पिप्पली मरिचानि च
विडङ्गं भद्रमुस्तं च सप्तमीत्वभया स्मृता २२८
अजामूत्रेण सम्पिष्य च्छायायां शोषयेद्वटीम्
वारिणा तिमिरं हन्ति गोमूत्रेण तु पिष्टकम् २२९
मधुना पटलं हन्ति नारीद्मीरेण पुष्पकम्
एषा चन्द्रप्रभा वर्त्तिः स्वयं रुद्रेण निर्मिता २३०
कणा च्छागयकृन्मध्ये पक्त्वा तद्रसपेषिता
अचिराद्धन्ति नक्तान्ध्यं तद्वत्सद्मौद्रमूषणम् २३१
त्रिफलाया रसं प्रस्थं प्रस्थं भृङ्गरजस्य च
वृषस्य च रसं प्रस्थं शतावर्याश्च तत्समम् २३२
गुडूच्या आमलक्याश्च रसं छागीपयस्तथा
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् २३३
कल्कः कणा सिता द्राद्मा त्रिफला नीलमुत्पलम्
मधुकं द्मीरकाकोली मधुपर्णी निदिग्धिका २३४
तत्साधु सिद्धं विज्ञाय शुभे भागडे निधापयेत्
ऊद्ध्र्वं पानमधःपानं मध्ये पानं च शस्यते २३५
यावन्तो नेत्ररोगाः स्युस्तान्पानादपकर्षति
सरक्ते रक्तदुष्टे च रक्ते वा विस्नुते तथा २३६
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे
अभिष्यन्देऽधिमन्थे च पद्मकोषे सुदारुणे २३७
नेत्ररोगेषु सर्वेषु दोषत्रयकृतेष्वपि
परं हितमिदं प्रोक्तं त्रिफलाऽद्य महाघृतम् २३८
शतमेकं हरीतक्या द्विगुणञ्च बिभीतकम्

चतुर्गुणं त्वामलकं वृषमार्कवयोः समम् २३९
चतुर्गुणोदकं दत्वा शनैर्मृद्वग्निना पचेत्
भागं चतुर्थं संरक्ष्य क्वाथं तमवतारयेत् २४०
शर्करा मधुकं द्राक्षा मधुयष्टी निदिग्धिका
काकोली क्षीरकाकोली त्रिफला नागकेशरम् २४१
पिप्पली नन्दनं मुस्तं त्रायमाणा तथोत्पलम्
घृतप्रस्थं समं क्षीरं कल्कैरेतैः शनैः पचेत् २४२
हन्यात्सतिमिरं काचं नक्तान्ध्यं शुल्कमेव च
तथा स्रावं च कण्डूञ्च श्वयथुं च कषायताम् २४३
कलुषत्वं च नेत्रस्य बिन्दूर्मपटलानि च
बहुनाऽत्र किमुक्तेन सर्वान्नेत्रामयान्हरेत् २४४
यस्य चोपहता दृष्टिः सूर्याग्निभ्यां प्रपश्यतः
तस्यैतद् भेषजं प्रोक्तं मुनिभिः परमं हितम् २४५
मार्जितं दर्पणं यद्वत्परां निर्मलतां व्रजेत्
तद्वदेतेन पीतेन नेत्रं निर्मलतामियात्
वारिद्रोणद्वयं चात्र बृषमार्कवयोस्तुले २४६
वासविश्वाऽमृतादार्वीरक्तचन्दनचित्रकैः
भूनिम्बनिम्बकटुकापटोलत्रिफलाऽम्बुदैः २४७
निशाकलिङ्गकुटजः क्वाथः सर्वाक्षिरोगहा
वैस्वर्यं पीनसं श्वासं कासं नाशयति ध्रुवम् २४७

इति त्रिषष्टितमो नेत्ररोगाधिकारः समाप्तः ६३

अथ चतुःषष्टितमः कर्णरोगाधिकारः ६४

कर्णशूलः कर्णनादो बाधिर्यं क्ष्वेड एव च
कर्ण स्रावकर्णकण्डूः कर्णगूथस्तथैव च १
प्रतिनाहो जन्तुकर्णो विद्रधिर्द्विविधस्तथा
कर्णपाकःपूतिकर्णस्तथैवार्शश्चतुर्विधः २
तथाऽबुदं सप्तविधं शोफश्चापि चतुर्विधः
एते कर्णगता रोगा अष्टाविंशतिरीरिताः ३
समीरणः श्रोत्रगतोऽन्यथा चरन्समन्ततः शूलमतीव कर्णयोः

करोति दोषैश्च यथास्वमावृतः स कर्णशूलः कथितो दुराचरः ४
मूर्च्छा दाहो ज्वरः कासः श्वासोऽथ वमथुस्तथा
उपद्रवाः कर्णशूले भवन्त्येते मरिष्यतः ५
कर्णश्रोत्रस्थिते वाते शृणोति विविधान्स्वनान्
भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते ६
यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति
शुद्धः श्लेष्मान्वितो वाऽपि बाधिर्य तेन जायते ७
बाधिर्यं बालवृद्धोत्थं चिरोत्थञ्च विवर्जयेत् ८
वायुः पित्तादिभिर्युक्तो वेणुघोषसमं स्वनम्
करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते ९
शिरोऽभिघातादथ वा निमज्जतो जले प्रपातादथ वाऽपि विद्रधेः
स्रवेद्धि पूयं श्रवणोऽनिलार्दितः स कर्णसंस्राव इति प्रकीर्त्तितः १०
मारुतः कफसंयुक्तः कर्णे कराडूं करोति हि ११
पित्तोष्मशोषितः श्लेष्मा कुरुते कर्णगूथकम् १२
स कर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखं प्रपद्यते
तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसाऽर्द्धभेदकृत् १३
यदा तु मूर्च्छन्त्यथवा तु जन्तवः सृजन्त्यपत्त्यान्यथवाऽपि मक्षिकाः
तदञ्जनत्वाच्छ्रवणे निरुच्यते भिषग्भिराद्यैः कृमिकर्णको गदः १४
पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य हि
अरतिं व्याकुलत्वञ्च भृशं कुर्वन्ति वेदनाम्
कर्णो निस्तुद्यते तस्य तथा च फर्फरायते
कीटे चरति रुक्तीव्रा निस्पन्दे मन्दवेदना १५
क्षताभिघातप्रभवस्तु विद्रधिर्भवेत्तथा दोषकृतोऽपरः पुनः
स रक्तपीतारुणमस्रमास्रवेत्प्रतोदधूमायनदाहचोषवान् १६
कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत् १७
कर्णविद्रधपाकेन कर्णे वा वारिपूरणात्
पूयं स्रवति यः पूति स ज्ञेयः पूतिकर्णकः १८
कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणैः १९
नादोऽतिरुक्कर्णमलस्य शोथः स्रावस्तनुश्चावणञ्च वातात् २०
शोथः सरागो दरणं विदाहः सपूतिपीतस्रवणञ्च पित्तात् २१

वैश्रुत्यकराडूस्थिरशोथशुक्ल स्निग्धा स्नुतिः स्वल्परुजा कफाच्च २२
सर्वाणि रूपाणि च सन्निपातात्स्रावश्च तत्राधिकदोषवर्णः २३
अथ कर्णपालीरोगाः
सौकुमार्याच्चिरोत्सृष्टे सहसैवातिवर्धिते
कर्णे शोथो भवेत्पाल्यां सरुजः परिपोटवान्
कृष्णारुणनिभः स्तब्धः स वातात्परिपोटकः २४
गुर्वाभरण संयोगात्ताडनाद्घर्षणादपि
शोथः पाल्यां भवेच्छ्यावो दाहपाकरुजाऽन्वितः
रक्तो वा रक्तपित्ताभ्यामुत्पातः सगदः स्मृतः २५
कर्णं बलाद्वर्द्धयतः पाल्यां वायुः प्रकुप्यति
कफं संगृह्य कुरुते शोथं स्तब्धमवेदनम्
उन्मन्थकः सकराडूको विकारः कफवातजः २६
संवर्ध्यमाने दुर्विद्धे कराडूदाहरुजाऽन्वितः
शोथो भवति पाकश्च त्रिदोषो दुःखवर्द्धनः २७
कफासृक्कृमयः क्रुद्धाः सर्षपाभा विसारिणः
कुर्वन्ति पिडकां पाल्यां कराडूदाहसमन्विताम्
कफासृक्कृमिसम्भूतः स विसर्पन्नितस्ततः
लिह्यात्सशष्कुलद्यं पालद्यं परिलेही च स स्मृतः २८
कर्णशूले कर्णनादे बाधिर्ये क्ष्वेड एव च
चतुर्ष्वपि च रोगेषु सामान्यं भेषजं स्मृतम्
शृङ्गवेरं सहमधु सैन्धवं तैलमेव च
कदुष्णं कर्णयोर्धार्यमेतत्स्याद् वेदनाऽपहम् २९
लशुनार्द्रकशिग्रूणां वारुराया मूलकस्य च
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ३०
अर्काङ्कुरानम्लपिष्टान्स तैललवणान्वितान्
सन्निदध्यात्सुधाकाराडे कोरिते मृत्स्नयाऽवृते ३१
पुटपाकक्रमात्स्विन्नं पीडयेदारसागमात्
सुखोष्णं तद्रसं कर्णे प्रक्षिपेच्छूलशान्तये ३२
अर्कस्य पत्रं परिणामपीतमाज्येन लिप्तं शिखियोगतप्तम्
आपीड्य तस्याम्बु सुखोष्णमेव कर्णे निषिक्तं हरते हि शूलम् ३३

तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि
छागमूत्रं प्रशंसन्ति कोष्णं सैन्धवसंयुतम् ३४
तैलं श्वेतार्कमूलेन मन्देऽग्नौ विधिना कृतम्
हरेदाशु त्रिदोषोत्थं कर्णशूलप्रपूरणात् ३५
हिङ्गुसैन्धवशुराठीभिस्तैलं सर्षपसम्भवम्
विपक्वं हरतेऽवश्यं कर्णशूलं प्रपूरणात् ३६
कर्णशूले कर्णनादे बाधिर्ये न्द्वेड एव च
पूरणं कटुतैलेन हितं वातघ्नमौषधम् ३७
शिखरिन्नारजवारि तत्कृतकल्केन साधितं तैलम्
अपहरति कर्णनादं बाधिर्यं चापि पूरणतः ३८
गवां मूत्रेण बिल्वानि पिष्ट्वा तैलं विपाचयेत्
सजलञ्च सदुग्धञ्च तद्बाधिर्यहरं परम्
इति बिल्व तैलम्
कर्णस्रावे पूतिकर्णे तथैव कृमिकर्णके
सामान्यं कर्म कुर्वीत योगान्वैशेषिकानपि ४०
स्वर्जिकाचूर्णसंयुक्तं बीजपूररसं न्दिपेत्
कर्णस्रावरुजो दाहास्ते नश्यन्ति न संशयः ४१
आम्रजम्बूप्रवालानि मधुकस्य वटस्य च
एभिस्तु साधितं तैलं पूतिकर्णगदं हरेत् ४२
जातीपत्ररसैस्तैलं विपक्वं पूतिकर्णजित्
पिष्टं रसाञ्जनं नार्याः न्दीरेण न्दौद्रसंयुतम्
प्रशस्यते चिरोत्थे तत्स्रावके पूतिकर्णके ४३
कुष्ठहिङ्गुबचा दारुशताह्वाविश्वसैन्धवैः
पूतिकर्णापहं तैलं बस्तमूत्रेण साधितम् ४४
शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत्
तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति ४५
चूर्णेन गन्धकशिलारजनीभवेन मुष्टयंशकेन कटुतैलपलाष्टकन्तु
धत्तूरपत्ररसतुल्यमिदं विपक्वं नाडीं जयेच्चिरभवामपि कर्णजाताम् ४६
कृमिकर्णविनाशाय कृमिघ्नीं कारयेत्क्रियाम्
वार्त्ताकुधूमश्च हितःसार्षपः स्नेह एव च ४७

पूरणं हरितालेन गव्यमूत्रयुतेन च
धूपने कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ४८
चिकित्सा कर्णशोथानां तथा कर्णार्शसामपि
कर्णार्बुदानां कुर्वीत शोथार्शोऽबुदवद्भिषक् ४९
पालीसंशोषणे कुर्याद्वातकर्णरुजः क्रियाः
स्वेदयेद्यत्नतस्तां च स्विन्नां संवर्धयेत्तिलैः ५०
शतावरीवाजिगन्धापय स्यैरण्डबीजकैः
तैलं विपक्वं सक्षीरं पाल्यां संवर्द्धयेत्सुखम् ५१
जीवनीयस्य कल्केन तैलं दुग्धेन पाचयेत्
चिकित्सेत्तेन तैलेन हृतास्त्रं परिपोटकम् ५२
शीतलेपैर्जलौकोभिरुत्पातं समुपाचरेत्
हलिनीसुरसाभ्यां च गोधाकङ्कवसाऽन्वितम् ५३
तैलञ्च पक्वमभ्यङ्गादुन्मन्थं नाशयेद् ध्रुवम्
दुःखवर्द्धनकं सिक्त्वा जम्ब्वाम्रबिल्वपत्रजैः ५४
क्वाथैस्तैलेन सुस्निग्धं तच्चूर्णैश्चावधूलयेत्
बहुशो गोमयैस्तप्तैः स्वेदितं परिलेहितम्
घनसारैः समालिम्पेदजामूत्रेण कल्कितैः ५५
इति चतुःषष्टितमः कर्णरोगाधिकारः समाप्तः ६४

अथ पञ्चषष्टितमो नासारोगाधिकारः ६५
आदौ च पीनसः प्रोक्तः पूतिनस्यस्ततः परम्
नासापाकोऽत्र गणितः पूयशोणितमेव च १
क्षवथुर्भ्रंशथुर्दीप्तिः प्रतीनाहः परिस्त्रवः
नासाशोषः प्रतिश्यायाः पञ्च सप्तार्बुदानि च २
चत्वार्यर्शांसि चत्वारः शोथाश्चत्वारि तानि च
रक्तपित्तानि नासायां चतुस्त्रिंशद्गदाः स्मृताः ३
आनह्यते शुष्यति यस्य नासा प्रक्लेदमायाति तु धूप्यते च
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येदिह पीनसेन ४
तं चानिलश्लेष्मभवं विकारं ब्रूयात्प्रतिश्यायसमानलिङ्गम् ५
दोषैर्विदग्धैर्गलतालुमूले सन्दूषितो यस्य समीरणस्तु

निरेति पूतिर्मुखनासिकाभ्यां तं पूतिनस्यं प्रवदन्ति रोगम् ६
घ्राणाश्रितं पित्तमरूषि कुर्याद्यस्मिन्विकारे बलवांश्च पाकः
तं नासिकापाकमिति व्यवस्येद्विक्लेदकोथावथवाऽपि यत्र ७
दोषैर्विदग्धैरथवाऽपि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तैः
नासा स्रवेत्पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ८
घ्राणाश्रिते मर्मणि सम्प्रदुष्टो यस्यानिलो नासिकया निरेति
कफानुयातो बहुशोऽतिशब्दस्तं रोगमाहुः क्षवथुं गदज्ञाः ९
तीक्ष्णोपयोगादतिजिघ्रतो वा भावान्कटूनर्कनिरीक्षणाद्वा
सूत्रादिभिर्वा तरुणास्थिमर्मरायुद्घर्षतेऽन्य क्षवथुर्निरेति १०
प्रभ्रश्यते नासिकया तु यस्य सान्द्रो विदग्धो लवणः कफस्तु
प्राक्सञ्चितो मूर्धनि पित्ततप्ते तं भ्रंशथुं व्याधिमुदाहारन्ति ११
घ्राणे भृशं दाहसमन्विते तु विनिःसरेद् धूम इवेह वायुः
नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्तिमुदाहरन्ति १२
उच्छ्वासमार्गन्तु कफः सवातो रुन्ध्यात्प्रतीनाहमुदाहरेत्तम् १३
घ्राणाद्घनः पीतसितस्तनुर्वा दोषः स्रवेत्स्रावमुदाहरेत्तम् १४
घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च
कृच्छ्राच्छ्वसित्यूर्ध्वमधश्च जन्तुर्यस्मिन्स नासापरिशोष उक्तः १५
सन्धारणाजीर्णरसोऽतिभाष्यक्रोधर्त्तुवैषम्यशिरोऽभितापैः
सञ्जागरातिस्वपनाम्बुशीतावश्यायकैर्मैथुनवाष्पसेकैः
संस्त्यानदोषे शिरसि प्रवृद्धो वायुः प्रतिश्यायमुदीरयेत्तु १६
चयं गता मूर्द्धनि मारुतादयः पृथक्समस्ताश्च तथैव शोणितम्
प्रकुप्यमाणा विविधैः प्रकोपणैस्ततः प्रतिश्यायकरा भवन्ति हि १७
क्षवप्रवृत्तिः शिरसोऽभिपूर्णता स्तम्भोऽङ्गमर्दः परिहृष्टरोमता
उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः १८
आनद्धाऽपिहिता नासा तनुस्रावप्रसेकिनी
गलताल्वोष्टशोषश्च निस्तोदः शंङ्खयोस्तथा
क्षवप्रवृत्तिरत्यर्थं वक्त्रवैरस्यमेव च
भवेत्स्वरोपघातश्च प्रतिश्यायेऽनिलात्मके १९
उष्णः सपीतकः स्रावो घ्राणात्स्रवति पैत्तिके
कृशोऽतिपाराडुः सन्तप्तो भवेदुष्णाभिपीडितः २०

घ्राणात्कफकृते श्वेतः कफः शीतः स्त्रवेद् बहुः २१
शुक्लावभासः शूनाक्षो भवेद् गुरुशिरा नरः
गलताल्वोष्ठशिरसां कण्डूभिरतिपीडितः २२
भूत्वा भूत्वा प्रतिश्यायो योऽकस्मात्सन्निवर्त्तते
सम्पक्वो वाऽप्यपक्वो वा स च सर्वभवः स्मृतः २३
प्रक्लिद्यते मुहुर्नासा पुनश्च परिशुष्यति
पुनरानह्यते वाऽपि पुनर्विव्रियते तथा २४
निश्वासो वाऽपि दुर्गन्धो नरो गन्धान्न वेत्ति च
एवं दुष्टं प्रतिश्यायं जानीयात्कृच्छ्रसाधनम् २५
रक्तजे तु प्रतिश्याये रक्तस्त्रावः प्रवर्त्तते
पित्तप्रतिश्यायकृतैर्लिङ्गैश्चापि समन्वितः २६
ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः
दुर्गन्धोच्छ्वासवक्त्रश्च गन्धानपि न वेत्ति सः २७
सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः
दुष्टतां यान्ति कालेन तदाऽसाध्या भवन्ति च २८
मूर्च्छन्ति कृमयश्चात्र श्वेताः स्निग्धास्तथाऽणवः
कृमिजन्यशिरोरोगैस्तुल्यं तेनात्र लक्षणम् २९
बाधिर्यमान्ध्यमघ्रत्वं घोरांश्च नयनामयान्
शोषाग्निमान्द्यकासांश्च वृद्धाः कुर्वन्ति पीनसाः ३०
अर्बुदं सप्तधा शोथाश्चत्वारोऽशश्चतुर्विधम्
चतुर्विधं रक्तपित्तमुक्तं घ्राणेऽपि तद्विदुः ३१
शिरोगुरुत्वमरुचिर्नासास्त्रावस्तनुः स्वरः
क्षामःष्ठीवति चाभीक्ष्णमामपीनसलक्षणम् ३२
आमालिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति
स्वरवर्णविशुद्धिश्च पक्वपीनसलक्षणम् ३३
सर्वेषु सर्वकालं पीनसरोगेषु जातमात्रेषु
मरिचं गुडेन दध्ना भुञ्जीत नरः सुखं लभते ३४
कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी
एषांचूर्णं कषायं वा दद्यादार्द्रकजैः रसैः ३५
पीनसे स्वरभेदे च तमके च हलीमके

सन्निपाते कफे कासे ज्वरे श्वासे च शस्यते ३६
कलिङ्गहिङ्गुमरिचलाक्षासुरसकट्फलैः
कुष्ठोग्राशिग्रुजन्तुघ्नैरवपीडः प्रशस्यते ३७
व्योषचित्रकतालीसतिन्तिडीकाम्लवेतसम्
सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम् ३८
व्योषादिकमिदं चूर्णं पुराणगुडमिश्रितम्
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ३९
व्याघ्रीदन्तीवचाशिग्रुसुरसाव्योषसिन्धुजैः
सिद्धं तैलं नासि क्षिप्तं पूतिनासागदापहम् ४०
शिग्रुसिंहीनिकुम्भानां बीजैः सव्योषसैन्धवैः
बिल्वपत्ररसैः सिद्धं तैलं स्यात्पूतिनस्यनुत् ४१
घृतगुग्गुलुमिश्रस्य सिक्थकस्य प्रयत्नतः
धूमं क्षवथुरोगघ्नं भ्रंशथुघ्नञ्च निर्दिशेत् ४२
शुराठीकुष्ठकणाबिल्वद्राक्षाकल्ककषायवत्
तैलं पक्वमथाज्यं वा नस्यात्क्षवथुनाशनम् ४३
नस्यं हितं निम्बरसाञ्जनाभ्यां दीप्ते शिरः स्वेदनमल्पशस्तु
नस्ये कृते क्षीरजलावसेकाञ्छ्वसन्ति भुञ्जीत च मुद्गयूषैः ४४
नासास्रावे घ्राणयोश्चूर्णमुक्तं नाड्या देयं येऽवपीडाश्च पथ्याः
तीक्ष्णान्धूमान्देवदार्वग्निकाभ्यां मांसं त्वाजं पथ्यमत्रादिशन्ति ४५
प्रतिश्यायेषु सर्वेषु गृहं वातविवर्जितम्
वस्त्रेण गुरुणा तेन शिरसो वेष्टनं हितम् ४६
विडङ्गं सैन्धवं हिङ्गु गुग्गुलुः समनःशिलः
बचैतच्चूर्णमाघ्रातं प्रतिश्यायं विनाशयेत् ४७
घृततैलसमायुक्तं शक्तुधूमं पिबेन्नरः
सधूमः त्यात्प्रतिश्यायकासहिक्काहरः परः ४८
प्रतिश्याये पिबेद्धूमं सर्वगन्धसमायुतम्
चातुर्जातकचूर्णं वा घ्रेयं वा कृष्णजीरकम् ४९
पुटपक्वं जयापत्रं तैलंसैन्धवसंयुतम्
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ५०
पिप्पल्यः शिग्रुबीजानि विडङ्गमरिचानि च

अवपीडः प्रशस्तोऽय प्रतिश्यायनिवारणे ५१
शिरसोऽभ्यञ्जनैः स्वेदैर्नस्यैर्मन्दोष्णभोजनैः
वमनैर्घृतपानैश्च तान्यथास्वमुपाचरेत् ५२
कृमिघ्ना ये क्रमाः प्रोक्तास्तान्वै कृमिषु योजयेत्
नावनानि कृमिघ्नानि भेषजानि च बुद्धिमान् ५३
रक्तपित्तानि शोथांश्च तथाऽशास्यर्बुदानि च
नासिकायां स्युरेतेषां स्वं स्वं कुर्याच्चिकित्सितम् ५४
गृहधूमकणा दारुक्षारनक्ताह्वसैन्धवैः
सिद्धं शिखरिबीजैश्च तैलं नासाऽशसां हितम् ५५
इति पञ्चषष्टितमो नासारोगाधिकारः समाप्तः ६५

अथ षट्षष्टितमो मुखरोगाधिकारः ६६
ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च
गलो मुखादि सकलं सप्ताङ्गं मुखमुच्यते १
स्युरष्टावोष्ठयोर्दन्तमूले तु दश षट् तथा
दन्तेष्वष्टौ च जिह्वायां पञ्च स्युर्नव तालुनि २
कण्ठे त्वष्टादश प्रोक्तास्त्रयः सर्वेषु च स्मृताः
एवं मुखामयाः सर्वे सप्तषष्टिर्मता बुधैः ३
आनूपपिशितक्षार दधिमाषादिसेवनात्
मुखमध्ये गदान्कुर्युः क्रुद्धा दोषाः कफोत्तराः ४
पृथग्दोषैः समस्तैश्च रक्तजो मांसजस्तथा
मेदोजश्चाभिघातोत्थ एवमष्टौष्ठजा गदाः ५
कर्कशौ परुषौ स्तब्धौ संप्राप्तानिलवेदनौ
दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः ६
चीयते पिडकाभिस्तु सरुजाभिः समन्ततः
सदाहपाकपिडकौ पीताभासौ च पित्ततः ७
सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ
कण्डूमन्तौ कफाच्छ्वेतौ पिच्छिलौ शीतलौ गुरु ८
सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च
सन्निपातेन विज्ञेयावनेकपिडकाऽन्वितौ ९

खर्जूरफलवर्णाभिः पिडकाभिर्निपीडितौ
रक्तोपसृष्टौ रुधिरं स्रवन्तौ शोणितप्रभौ १०
मांसदुष्टौ गुरु स्थूलौ मांसपिराडवदुद्गतौ
जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ११
सर्पिर्मराडप्रतीकाशौ मेदसा कराडुरौ मृदू
स्वच्छस्फटिकसंकाशमास्रावं स्रवतो भृशम् १२
क्षतजाभौ विदीर्येते पीड्येते चाभिघाततः
मथितौ च समाख्यातावोष्ठौ कराडूसमन्वितौ १३
गलदन्तमूलदशनच्छदेषु रोगाः कफास्रभूयिष्ठाः
तस्मादेतेष्वसकृद्रुधिरं विस्रावयेदुष्णम् १४
चतुर्विधेन स्नेहेन मधूच्छिष्टयुतेन च
वातजेऽभ्यञ्जनं कुर्यान्नाडीस्वेदञ्च बुद्धिमान् १५
वेधं शिराणां वमनं विरेकं तिक्तस्य पानं रसभोजनञ्च
शीताः प्रदेहाः परिषेचनञ्च पित्तोपसृष्टेष्वधरेषु कुर्यात् १६
शिरोविरेचनं धूमः स्वेदः कवल एव च
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके
मेदोजे शोधिते स्विन्ने स्वेदिते कवलो हितः
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् १८
दन्तजिह्वामुखानां यच्चूर्णकल्कावलेहकः
शनैर्घर्षणमङ्गुल्या तदुक्तं प्रतिसारणम् १९
ओष्ठरोगेष्वशेषेषु दृष्ट्वा दोषमुपाचरेत्
तेषु व्रणत्वं जातेषु व्रणवत्समुपाचरेत् २०
शीतादो गदितः पूर्वं दन्तपुप्पुटकस्तथा
दन्तवेष्टः सौषिरश्च महासौषिर एव च २१
ततः परिदरः प्रोक्तस्ततस्तूपकुशः स्मृतः
वैदर्भश्च ततः प्रोक्तः खल्लीवर्द्धन एव च २२
अधिमांसकनामा च दन्तनाड्यश्च पञ्च च
दन्तविद्रधिरप्यत्र दन्तवेष्टेषु षोडश २३
शोणितं दन्तवेष्टेभ्यो यस्याकस्मात्प्रवर्त्तते
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च २४

दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम्
शीतादो नाम स व्याधिः कफशोणितसम्भवः २५
दन्तयोस्त्रिषु वाऽप्यत्र श्वयथुर्जायते महान्
दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः २६
स्रवन्ति पूयं रुधिरं चला दन्ता भवन्ति च
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः २७
श्वयथुर्दन्तमूलेषु रुजावान्कफवातजः
लालास्रावी च कण्डूरः स ज्ञेयः सौषिरो गदः २८
दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते
दन्तमांसानि पच्यन्ते मुखञ्च परिपच्यते
यस्मिन्स सर्वजो व्याधिर्महासौषिरसंज्ञकः २९
दन्तमांसानि शीर्यन्ते यस्मिन्ष्ठीवति चाप्यसृक्
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ३०
वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च
आघटिट्ताः प्रस्रवन्ति शोणितं मन्दवेदनम्
आध्मायन्तेऽस्रुते रक्ते मुखं पूति च जायते
यस्मिन्नुपकुशः स स्यात्पित्तरक्तसमुद्भवः ३२
घृष्टेषु दन्तमूलेषु संरम्भो जायते महान्
चलन्ति च रदा यस्मिन्स वैदर्भोऽभिघातजः ३३
मारुतेनाधिको दन्तो जायते तीव्रवेदनः
खल्लीवर्द्धनसंज्ञोऽसौ सञ्जाते रुक्प्रशाम्यति ३४
हानव्ये पश्चिमे दन्ते महाशोथो महारुजः
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ३५
दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ३६
दन्तमांसमलैः सास्रैर्बाह्यान्तः श्वयथुर्महान्
सदाहरुक् स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ३७
शीतादे हृतरक्ते तु तोये नागरसर्षपान्
निष्क्वाथ्य त्रिफलाञ्चापि कुर्याद्गण्डूषधारणम् ३८
कासीसलोध्रकृष्णा मनःशिला प्रियङ्गु तेजोह्वाः
एषां चूर्णं मधुयुक्छीतादे पूतिमांसहरम् ३९

तैलं घृतं वा वातघ्नं शीतादे सम्प्रशस्यते
दन्तपुप्पुटके कार्यं तरुणे रक्तमोक्षणम् ४०
सपञ्चलवणक्षारः सक्षौद्रः प्रतिसारणम्
शिरोविरेकश्च हितो नस्यं स्निग्धञ्च भोजनम् ४१
विस्राविते दन्तवेष्टे व्रणान्तु प्रतिसारयेत्
लोध्रपत्तङ्गमधुक लाक्षाचूर्णैर्मधुप्लुतैः ४२
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः
चलदन्तस्थिरकरं कार्यं बकुलचर्वणम् ४३
भद्रमुस्ताऽभयाव्योषविडङ्गारिष्टपल्लवैः
गोमूत्रपिष्टैर्गुटिकां छायाशुष्कां प्रकल्पयेत् ४४
तां निधाय मुखे स्वप्याच्चलदन्तातुरो नरः
नातः परतरं किञ्चिच्चलदन्तस्य भेषजम् ४५
तुलावृतं नीलसहाचरन्तु द्रोणाम्भसा संश्रपयेद्यथावत्
ततश्चतुर्भागरसे तु तैलं पचेच्छनैरर्द्धपलप्रमाणैः ४६
कल्कैरनन्ताखदिरेरिमेदजम्ब्वाम्रयष्टीमधुकोत्पलानाम्
तत्तैलमाज्यञ्च धृतं मुखेन स्थैर्यं द्विजानां विदधाति सद्यः ४७
सौषिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ४८
क्रियां परिदरे कुर्याच्छीतादोक्तां विचक्षणः
संशोध्योभयतः कार्यं शिरश्चोपकुशे तथा ४९
काष्ठोदुम्बरिकापत्रैर्व्रणं विस्रावयेद्भिषक्
लवणैः क्षौद्रयुक्तैश्च सव्योषैः प्रतिसारयेत् ५०
शास्त्रेणोद्धृत्य वैदर्भे दन्तमूलानि शोधयेत्
ततः क्षीरं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ५१
उद्धृत्याधिकदन्तं तु ततोऽग्निमवचारयेत्
कृमिदन्तकवच्चात्र विधिः कार्या विजानता ५२
छित्वाऽधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत्
वचातेजोवतीपाठास्वर्जिकायावशूकजैः ५३
क्षौद्रद्वितीयाः पिप्पल्यः कवले चात्र कीर्त्तिताः
पटोलनिम्बत्रिफलाकषायश्चात्र धावने ५४

नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत्
यद्दन्तमध्ये जायेत नाडीदन्तं तदुद्धरेत् ५५
छित्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत्
उद्धृत्य च दहेच्चापि क्षारेण ज्वलनेन वा ५६
भिनत्त्युपेक्षिते दन्ते हनुमस्थिगतिर्ध्रुवम्
समूलं दशनं तस्मादुद्धरेद्भग्नमस्थि च  ५७
उद्धृते तूत्तरे दन्ते शोणितं प्रस्रवेदति
रक्ताभिषेकात्पूर्वोक्ता घोरा रोगा भवन्ति हि ५८
काणः सञ्जायते जन्तुरर्दितं तस्य जायते
चलमप्युत्तरं दन्तमतो नैवोद्धरेद्भिषक्
धावनं जातिमदनस्वादुकण्टकखादिरैः ५९
कषायैर्जातिमदनकण्टकीस्वादुकण्टकैः ६०
मञ्जिष्ठालोध्रखदिरयष्ट्याह्वैश्चापि यत्कृतम्
तैलं यत्साधितं तत्तु हन्याद् दन्तगतां गतिम् ६१
विद्रध्युक्तं विधिं युक्तं विदध्याद् दन्तविद्रधौ
शस्त्रकर्म नरस्तत्र कुशलो नैव कारयेत् ६२
दालनः कथितः पूर्वं कृमिदन्तक एव च
प्रोक्तो भञ्जनको दन्तहर्षो वै दन्तशर्करा ६३
कपालिकाऽत्र कथिता श्यावदन्तक एव च
करालसंज्ञ इत्यष्टौ दन्तरोगाः प्रकीर्त्तिताः ६४
दीर्यमाणेष्विव रुजा यत्र दन्तेषु जायते
दालनो नाम स व्याधिः सदागतिनिमित्तजः ६५
कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो  महारुजः
अनिमित्तरुजो वातात्स ज्ञेयः कृमिदन्तकः ६६
वक्त्रं वक्रं भवेद्यत्र दन्तभङ्गश्च जायते
कफवातकृतो व्याधिः स भञ्जनकसंज्ञकः ६७
शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः
तत्र स्युर्वातपित्ताभ्यां दन्तहर्षः स कीर्त्तितः ६८
मलो दन्तगतो यस्तु कफश्चानिलशोषितः
शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ६९

कपालेष्विव दीर्यत्सु दन्तेषु समलेषु च
कपालिकेति विज्ञेया दन्तच्छिद् दन्तशर्करा ७०
योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः
श्यावतां नीलतां वापि गतः स श्यावदन्तकः ७१
शनैः शनैः प्रकुरुते यत्र दन्ताश्रितोऽनिलः
करालान्विकटान्दन्तान्स करालो न सिद्ध्यति ७२
अथ दन्तरोगचिकित्सा
तैलं लाक्षारसं क्षारं पृथक्प्रस्थमितं पचेत्
द्रव्यैः पलमितैरेतैः क्वाथैश्चापि चतुर्गुणैः ७३
लोध्रकट्फल मञ्जिष्ठापद्मकेशरपद्मकैः
चन्दनोत्पलयष्ट्याह्वैस्तत्तैलं वदने धृतम् ७४
दालनं दन्तचालं च दन्तमोक्षं कपालिकाम्
शीतादं पूतिवक्त्रञ्च विरुचिं विरसास्यताम् ७५
हन्यादाशु गदानेतान्कुर्याद् दन्तानपि स्थिरान्
लाक्षादिकमिदं तैलं दन्तरोगेषु पूजितम् ७६
जयेद्विस्त्रावणैः स्विन्नमचलं कृमिदन्तकम्
तथाऽवपीडवातघ्नः स्नेहगण्डूषधारणैः ७७
भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः
कृमिदन्तापहं कोष्णं हिङ्गु दन्तान्तरे स्थितम् ७८
बृहतीभूमिकदम्बपञ्चाङ्गुलकण्टकारिकाक्वाथः
गण्डूषस्तैलयुतः कृमिदन्तकवेदनाशमनः ७९
नीलीवायसजङ्घाकटुतुम्बीमूलमेकैकम्
सञ्चूर्ण्य दशनविधृतं दशनकृमिनाशनं प्राहुः ८०
स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य च
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ८१
स्नैहिकोऽत्र हितो धूमो नस्यं स्नैहिकमेव च
पेया रसा यवाग्वश्च क्षीरसन्तानिकाघृतम्
शिरोवस्तिहितश्चापि क्रमो यश्चानिलापहः ८२
अच्छिन्दन्दन्तमूलानि शर्करामुद्धरेद्भिषक्
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत्

दन्तहर्षक्रियां चात्र कुर्यान्निरवशेषतः
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया मता ८४
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम्
तथाऽतिकठिनं भक्ष्यं दन्तरोगी न भक्षयेत् ८५
वातजः पित्तजश्चापि कफजोऽलाससंज्ञकः
उपजिह्विका च गदा जिह्वायां पञ्च कीर्त्तिताः ८६
जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा ८७
पित्तात्सदाहैरुपचीयते च दीर्घैः सरक्तैरपि कराटकैश्च ८८
कफेन गुर्वी बहुला चिता च मांसोच्छ्रयैः शाल्मलिकराटकाभैः ८९
जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः
जिह्वां स तु स्तम्भयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम् ९०
जिह्वाऽग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तयोनिः
प्रसेककराडूपरिदाहयुक्तः प्रकथ्यतेऽसावुपजिह्विकेति ९१
जिह्वागतविकाराणां शस्तं शोणितमोक्षणम्
गुडूचीपिप्पलीनिम्बकवलः कटुभिः सुखः ९२
ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक्चिकित्सितम्
कराटकेष्वनिलोत्थेषु तत्कार्यं भिषजा खलु ९२
पित्तजे परिघृष्टे तु निःसृते दुष्टशोणिते
प्रतिसारणगराडूषनस्यञ्च मधुरं हितम् ९३
कराटकेषु कफोत्थेषु लिखितेष्वसृजः क्षये
पिप्पल्यादिर्मधुयुतः कार्यस्तु प्रतिसारणे ९४
उपजिह्वां तु संलिख्य क्षारेण प्रतिसारयेत्
शिरोविरेकगराडूषधूमैश्चैनामुपाचरेत् ९५
व्योषक्षाराभयावह्नि चूर्णमेतत्प्रघर्षणम्
उपजिह्वाप्रशान्त्यर्थमेभिस्तैलञ्च पाचयेत् ९६
गलशुराठी तुरिडकेर्यध्रूषः कच्छप एव च
ताल्वर्बुदश्च कथितो मांससङ्घात एव च ९७
तालुपुप्पुटनामा च तालुशोषस्तथैव च
तालुपाकश्च कथितास्तालुरोगा अमी नव ९८
श्लेष्मासृग्भ्यांतालुमूलात्प्रवृद्धो दीर्घः शोथो ध्मातवस्तिप्रकाशः

तृष्णाकासश्वासकृत्तं वदन्ति व्याधिं वैद्याः कराठशुराडीति नाम्ना ९९
शोथः स्थूलस्तोददाहप्रपाकी श्लेष्मासृग्भ्यां कीर्त्तिता तुरिडकेरी १००
शोथः स्तब्धो लोहितः शोणितोत्थो ज्ञेयोऽध्रूषः सज्वरस्तीव्ररुक्च १०१
कूर्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा रोगो ज्ञेयः कच्छपः श्लेष्मणः स्यात् १०२
पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्तादर्बुदं पित्तलिङ्गम् १०३
दुष्टं मांसश्लेष्मणा नीरुजञ्च ताल्वन्तःस्थं मांससंघातमाहुः १०४
नीरुक्स्थायी कोलमात्रः कफात्स्यान्मेदोयुक्तात् पुप्पुटस्तालुदेशे १०५
शोषोऽत्यर्थं दीर्यते वाऽपि तालु श्वासश्चोग्रस्तालुशोषोऽनिलाच्च १०६
पित्तं कुर्यात्पाकमत्यर्थघोरं तालुन्येवं तालुपाकं वदन्ति १०७
कुष्ठोषणवचासिन्धुकणापाठाप्लवैः सह
सत्तौद्रैर्भिषजा कार्यं गलशुराडीप्रघर्षणम् १०८
अङ्गुष्ठाङ्गुलिसन्दंशेनाकृष्य गलशुरिडकाम्
छेदयेन्मराडलाग्रेण जिह्वोपरि तु संस्थिताम् १०९
अत्यादानात्स्रवेद्रक्तं ततः स म्रियते नरः
हीनच्छेदाद्भवेच्छोथो लालास्रावो भ्रमस्तथा
तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः
गलशुराडीं तु संच्छिद्य कुर्यात्प्राप्तमिमं क्रमम्
पिप्पल्यतिविषाकुष्ठवचामरिचनागरैः
त्तौद्रयुक्तैः सलवरौस्ततस्तां प्रतिसारयेत्
वचामतिविषापाठारास्नाकटुकरोहिणीः
निक्वाथ्य पिचुमर्दञ्च कवलं तत्र कारयेत्
तुरिडकेर्यध्रुषे कूर्मे सङ्घाते तालुपुप्पुटे
एष एव विधिः कार्यो विशेषः शस्त्रकर्मणि ११०
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम्
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः १११
रोहिणी पञ्चधा प्रोक्ता कराठशालूक एव च
अधिजिह्वश्च वलयो बलासश्चैकवृन्दकः ११२
ततो वृन्दः शतघ्नी च गिलायुः कराठविद्रधिः
गलौघश्च स्वरघ्नश्च मांसतानस्तथैव च ११३
विदारी कराठदेशे तु रोगा अष्टादश स्मृताः ११४

गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदूष्य मांसञ्च तथैव शोणितम्
गलोपसंरोधकरैस्तथाङ्कुरैर्निहन्त्यसून्व्याधिरयं च रोहिणी ११५
जिह्वासमन्ताद् भृशवेदनास्तु मांसाङ्कुराः कण्ठनिरोधनाः स्युः
सा रोहिणी वातकृता प्रदिष्टा वातात्मकोपद्रवगाढजुष्टा ११६
क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्तजाता ११७
स्रोतोनिरोधिन्यपि मन्दपाका गुर्वी स्थिरा सा कफसम्भवा तु ११८
गम्भीरपाकिन्यनिवार्यवीर्या त्रिदोषलिङ्गा त्रिभवा भवेत्सा ११९
स्फोटैश्चिता पित्तसमानलिङ्गा साध्या प्रदिष्टा रुधिरात्मिका तु १२०
सद्यस्त्रिदोषजा हन्ति त्र्यहात्कफसमुद्भवा
पञ्चाहात्पित्तसम्भूता सप्ताहात्पवनोत्थिता १२१
कोलास्थिगात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः
खरः स्थिरः शस्त्रनिपातसाध्यस्तत्कण्ठशालूकमिति ब्रुवन्ति १२२
जिह्वाऽग्ररूपः श्वयथुः कफात्तु जिह्वोपरिष्टादसृजैव मिश्रात्
ज्ञेयोऽधिजिह्वः खलु रोग एव विवर्जयेदागतपाकमेनम् १२३
बलास एवागतमुन्नतञ्च शोथं करोत्यन्नगतिं निवार्य
तं सर्वथैवाप्रतिवार्यमेव विवर्जनीयं वलयं वदन्ति १२४
गले तु शोथं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम्
मर्मच्छिदं दुस्तरमेनमाहुर्बलाससंज्ञं भिषजो विकारम् १२५
वृत्तोन्नतोऽन्त श्वयथुः सदाहः सकण्डुरोऽपाक्यमृदुर्गुरुश्च
नाम्नैकवृन्दः परिकीर्त्तितोऽसौ व्याधिर्बलासक्षतजप्रसूतः १२६
समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति
तं चापि पित्तक्षतजप्रकोपाद्विद्यात्सतोदं पवनात्मकं तु १२७
वर्त्तिर्घना कण्ठनिरोधिनी तु चिताऽतिमात्रं पिशितप्ररोहैः
अनेकरुक्प्राणहरी त्रिदोषाज्ज्ञेया शतघ्नीसदृशी शतघ्नी १२८
ग्रन्थिर्गले त्वामलकास्थिमात्रः स्थिरोऽल्परुक्स्यात्कफरक्तमूर्त्तिः
संलक्ष्यते सक्तमिवाशितञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञः १२९
सर्वं गलं व्याप्य समुत्थितो यः शोथो रुजः सन्ति च यत्र सर्वाः
स सर्वदोषैर्गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्वजस्य १३०
शोथो महान्यस्तु गलावरोधी तीव्रज्वरो वायुगतेर्निहन्ता
कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्तितोऽसौ १३१

यस्ताम्यमानः श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकराठः
कफोपदुष्टेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात्स्वरघ्नः १३२
प्रतानवान्यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण
स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्वकृतो विकारः १३३
सदाहतोदं श्वयथुं सताम्रमन्तर्गले पूतिविशीर्णमांसम्
पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात्स तु येन शेते १३४
रोहिणीनान्तु साध्यानां हितं शोणितमोचनम्
वमनं धूमपानञ्च गराडूषो नस्यकर्म च
वातजान्तु हृते रक्ते लवणैः प्रतिसारयेत्
सुखोष्णान्स्नेहगराडूषान्धारयेच्चाप्यभीक्ष्णशः
विस्राव्य पित्तसम्भूतां सिताक्षौद्रप्रियङ्गुभिः
घर्षयेत्कवलो द्राक्षापरुषैः क्वथितो हितः
आगारधूमकटुकैः कफजां प्रतिसारयेत् १३५
श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम्
नस्यकर्मणि दातव्यं कवलञ्च कफोच्छ्रये १३६
पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम्
विस्राव्य कराठशालूकं साधयेत्तुरिडकेरिवत् १३७
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः
उपजिह्वकवच्चापि साधयेदधिजिह्वकम् १३८
एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत्
एकवृन्दमिव प्रायो वृन्दञ्च समुपाचरेत् १३९
गिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत्
अमर्मस्थं सुसम्पक्वं छेदयेद्गलविद्रधिम् १४०
कराठरोगेष्वसृङ्मोक्षैस्तीक्ष्णैर्नस्यादिकर्मभिः
चिकित्सकश्चिकित्सान्तु कुशलोऽत्र समाचरेत् १४१
क्वाथं दद्याच्च दार्वीत्वङ्निम्बताक्ष्र्यकलिङ्गजम्
हरीतकीकषायो वा हितो माक्षिकसंयुतः १४२
कटुकाऽतिविषादारुपाठामुस्तकलिङ्गकाः
गोमूत्रक्वथिताः पीता कराठरोगविनाशनाः १४३
मृद्वीका कटुका व्योषं दार्वीत्वक् त्रिफला घनम्

पाठा रसाञ्जनं दूर्वा तेजोह्वेति सुचूर्णितम् १४४
क्षौद्रयुक्तं विधातव्यं गलरोगे महौषधम्
योगाश्चैते त्रयः प्रोक्ता वातपित्तकफापहाः १४५
यवाग्रजं तेजवतीञ्च पाठां रसाञ्जनं दारुनिशां सकृष्णाम्
क्षौद्रेण कुर्याद् गुटिकां मुखेन तां धारयेत्सर्वगलामयेषु १४६
पृथगदोषैस्त्रयो रोगाः समस्तमुखजाः स्मृताः १४७
स्फोटैः सतोदैर्वदनं समन्ताद्यत्राचितं सर्वसरः स वातात् १४८
रक्तैः सदाहैः पिडकैः सपीतैर्यत्राचितं चापि स पित्तकोपात् १४९
अवेदनैः कण्डुयुतैः सवर्णैर्यत्राचितं चापि स वै कफेन १५०
ओष्ठप्रकोपे वर्ज्यास्तु मांसरक्तत्रिदोषजाः
दन्तवेष्टेषु वर्ज्यौ तु त्रिलिङ्गगति सौषिरौ १५१
दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः
जिह्वारोगेष्वलासस्तु तालुजेष्वर्बुदं तथा
स्वरघ्नो वलयो बृन्दो बलासः स हि दारुणः च विदारिका
गलौघो मांसतानश्च शतघ्नी रोहिणी गले
असाध्याः कीर्त्तिता ह्येते रोगा दश नवोत्तराः
तेषु वाऽपि क्रियां वैद्यः प्रत्याख्याय समाचरेत् १५२
वातात्सर्वसरं चूर्णैर्लवणैः प्रतिसारयेत्
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः १५३
पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः
सर्वः पित्तहरः कार्यो विधिर्मधुरशीतलः १५४
प्रतिसारणगण्डूषधूमसंशोधनानि च
कफात्मके सर्वसरे क्रमं कुर्यात्कफापहम् १५५
मुखपाके शिरावेधः शिरसश्च विरेचनम्
मधुमूत्रघृतक्षीरैः शीतैश्च कवलग्रहः १५६
जातीपत्रामृताद्राक्षायासदार्वीफलत्रिकैः
क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् १५७
कार्यञ्च बहुधा नित्यं जातीपत्रस्य चर्वणम्
कृष्णजीरककुष्ठेन्द्रयवचर्वणतस्त्र्यहात् १५८
मुखपाकव्रणक्लेद दौर्गन्ध्यमुपशाम्यति

पटोलनिम्बजम्ब्वाम्र मालतीनवपल्लवैः १५६
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने
पञ्चवल्कलजः क्वाथस्त्रिफलासम्भवोऽथ वा १६०
मुखपाके प्रयोक्तव्यः सक्षौद्रो मुखधावने
स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया
सक्षौद्रामुखरोगा सृग्दोषनाडीव्रणापहा १६१
सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत्पाकहरं मुखस्य १६२
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च
क्षौद्राढ्या दग्धवक्त्रस्य गण्डूषो मुखपाकनुत् १६३
आस्वादिता सकृदपि मुखगन्धं सकलमपनयति
त्वग्बीजपूरफलजा पवनमपाच्यं वारयति १६४
हरिद्रा निम्बपत्राणि मधुकं नीलमुत्पलम्
तैलमेभिर्विपक्तव्यं मुखपाकहरं परम् १६५
यष्टीमधु पलमेकं त्रिंशन्नीलोत्पलस्य तैलस्य
प्रस्थं तद् द्विगुणपयोविधिनापक्वं तु नस्येन १६६
निशि वदनस्य स्रावं क्षपयति गात्रस्य दोषसंघातम्
कचघर्षत्वमवश्यं क्रमतोऽभ्यङ्गेन जन्तूनाम् १६७
इति षट्षष्टितमो मुख रोगाधिकारः समाप्तः ६६

अथ सप्तषष्टितमो विषाधिकारः ६७

स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते
दशाधिष्ठानमाद्यं तु द्वितीयं षोडशाश्रयम् १
मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सारमेव च
निर्यासो धातवः कन्दः स्थावरस्याश्रया दश २
दृष्टिनिश्वासदंष्ट्राश्च नखमूलमलानि च
शुक्रं लालाऽऽत्तवस्पर्शसंदंशाश्चावमर्दितम्
गुदास्थिपित्तशूकानि दश षड् जङ्गमाश्रयाः ३
अथ स्थावरविषाणां सामान्यकार्याणि
उद्वेष्टनं मूलविषैर्मोहः प्रलपनं तथा ४

जृम्भणं वेपनं श्वासो नृणां पत्रविषैर्भवेत् ५
मुष्कशोथः फलविषैर्दाहो द्वेषश्च भोजने ६
भवेत्पुष्पविषैश्छर्दिराध्मानं मूर्च्छनं तथा ७
त्वक्सारनिर्यासविषैरुपभुक्तैर्भवन्ति हि
आस्यदौर्गन्ध्य पारुष्यशिरोरुक्कफसंस्रवाः ८
फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता ९
हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् १०
कन्दजान्युग्रवीर्याणि यान्युक्तानि त्रयोदश
सर्वाण्येतानि कुशलैर्ज्ञेयानि दशभिर्गुणैः ११
स्थावरं जङ्गमं वाऽपि कृत्रिमं चापि यद्विषम्
सद्यो निहन्ति तत्सर्वं गुणैश्च दशभिर्युतम् १२
रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च
विकाशि विशदञ्चैव लघुपाकि च ते दश १३
तद्रौक्ष्यात्कोपयेद्वायुमौष्ण्यात् पित्तं सशोणितम्
तैक्ष्ण्यान्मतिं मोहयति मर्मबन्धाञ्छिनत्ति हि
शरीरावयवान्सौक्ष्म्यात्प्रविशेद्विकरोति च
आशुत्वादाशु तत्प्रोक्तं व्यवायात्प्रकृतिं हरेत् १४
विकाशित्वात्क्षपयति दोषान्धातून्मलानपि
अतिरिच्यते वैशद्याद् दुश्चिकित्स्यं च लाघवात्
दुर्जरं चाविपाकित्वात्तस्मात्क्लेशयते चिरम् १५
सद्यः क्षतं पच्यते यस्य जन्तोः स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम्
कृष्णीभूतं क्लिन्नमत्यर्थपूति क्षतान्मांसं शीर्यते यस्य वाऽपि १६
तृष्णातापौ दाहमूर्च्छे च यस्य दिग्धं विद्धं तं मनुष्यं व्यवस्येत्
लिङ्गान्येतान्येव कुर्यादमित्रैर्दत्तः क्ष्वेडो वा व्रणे यस्य चापि १७
इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः
जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान् १८
न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च
अपार्थं बहु सङ्कीर्णं भाषते चापि मूढवत् १९
अङ्गुलद्यः स्फोटयेदुर्वीं विलिखेत्प्रहसेदपि

वेपथुश्चास्य भवति त्रस्तश्चैककमीक्षते २०
विवर्णवक्त्रो ध्यामश्च नखैः किञ्चिच्छिनत्ति च
आलभेतासकृद्दीनः करेण च शिरोरुहान्
निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः
वर्त्तते विपरीतं च विषदाता विचेतनः २२
निद्रां तन्द्रां क्लमं दाहं सम्पाकं लोमहर्षणम्
शोथं चैवातिसारं च कुरुते जङ्गमं विषम् २३
वातपित्तकफात्मानो भोगिमण्डलिराजिलाः
यथाक्रमं समाख्याता द्व्यन्तराद्वन्द्वरूपिणः २४
फणिनो भोगिनो ज्ञेयाः संख्यातास्तेऽत्र विंशतिः
मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः २५
षट् ते मण्डलिनो ज्ञेया ज्वलनार्कविषाः स्मृताः २६
स्निग्धा विविधवर्णाभिस्तिर्यगूर्ध्वञ्च राजिभिः
विचित्रा इव ये भान्ति राजिलास्ते हि तेऽपि षट् २७
दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत्
पीतो मण्डलिनः शोथो मृदुः पित्तविकारवान् २८
राजिलोत्थो भवेद्दंशः स्थिरशोथश्च पिच्छिलः
पाण्डुः स्निग्धोऽतिसान्द्रासृक्सर्वश्लेष्मविकारवान् २९
अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु
याम्ये च पित्र्ये परिवर्जनीयाः ऋक्षे नरा मर्मसु ये च दष्टाः ३०
दर्वीकराणां विषमाशु हन्ति मेघानिलोष्णे द्विगुणीभवन्ति ३१
रथाङ्गलाङ्गलच्छत्रस्वस्ति काङ्कुशधारिणः
ज्ञेया दर्वीकराः सर्पाः फणिनः शीघ्रगामिनः ३२
अजीर्णपित्तातपपीडितेषु बालेषु वृद्धेषु बुभुक्षितेषु
क्षीणे क्षते मेहिनि कुष्ठजुष्टे रूक्षेऽबले गर्भवतीषु चापि ३३
शस्त्रक्षते यस्य न रक्तमस्ति राज्यो लताभिश्च न सम्भवन्ति
शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम्
जिह्मं मुखं यस्य च केशशातो नासाऽवसादश्च सकण्ठभङ्गः
कृष्णश्च रक्तः श्वयथुश्च दंशे हन्वोः स्थिरत्वञ्च विवर्जनीयः ३४
वान्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्ध्वमधश्च यस्य

दंष्ट्रानिपातांश्चतुरश्च पश्येद्यस्यापि वैद्यैः परिवर्जनीयः ३५
उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाऽप्यथवा विवर्णम्
सारिष्टमत्यर्थमवेगिनञ्च जह्यान्नरं तत्र न कर्म कुर्यात् ३६
जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा
स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति ३७
वीर्याल्पभावान्न निपातयेत्तत्कफान्वितं वर्षगणानुबन्धि
तेनार्दितो भिन्नपुरीषवर्णो विगन्धिवैरस्ययुतः पिपासी
मूर्च्छां भ्रमं गद्गदवाग्वमिञ्च विचेष्टमानोऽरतिमाप्नुयाद्वा ३८
आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी
भवेत्समुद्धस्तशिरोऽङ्गरुट्को विलूनपक्षश्च यथा विहङ्गः ३९
स्थितं रसादिष्वथ तद्यथोक्तान्करोति धातुप्रभवान्विकारान् ४०
कोपं पु शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तस्य रूपम् ४१
निद्रा गुरुत्वञ्च विजृम्भवञ्च विश्लेषहर्षावथवाऽङ्गमर्दः ४२
ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठजन्म
मासक्षयं पाणिपदे प्रशोथं मूर्च्छां तथा छर्दिमथातिसारम्
दूषीविषं श्वासतृषाज्वरांश्च कुर्यात्प्रवृद्धिं जठरस्य चापि ४३
उन्मादमन्यज्जनयेत्तथाऽन्यदानाहमन्यत्क्षपयेच्च शुक्रम्
गाद्‌गद्यमन्मञ्जनयेच्च कुष्ठं तांस्तान्विकारांश्च बहुप्रकारान् ४४
दूषितं देश कालान्नदिवास्वप्नैरभीक्ष्णशः
यस्मात्सन्दूषयेद्धातूंस्तस्माद् दूषीविषं स्मृतम् ४५
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम्
दूषीविषमसाध्यं स्यात्क्षीणस्याहितसेविनः ४६
सौभाग्यार्थं स्त्रियः स्वेदं रजो नानाऽङ्गजान्मलान्
शत्रुप्रयुक्तांश्च गरान्प्रयच्छन्त्यन्नमिश्रितान् ४७
तैः स्यात्पाण्डुः कृशोऽल्पाग्निर्गरैश्चास्योपजायते
मर्मप्रधमनाध्मानं हस्तयोः शोथसम्भवः ४८
जठरं ग्रहणीदोषो यक्ष्मगुल्मक्षयज्वराः
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ४९
यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः
तेभ्यो जातास्तथा लूता इति ख्यातास्तु षोडश ५०

विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम्
वसिष्ठं कोपयामास गत्वाऽश्रमपदं किल ५१
कुपितस्य मुनेस्तस्य ललाटात्स्वेदबिन्दवः
अपतन्दर्शनादेव ह्यधस्तात्तीव्रवर्चसः ५२
लूने तृणे महर्षेस्तु धेन्वर्थे सम्भृतेऽपि च
ततो जातास्त्विमे घोरा नानारूपा महाविषाः
तासामष्टौ कष्टसाध्या वर्ज्यास्तावत्य एव हि ५४
ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ५५
पिडका विविधाकारा मराडलानि महान्ति च
शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा
सामान्यं सर्वलूतानामेतद् दंशस्य लक्षणम् ५६
दंशमध्ये तु यत्कृष्णं श्यावं वा जालकावृतम्
दग्धाकृति भृशं पाकक्लेदशोथज्वरान्वितम्
दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्दिशेत् ५७
शोथः श्वेताः सिता रक्ताः पीता वा पिडका ज्वरः
प्राणान्तकाश्च जायन्ते दाहहिक्काशिरोग्रहाः ५८
आदंशाच्छोणितं पाराडु मराडलानि ज्वरोऽरुचिः
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते ५९
मूर्च्छाऽङ्गशोथवैवर्ण्यं क्लेदो मन्दश्रुतिर्ज्वरः
शिरोगुरुत्वं लालाऽसृक्छर्दिश्चासाध्यमूषकात् ६०
शोथस्य कार्ष्ण्यमथवा नानावर्णत्वमेव च
मोहोऽथ वर्चसो भेदो दष्टस्य कृकलासकैः ६१
दहत्यग्निरिवादौ तु भिनत्तीवोद्ध्र्वमाशु च
वृश्चिकस्य विषं याति पश्चाद् दंशेऽवतिष्ठते ६२
दष्टोऽसाध्यैस्तु हृद्घ्राणरसनोपहतो नरः
मांसैः पतद्भिरत्यर्थं वेदनाऽऽर्त्तो जहात्यसून् ६३
विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्यते ६४
कृष्णलोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्त्तिमान्

दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ६५
एकदंष्ट्राऽदितः शूनःसरुजः पीतकः सतृट्
सनिद्रश्छर्दिमान्दष्टो मण्डूकैः सविषैर्भवेत् ६६
मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा ६७
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः ६८
विदाहश्वयथुं तोदं प्रस्वेदं गृहगोधिकाः ६९
दंशे स्वेदं रुजं दाहं कुर्याच्छतपदीविषम् ७०
कण्डूमान्मशकैरीषच्छोथः स्यान्मन्दवेदनः ७१
असाध्यकीटसदृशमसाध्यं मशकक्षतम् ७२
सद्यः संस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता
पिडका मक्षिकादंशे तासान्तु स्थगिकाऽसुहृत् ७३
चतुष्पाद्भिर्द्विपाद्भिर्वा नखैर्दन्तैश्च यत्कृतम्
शूयते पच्यते तत्तु स्रवति ज्वरयत्यपि ७४
प्रसन्नदोषं प्रकृतिस्थधातुमन्नाभिकामं सममूत्रविट्कम्
प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम् ७५
स्थावरेण विषेणार्त्तं नरं यत्नेन वामयेत्
वमनेन समं नास्ति यतस्तस्य चिकित्सितम्
विषमत्यर्थमुष्णञ्च तीक्ष्णं च कथितं यतः
अतः सर्वविषेषूक्तः परिषेकस्तु शीतलः
औष्ण्यात्तैक्ष्ण्याद्विशेषेण विषं पित्तं प्रकोपयेत्
वमितं सेचयेत्तस्माच्छीतलेन जलेन च
पाययेन्मधुसर्पिर्भ्यां विषघ्नं भेषजं द्रुतम्
भोक्तुमम्लं रसं दद्याद्घर्षयेन्मरिचानि च ७६
यस्य यस्य च दोषस्य पश्येल्लिङ्गानि भूरिशः
तस्य तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम् ७७
शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः
भोजनार्थं विषार्त्तानामूर्ध्वञ्चाधश्च शोधनम् ७८
मूलत्वक्पत्रपुष्पाणि बीजं चेति शिरीषतः
गवां मूत्रेण सम्पिष्टंलेपाद्विषहरं परम् ७९
दूषीविषार्त्तं सुस्निग्धमूर्ध्वञ्चाधश्च शोधनम्

पाययेदगदं मुख्यमिदं दूषीविषापहम् ८०
पिप्पली ध्यामकं मांसी लोध्रमेला सुवर्चिका
मरिचं बालकञ्चैला तथा कनकगैरिकम्
क्षौद्रयुक्तः कषायोऽय दूषीविषमपोहति ८१
अभयां रोचनां कुष्ठमर्कपत्रं तथोत्पलम्
नलवेतसमूलानि गरलं सुरसां तथा ८२
सकलिङ्गां समञ्जिष्ठामनन्ताञ्च शतावरीम्
शृङ्गाटकं समङ्गां च पद्मकेशरमित्यपि ८३
कल्कीकृत्य पचेत्सर्पिः पयो दद्याच्चतुर्गुणम्
सम्यक्पक्वेऽवतीर्णे च शीते तस्मिन्विनिक्षिपेत् ८४
सर्पिस्तुल्यं भिषक्क्षौद्रं कृतरक्षं निधापयेत्
विषाणि हन्ति दुर्गाणि गरदोषकृतानि च ८५
स्पर्शाद्धन्ति विषं सर्वं गरैरुपहतां त्वचम्
योगजं तमकं कराडूं मांसपादं विसंज्ञताम् ८६
नाशयत्यञ्जनाभ्यङ्गपानबस्तिषु योजितम्
सर्पकीटाखुलूताऽदिदष्टानां विषहृत्परम् ८७
धत्तरूस्य शिफा पेया क्षीरेण परिपेषिता
अङ्कोटवंशजा चापि श्वविषघ्नी प्रयत्नतः ८८
रजनीयुग्मपत्तङ्ग मञ्जिष्ठानागकेशरैः
शीताम्बुपिष्टैरालेपः सद्यो लूतां विनाशयेत् ८९
जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः
सुखोष्णो मधुना लेपो वृश्चिकस्य विषं हरेत् ९०
गन्धमाघ्राय मृदितं सूर्यावर्त्तदलस्य तु
वृश्चिकेन नरो विद्धः क्षणाद्भवति निर्विषः ९१

इति सप्तषष्टितमो विषाधिकारः समाप्तः ६७

अथ स्त्रीरोगाणामधिकाराः ६८

विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च
यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च १
तं श्लेष्मपित्तानिलसन्निपातैश्चतुष्प्रकारं प्रदरं वदन्ति २

असृग्दरं भवेत्सर्वं साङ्गमर्दं सवेदनम् ३
आमं सपिच्छाप्रतिमं सपाण्डुं पुलाकतोयप्रतिमं कफात्तु ४
सपीतनीलासितरक्तमुष्णं पित्तार्त्तियुक्तं भृशवेगि पित्तात् ५
रूक्षारुणं फेनिलमल्पमल्पं वातात्सतोदं पिशितोदकाभम् ६
सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषम्
तच्चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक्चिकित्साम् ७
तस्यातिवृत्तौ दौर्बल्यं श्रमो मूर्च्छा मदस्तृषा
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ८
शश्वत्स्त्रवन्तीमास्रावं तृष्णादाहज्वरान्विताम्
दुर्बलां क्षीणरक्ताञ्च तामसाध्यां विवर्जयेत् ९
मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुबन्धि च
नैवातिबहु नात्यल्पमार्त्तवं शुद्धमादिशेत् १०
दध्ना सौवर्चलं जाजी मधुकं नीलमुत्पलम्
पिबेत्क्षौद्रयुतं नारी वातासृग्दरशान्तये ११
मधुकं कर्षमेकं तु कर्षकाञ्च सितां तथा
तण्डुलोदकसम्पिष्टां लोहित प्रदरे पिबेत्
बलां कङ्कतिकाऽख्या या तस्या मूलं सुचूर्णितम्
लोहितप्रदरे खादेच्छर्करामधुसंयुतम्
शुचिस्थाने व्याघ्रनख्या मूलमुत्तरदिग्भवम्
नीतमुत्तरफल्गुन्यां कटिबद्धं हरेदसृक् १२
रसाञ्जनं तण्डलकस्य मूलं क्षौद्रान्वितं तण्डुलतोयपीतम्
असृग्दरं सर्वभवं निहन्ति श्वासञ्च भार्गी सह नागरेण १३
अशोकवल्कलक्वाथशृतं दुग्धं सुशीतलम्
यथाबलं पिबेत्प्रातस्तीव्रासृग्दरनाशनम् १४
कुशमूलं समुद्धृत्य पेषयेत्तडुलाम्बुना
एतत्पीत्वा त्र्यहं नारी प्रदरात्परिमुच्यते १५
क्षौद्रयुक्तं फलरसमौदुम्बरभवं पिबेत्
असृग्दरविनाशाय सशर्करपयोऽन्नभुक् १६
अलाबुफलचूर्णस्य शर्करासहितस्य च
मधुना मोदकं कृत्वा खादेत्प्रदरशान्तये १७

दार्वीरसाञ्जनकिरातवृषाब्दबिल्वसक्षौद्रचन्दनदिनेशभवप्रसूनैः
क्वाथः कृतो मधुयुतो विधिना निपीतो रक्तं सितञ्च सरुजं प्रदरं निहन्ति
रक्तपित्ताधिकारोक्तं हितं कूष्माण्डखण्डकम् १८
इत्यष्टषष्टितमः प्रदराधिकारः समाप्तः ६८

अथैकोनसप्ततितमः सोमरोगाधिकारः ६९

स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि
आभिचारिकयोगाद्वा गरयोगात्तथैव च १
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च
तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि २
प्रसन्ना विमलाः शीता निर्गन्धा नीरुजाः सिताः
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्बला ३
वेगं धारयितुं तासां न विन्दति सुखं क्वचित्
शिरः शिथिलता तस्य मुखं तालु च शुष्यति ४
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते सदा ५
सन्धारणाच्छरीरस्य ता आपः सोमसंज्ञिताः
ततः सोमक्षयात्स्त्रीणां सोमरोग इति स्मृताः ६
कदलीनां फलं पक्वं धात्रीफलरसं मधु
शर्करासहितं खादेत् सोमधारणमुत्तमम् ७
माषचूर्णं समधुकं विदारीं मधुशर्कराम्
पयसा पाययेत्प्रातः सोमधारणमुत्तमम् ८
स एव सरुजः सोमः स्रवेन्मूत्रेण चेन्मुहुः
तत्रैलापत्रचूर्णेन पाययेद्वारुणीं सुराम् ९
जलेनामलकी बीजकल्कं समधुशर्करम्
पिबेद्दिनत्रयेणैव श्वेतप्रदरनाशनम् १०
तक्रौदनाहाररता सम्पिबेन्नागकेशरम्
त्र्यहं तक्रेण सम्पिष्टं श्वेतप्रदरशान्तये ११
सोमरोगे चिरं जाते यदा मूत्रमतिस्रवेत्
मूत्रातिसारं तं प्राहुर्बलविध्वंसनं परम् १२

इत्यैकोनसप्ततितमः सोमरोगाधिकारः समाप्तः ६९

अथ सप्ततितमो योनिरोगाधिकारः ७०

मिथ्याऽहारविहाराभ्यां दुष्टैर्दोषैः प्रदूषिताम्
आर्त्तवाद्बीजतश्चापि दैवाद्वा स्युर्भगे गदाः १
उदावर्त्ता तथा वन्ध्या विप्लुता च परिप्लुता
वातला योनिजो रोगो वातदोषेण पञ्चधा २
पञ्चधा पित्तदोषेण तत्रादौ लोहितक्षरा
प्रस्रंसिनी वामनी च पुत्रघ्नी पित्तला तथा ३
अत्यानन्दा कर्णिनी च चरणानन्दपूर्विका
अतिपूर्वाऽपि सा ज्ञेया श्लेष्मला च कफादिमाः ४
षण्ढ्यण्डिनी च महती सूचीवक्त्रा त्रिदोषिणी
पञ्चैता योनयः प्रोक्ताः सर्वदोषप्रकोपतः ५
सफेनिलमुदावर्त्ता रजः कृच्छ्रेण मुञ्चति
बन्ध्या निरार्त्तवा ज्ञेया विप्लुता नित्यवेदना ६
परिप्लुतायां भवति ग्राम्यधर्मरुजा भृशम्
वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ७
सदाहं क्षरते रक्तं यस्याः सा लोहितक्षरा
प्रस्रंसिनी स्रंसते च क्षोभिता दुष्प्रजायिनी ८
सवातमुद्गिरद्बीजं वामनी रजसा युतम्
स्थितं हि पातयेद्गर्भं पुत्रघ्नी रक्तसंस्रवात् ९
अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् १०
अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण विन्दति
कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ११
मैथुने चरणा पूर्वं पुरुषादतिरिच्यते
बहुशश्चातिचरणा तयोर्बीजं न तिष्ठति १२
श्लेष्मला पिच्छिला योनिः कण्डूयुक्ताऽतिशीतला
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् १३

अनार्त्तवाऽस्तनी षराढी खरस्पर्शा च मैथुने
महामेढ्रगृहीतायाबालायास्त्वरिडनी भवेत् १४
विवृताऽतिमहायोनिः सूचीवक्त्राऽतिसंवृता १५
सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा
चतसृष्वपि चाद्यासु सर्वलिङ्गनिदर्शनम् ६६
पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः १७
दिवास्वप्नादतिक्रोधाद् व्यायामादतिमैथुनात्
क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यथा १८
पूयशोणितसङ्काशं लकुचाकृतिसन्निभम्
जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः १९
रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत्
दाहरागज्वरयुतं विद्यात्पित्तात्मकं तु तम् २०
तिलपुष्पप्रतीकाशं कराडूमन्तं कफात्मकम्
सर्वलिङ्गसमायुक्तं सन्निपातात्मकं वदेत् २१
आर्त्तवादर्शने नारी मत्स्यान्सेवेत नित्यशः
काञ्जिकं च तिलान्माषानुदश्विच्च तथा दधि २२
इक्ष्वाकुबीजदन्तीचपलागुडमदनकिरावयवशूकैः
सस्नुक्क्षीरैर्वर्त्तिर्योनिगता कुसुमसञ्जननी २३
पीतं ज्योतिष्मतीपत्रं स्वर्जिकोग्रासनं त्र्यहम्
शीतेन पयसा पिष्टं कुसुमं जनयेद् ध्रुवम् २४
बला सिता सातिबला मधूकं वटस्य शुङ्गं गजकेशरं च
एतन्मधुक्षीरघृतैर्निपीतं वन्ध्या सुपुत्रं नियतं प्रसूते २५
अश्वगन्धाकषायेण सिद्धं दुग्धं घृतान्वितम्
ऋतुस्नाताऽङ्गना प्रातः पीत्वा गर्भं दधाति हि २६
पुष्योद्धृतं लक्ष्मणाया मूलं दुग्धेन कन्यया
पिष्टं पीत्वा ऋतुस्नाता गर्भं धत्ते न संशयः २७
कुरराटमूलं धातक्याः कुसुमानि वटाङ्कुराः
नीलोत्पलं पयोयुक्तमेतद् गर्भप्रदं ध्रुवम् २८
याऽबला पिबति पार्श्वपिप्पलं जीरकेण सहितं हिताशिनी
श्वेतया विशिखपुङ्खया युतं सा सुतं जनयतीह नान्यथा २९

पत्रमेकं पलाशस्य पिष्ट्वा दुग्धेन गर्भिणी
पीत्वा पुत्रमवाप्नोति वीर्यवन्तं न संशयः ३०
शूकरशिम्बीमूलं मध्यं वा दधिफलस्य सपयस्कम्
पीत्वाऽथो भवलिङ्गीबीजं कन्यां न सूते स्त्री ३१
पुत्रकमञ्जरिमूलं विष्णुक्रान्तेशलिङ्गिनी सहिता
एतद्गर्भेऽष्टदिनं पीत्वा कन्यां न सर्वथा सूते ३२
पिप्पलिविडङ्गटङ्कणसमचूर्णं या पिबेत्पयसा
ऋतुसमये न हि तस्या गर्भः सञ्जायते क्वापि ३३
आरनालपरिपेषितं त्र्यहं या जपाकुसुममत्ति पुष्पिणी
सत्पुराणगुडमुष्टिसेविनी सन्दधाति न हि गर्भमङ्गना ३४
तासु योनिषु चाद्यासु स्नेहादिक्रम इष्यते
वस्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम् ३५
नतवार्त्ताकिनी कुष्ठसैन्धवामरदारुभिः
तिलतैलं पचेन्नारी पिचुमस्य विधारयेत्
विप्लुतायां सदा योनौ व्यथा तेन प्रशाम्यति ३६
वातलां कर्कशां स्तब्धामल्पस्पर्शां तथैव च
कुम्भीस्वेदैरुपचरेदन्तर्वेश्मनि संवृते
धारयेद्वा पिचुं योनौ तिलतैलस्य सा सदा ३७
पित्तलानां च योनीनां सेकाभ्यङ्गपिचुक्रियाः
शीताः पित्तहराः कार्याःस्नेहनार्थं घृतानि च ३८
प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत्
पिधाय वेशवारेण ततो बन्धं समाचरेत् ३९
शुण्ठीमरिचकृष्णा भिर्धान्यकाजाजिदाडिमैः
पिप्पलीमूलसंयुक्तैर्वेशवारः स्मृतो बुधैः ४०
धात्रीरसं सितायुक्तं योनिदाहे पिबेत्सदा
सूर्यकान्ता भवं मूलं पिबेद्वा तण्डुलाम्बुना ४१
योन्यां तु पूयस्राविण्यां शोधनद्रव्यनिर्मितैः
सगोमूत्रैः सलवणैः पिण्डैः सम्पूरणं हितम् ४२
दुर्गन्धां पिच्छिलां वाऽपि चूर्णैः पञ्चकषायजैः
पूरयेद्धारयेद्राजवृक्षादिक्वथिताम्बुना ४३

पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः
वर्त्तिस्तुल्या प्रदेशिन्या योनौ श्लेष्मविशोधिनी ४४
कर्णिन्यां वर्त्तयो देयाः शोधनद्रव्यनिर्मिताः ४५
गुडूची त्रिफलादन्तीक्वथितोदकधारया
योनिं प्रक्षालयेत्तेन तत्र कराडूः प्रशाम्यति ४६
मुद्गयूषं सखदिरं पथ्यां जातीफलं तथा
निम्बं पूगञ्च सञ्चूरार्य वस्त्रपूतं क्षिपेद्भगे ४७
योनिर्भवति सङ्कीर्णा न स्रवेच्च जलं ततः
कपिकच्छूभवं मूलं क्वाथयेद्विधिना भिषक्
योनिः सङ्कीर्णतां याति क्वाथेनानेन धावने ४८
जीरकद्वितयं कृष्णं सुषवी सुरभिर्वचा
वासकः सैन्धवश्चापि यवक्षारो यवानिका ४९
एषां चूर्णं घृते किञ्चिद्भृष्ट्वा खराडेन मोदकम्
कृत्वा खादेद्यथावह्नि योनिरोगाद्विमुच्यते ५०
मूषकक्वाथसंसिद्धतिलतैलकृतः पिचुः
नाशयेद् योनिरोगांस्तान्धृतो योनौ न संशयः ५१
त्रिफलां द्वौ सहचरौ गुडूचीं सपुनर्नवाम्
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम् ५२
कल्कीकृत्य घृतप्रस्थं पचेत्क्षीरे चतुर्गुणे
तत्सिद्धं पाययेन्नारी योनिरोगप्रशान्तये ५३
मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला
मेदे पयस्याकाकोल्यौ मूलं चैवाश्वगन्धजम् ५४
अजमोदा हरिद्रे द्वे प्रियङ्गुः कटुरोहिणी
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम् ५५
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत्
शतावरीरसं क्षीरं घृताद्देयं चतुर्गुणम् ५६
सर्पि रेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते
पुत्राञ्जनयते वीरान्मेधाऽढ्यान्प्रियदर्शनान् ५७
या चैवास्थिरगर्भा स्यात्पुत्रं वा जनयेन्मृतम्
अल्पायुषं वा जनयेद्या च कन्यां प्रसूयते ५८

योनिरोगे रजोदोषे परिस्रावे च शस्यते
प्रजावर्धनमायुष्यं सर्वग्रहनिवारणम् ५९
नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्त्तितम्
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः ६०
जीवद्वत्सैकवर्णाया घृतं तत्र प्रयुज्यते
आरण्यगोमयेनैव वह्निज्वाला च दीयते ६१
गैरिकाम्रास्थिजन्तुघ्नरजन्यञ्जनकट्फलाः
पूरयेद्योनिमेतेषां चूर्णैः क्षौद्रसमन्वितैः ६२
त्रिफलायाः कषायेण सक्षौद्रेण च सेचयेत्
प्रमदा योनिकन्देन व्याधिना परिमुच्यते ६३
तत्र चलितगर्भस्थापने ह्रीवेरादिक्वाथः
ह्रीवेरातिविषामुस्तमोचशक्रैश्शृतं जलम्
दद्याद् गर्भे प्रचलिते प्रदरे कुक्षिरुज्यपि ६४
मधुकं चन्दनो शीरसारिवापद्मपत्रकैः
शर्करामधुसंयुक्तैः कषायो गर्भिणीज्वरे ६५
चन्दनं सारिवालोध्रमृद्वीकाशर्कराऽन्वितम्
क्वाथं कृत्वा प्रदद्याच्च गर्भिणीज्वरशान्तये
पीतं विश्वमजाक्षीरैर्नाशयेद्विषमज्वरम् ६६
आम्रजम्बूत्वचः क्वाथैर्लेहयेल्लाजशक्तुकम्
अनेनालीढमात्रेण गर्भिणी ग्रहणीं जयेत् ६७
ह्रीबेरारलुरक्तचन्दनबलाधान्याकवत्सादनी
मुस्तोशीरयवासपर्पटविषाक्वाथं पिबेद् गर्भिणी
नानाव्याधिरुजाऽतिसारगदके रक्तस्रुतौ वा ज्वरे
योगोऽय मुनिभिः पुरा निगदितः सूत्यामयेऽप्युत्तमः ६८
ग्राम्यधर्माध्व गमनयानायासप्रपीडनैः
ज्वरोपवासोत्पतन प्रहाराजीर्णधावनैः ६९
वमनाच्च विरेकाच्च कुन्थनाद् गर्भपातनात्
तीक्ष्णक्षारोष्णकटुकतिक्तरूक्षनिषेवणात् ७०
वेगाभिघाताद्विषमादासनाच्छयनाद्भयात्
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ७१

आ चतुर्थात्ततो मासात्प्रस्रवेद् गर्भविद्रवः
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ७२
गर्भोऽभिघात विषमासनपीडनाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन ७३
गुर्विण्या गर्भतो रक्तं स्रवेद्यदि मुहुर्मुहुः
तन्निरोधाय सा दुग्धमुत्पलादिशृतं पिबेत् ७४
उत्पलं नीलमारक्तं कह्लारं कुमुदं तथा
श्वेताम्भोजञ्च मधुकमुत्पलादिरयं गणः ७५
संशीलितो  हरत्येव दाहं तृष्णां हृदामयम्
रक्तपित्तञ्च मूर्च्छां च तथा छर्दिमरोचकम् ७६
प्रस्रंसमाने गर्भे स्याद्दाहः शूलञ्च पार्श्वयोः
पृष्ठरुक्प्रदरानाहौ मूत्रसङ्गश्च जायते ७७
स्थानात्स्थानान्तरं तस्मिन्प्रयात्यपि च जायते
आमपक्वाशयादौ तु क्षोभः पूर्वेऽप्युपद्रवाः ७८
स्निग्धशीतक्रियास्तेषु दाहादिषु समाचरेत्
कुशकाशोरुबूकाणां मूलैर्गोक्षुरकस्य च ७९
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलहृत्परम्
श्वदंष्ट्रामधुकक्षुद्राऽम्लानैः सिद्धं पयः पिबेत्
शर्करामधुसंयुक्तं गर्भिणीवेदनापहम् ८०
मृत्कोष्ठागारिकागेहसम्भवा नवमल्लिका
समङ्गा धातकीपुष्पं गैरिकं च रसाञ्जनम् ८१
तथा सर्जरसश्चैतान्यथालाभं विचूर्णयेत्
तच्चूर्णं मधुना लिह्याद् गर्भपातप्रशान्तये ८२
कशेरूत्पलशृङ्गाटकल्कं वा पयसा पिबेत्
पक्वं वचारसोनाभ्यां हिङ्गुसौवर्चलान्वितम्
आनाहे तु पिबेद् दुग्धं गुर्विणी सुखिनी भवेत् ८३
तृणपञ्चकमूलानां कल्केन विपचेत्पयः
तत्पयो गर्भिणी पीत्वा मूत्रसङ्गाद्विमुच्यते  ८४
शालीक्षुकुशकाशैः स्याच्छरेण तृणपञ्चकम्
एषां मूलं तृषादाहपित्तासृङ्मूत्रसङ्गहृत् ८५

मधुकं शाकबीजं च पयस्या सुरदारु च
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी ८६
वृक्षादनी पयस्या च प्रियङ्गूत्पलसारिवाः
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ८७
बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम्
पृश्निपर्णी वचा शिग्रुः श्वदंष्ट्रा मधुपर्णिका ८८
शृङ्गाटकं विषं द्राक्षा कशेरु मधुकं सिता
वत्सैते सप्त योगाः स्युरर्द्धश्लोकसमापनाः ८९
यथासंख्यं प्रयोक्तव्या गर्भस्रावे पयोयुता
एवं गर्भो न पतति गर्भशूलञ्च शाम्यति ९०
कपित्थबृहतीबिल्वपटोलेक्षुनिदिग्धिकाः
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे ९१
नवमे मधुकानन्तापयस्यासारिवा पिबेत् ९२
क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम्
सक्षीरं वा हिता शुण्ठी मधुकं सुरदारु च ९३
क्षीरिकामुत्पलं दुग्धं समङ्गामूलकं शिवाम्
पिबेदेकादशे मासि गर्भिणीशूलशान्तये ९४
सिता विदारी काकोली क्षीरी चैव मृणालिका
गर्भिणी द्वादशे मासि पिबेच्छूलघ्नमौषधम् ९५
एवमाप्यायते गर्भस्तीव्रा रूक् चोपशाम्यति ९६
गर्भो वातेन संशुष्को नोदरं पूरयेद्यदि
सा बृंहणीयैः संसिद्धं दुग्धं मांसरसं पिबेत् ९७
शुष्कार्त्तवमजाताङ्गं संशुष्कं मरुताऽदितम्
त्यक्तं जीवेन तत्तस्मात्कठिनं चावतिष्ठते ९८
शुक्रार्त्तवार्दको वायुरुदराध्मानकृद् भवेत्
कदाचिच्चेत्तदाऽध्मानं स्वयमेव प्रशाम्यति ९९
नैगमेयेन गर्भोऽय हृतो लोकध्वनिस्तदा
स एवाल्पप्रवृत्त्या चेल्लघुर्भूत्वाऽवतिष्ठते १००
नवमे दशमे मासि नारी गर्भं प्रसूयते
एकादशे द्वादशे वा ततोऽन्यत्र विकारतः १०२

वातेन गर्भसङ्कोचात्प्रसूतिसमयेऽपि या
गर्भं न जनयेन्नारी तस्याः शृणु चिकित्सितम् १०३
कुट्टयेन्मुशलेनैषा कृत्वा धान्यमुलूखले
विषमं चासनं यानं सेवेत प्रसवार्थिनी १०४
प्रसवस्य विलम्बे तु धूपयेदभितो भगम्
कृष्णसर्पस्य निर्मोकैस्तथा पिराडीतकेन वा १०५
तन्तुना लाङ्गलीमूलं बध्नीयाद्धस्तपादयोः
सुवर्चलां विशल्यां वा धारयेदाशु सूयते १०६
करङ्कीभूतगोमूर्द्धा सूतिकाभवनोपरि
स्थापितस्तत्न्नणान्नार्याः सुखं प्रसवकारकः १०७
पोतकामूलकल्केन तिलतैलयुतेन च
योनेरभ्यन्तरं लिप्त्वा सुखं नारी प्रसूयते १०८
कृष्णा वचा चापि जलेन पिष्टा सैररडतैला खलु नाभिलेपात्
सुखं प्रसूतिं कुरुतेऽङ्गनानां निपीडितानां बहुभिः प्रमादैः १०९
मातुलुङ्गस्य मूलं तु मधुकेन युतं तथा
घृतेन सहितं पीत्वा सुखं नारी प्रसूयते ११०
इन्नोरुत्तरमूलं निजतनुमानेन तन्तुना बद्ध्वा
कटिविषये गर्भवती सुखेन सूतेऽविलम्बेन १११
तालस्य चोत्तरं मूलं स्वप्रमाणेन तन्तुना
बद्ध्वा  कटयान्तु नियतं सुखं नारी प्रसूयते ११२
मूढः करोति पवनः खलु मूढगर्भशूलञ्च योनिजठरादिषु मूत्रसङ्गम्
भुग्नोऽनिलेन विगुणेन ततः स गर्भः संख्यामतीत्य बहुधा समुपैति योनिम्
११३
संकीलकः प्रतिखुरः परिघोऽथ बीजस्तेषूर्ध्वबाहुचरणैः शिरसा च योनौ
सङ्गी च यो भवति कीलकवत्स कीलो
दृश्यैः खुरैः प्रतिखुरः स हि कायसङ्गी ११४
द्वारं निरुद्ध्य शिरसा जठरेण कश्चित्  कश्चिच्छरीरपरिवर्त्तितकुब्जकायः
एकेन कश्चिदपरस्तु भुजद्वयेन तिर्यग्गतो भवति कश्चिदवाङ्मुखोऽन्य
पार्श्वापवृत्तगतिरेति तथैव कश्चिदित्यष्टधा भवति गर्भगतिः प्रसूतौ ११५
अपविद्धशिरा या तु शीताङ्गी निरपत्रपा

नीलोद्गतशिरा हन्ति सा गर्भं स च तां तथा ११६
गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता
भवेदुच्छ्वासपूतित्वं शूलं चान्तर्मृते शिशो ११७
मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः ११८
योनिसंवरणं सङ्गः कुक्षौ मक्कल्ल एव च
हन्युः स्त्रियं मूढगर्भो यथोक्ताश्चाप्युपद्रवाः ११९
याभिः सङ्कटकालेऽपि बह्व्यो नार्यः प्रसाविताः
सम्यग्लब्धं यशस्तास्तु नार्यः कुर्युरिमां क्रियाम् १२०
गर्भे जीवति मूढे तु गर्भं यत्नेन निर्हरेत्
हस्तेन सर्पिषाऽक्तेन योनेरन्तर्गतेन सा १२१
मृते तु गर्भे गर्भिण्या योनौ शस्त्रं प्रवेशयेत्
शस्त्रशास्त्रार्थविदुषी लघुहस्ता भयोज्झिता १२२
सचेतनं तु शस्त्रेण न कथञ्चन दारयेत्
स दीर्यमाणो जननीमात्मानं चापि मारयेत् १२३
नोपेक्षेत मृतं गर्भं मुहूर्त्तमपि पण्डितः
तदाशु जननीं हन्ति प्रभूतान्नं यथा पशुम् १२४
यद्यदङ्गं हि गर्भस्य योनौ सक्तं तु तद्भिषक्
सम्यग्विनिर्हरेच्छित्वा रक्षेन्नारीं प्रयत्नतः १२५
एवं निर्हृतशल्यां तां सिञ्चेदुष्णेन वारिणा
ततोऽभ्यक्तशरीरायां योनौ स्नेहं विधारयेत् १२६
एवं मृद्वी भवेद्योनिस्तच्छूलं चोपशाम्यति १२७
तुम्बीपत्रं तथा लोध्रं समभागं सुपेषयेत्
तेन लेपो भगे कार्यः शीघ्रंस्याद्योनिरक्षता १२८
पलाशोदुम्बरफलं तिलतैलसमन्वितम्
योनौ विलिप्तं मधुना गाढीकरणमुत्तमम् १२९
प्रसूता वनिता वृद्धकुक्षिह्रासाय सम्पिबेत्
प्रातर्मथितसंमिश्रां त्रिसप्ताहात्कणाजटाम् १३०
प्रसूताया न पतिता जठरादपरा यदि
तदा सा कुरुते शूलमाध्मानं वह्निमन्दताम् १३१

केशवेष्टितयाऽङ्गुल्या तस्याः कण्ठं प्रघर्षयेत्
निर्मोककटुकाऽलाबू कृतबन्धनसर्षपः
चूर्णितैः कटुतैलाक्तैर्धूपयेदभितो भगम् १३२
लाङ्गलीमूलकल्केन पाणिपादतलानि हि १३३
प्रलिम्पेत्सूतिका योषिदपरापातनाय वै
हस्तं छिन्ननखं स्निग्धं सूतायोनौ शनैः क्षिपेत् १३४
अपरां तेन हस्तेन जनयित्री विनिर्हरेत्
एवं निर्हृतशल्यां तां सिञ्चेदुष्णेन वारिणा
ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत् १३५
वनितायाः प्रसूताया वातो रूक्षेण वर्द्धितः
तीक्ष्णोष्णशोषितं रक्तं रुद्ध्वा ग्रन्थिं करोति हि १३६
नाभ्यधः पार्श्वयोर्वस्तौ वस्तिमूर्द्धनि चापि वा
ततश्च नाभौ वस्तौ च भवेच्छूलं तथोदरे १३७
भवेत्पक्वाशयाध्मानं मूत्रसङ्गश्च जायते
एतद्भिषग्भिरुदितं मक्कल्लामयलक्षणम् १३८
सुचूर्णितं यवक्षारं पिबेत्कोष्णेन वारिणा
सर्पिषा वा पिबेन्नारी मक्कल्लस्य निवृत्तये १३९
पिप्पली पिप्पलीमूलं मरिचं गजपिप्पली
नागरं चित्रकं चव्यं रेणुकैलाऽजमोदिकाः १४०
सर्षपो हिङ्गु भार्गी च पाठेन्द्रयवजीरकाः
महानिम्बश्च मूर्वा च विषा तिक्ता विडङ्गकम् १४१
पिप्पल्यादिर्गणो ह्येष कफमारुतनाशनः
क्वाथमेषां पिबेन्नारी लवणेन समन्वितम् १४२
गुल्मशूलज्वरहरं दीपनञ्चामपाचनम्
मक्कल्लशूलगुल्मघ्नं कफानिलहरं परम् १४३
त्रिकटुकचातुर्जातककुस्तुम्बुरुचूर्णसंयुक्तम्
खादेद् गुडं पुराणं नित्यं मक्कल्लदलनाय १४४
प्रसूता युक्तमाहारं विहारं च समाचरेत्
व्यायामं मैथुनं क्रोधं शीतसेवाञ्च वर्जयेत् १४५
मिथ्याचारात्सूतिकाया यो व्याधिरुपजायते

स कृच्छ्रसाध्योऽसाध्यो वा भवेत्तत्पथ्यमाचरेत् १४६
मिथ्योपचारात्संक्लेशाद्विषमाजीर्णभोजनात्
सूतिकायास्तु ये रोगा जायन्ते दारुणाश्च ते १४७
अङ्गमर्दो ज्वरः कासः पिपासा गुरुगात्रता
शोथः शूलातिसारौ च सूतिकारोगलक्षणम् १४८
ज्वरातीसारशोथाश्च शूलानाहबलक्षयाः
तन्द्राऽरुचिप्रसेकाद्या वातश्लेष्मसमुद्भवाः १५९
कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः
ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः १५०
सूतिकारोगशान्त्यर्थं कुर्याद्वातहरीं क्रियाम्
दशमूलकृतं क्वाथं कोष्णं दद्याद् घृतान्वितम् १५१
अमृतानागरसहचरभद्रोत्कटपञ्चमूलकं जलदम्
शृतशीतं मधुयुक्तं शमयत्यचिरेण सूतिकाऽतङ्कम् १५२
देवदारु वचा कुष्ठं पिप्पली विश्वभेषजम्
भूनिम्बः कट्फलं मुस्तं तिक्ता धान्यहरीतकी १५३
गजकृष्णा सदुःस्पर्शा गोक्षुरुर्धन्वयासकः
बृहत्यतिविषा छिन्ना कर्कटः कृष्णजीरकः १५४
समभागान्वितैरेतैः सिन्धुरामठसंयुतम्
क्वाथमष्टावशेषं तु प्रसूतां पाययेत् स्त्रियम् १५५
शूलकासज्वरश्वासमूर्च्छाकम्पशिरोऽर्त्तिभिः
युक्तं प्रलापतृड्दाहतन्द्राऽतीसारवान्तिभिः १५६
निहन्ति सूतिकारोगं वातपित्तकफोद्भवम्
कषायो देवदार्वादिः सूतायाः परमौषधम् १५७
जीरकं स्थूलजीरश्च शतपुष्पाद्वयं तथा
यवानी चाजमोदा च धान्यकं मेथिकाऽपि च १५८
शुण्ठी कृष्णा कणामूलं चित्रकं हपुषाऽपि च
बदरी गजचूर्णञ्च कुष्ठं कम्पिल्लकं तथा १५९
एतानि पलमात्राणि गुडं पलशतं मतम्
क्षीरप्रस्थद्वयं दद्यात्सर्पिषः कुडवं तथा १६०
पञ्चजीरकपाकोऽय प्रसूतानां प्रशान्तये

युज्यते सूतिकारोगे योनिरोगे ज्वरे क्षये १६१
कासे श्वासे पाराडुरोगे कार्श्ये वातामयेषु च १६२
आज्यं स्यात्पलयुग्ममत्र पयसः प्रस्थद्वयं खराडतः
पञ्चाशत्पलमत्र चूर्णितमथो प्रक्षिप्यते नागरम्
प्रस्थार्धं गुडवद्विपाच्य विधिना मुष्टित्रयं धान्यका
न्मिश्याः पञ्चपलं पलं कृमिरिपोः साजाजिजीरादपि १६३
व्योषाम्भोददलोरगेन्द्रसुमनस्त्वग्द्राविडीनां पलं
पक्वं नागरखराडसंज्ञकमिदं तत्सूतिकारोगहृत्
तृटछर्दिज्वरदाहशोषशमनं सश्वासकासापहं
प्लीहव्याधिविनाशनं कृमिहरं मन्दाग्निसन्दीपनम् १६४
सर्वशः परिशुद्धा स्यात्स्निग्धपथ्याल्पभोजना
स्वेदाभ्यङ्गपरा नित्यं भवेन्मासमतन्द्रिता १६५
सक्षीरौ वाऽप्यदुग्धौ वा दोषः प्राप्य स्तनौ स्त्रियाः
रक्तं मांसञ्च संदूष्य स्तनरोगाय कल्पते
धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः
दोषाविसरणास्तासां न भवन्ति स्तनामयाः १६९
तासामेव प्रसूतानां गर्भिणीनाञ्च ताः पुनः
स्वभावादेव विवृता जायन्ते संस्रवन्त्यतः १७०
पञ्चानामपि तेषां तु हित्वा शोणितविद्रधिम्
लक्षणानि समानानि ब्राह्यविद्रधिलक्षणैः १७१
शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद्यद्विद्रधावभिहितं बहुधा विधानम्
आमे विदाहिनि तथैव च तस्य पाके
यस्याः स्तनौ सततमेव च निग्रहात् तौ १७२
पित्तघ्नानि तु शीतानि द्रव्याणयत्र प्रयोजयेत्
जलौकोभिर्हरेद्रक्तं न स्तनावुपनाहयेत् १७३
लेपो विशालामूलेन हन्ति पीडां स्तनोत्थिताम्
निशाकनककल्काभ्यां लेपः प्रोक्तः स्तनार्त्तिहा १७४
लेपो निहन्ति मूलं वन्ध्याकर्कोटिकाभवं शीघ्रम् १७५
इति सप्ततितमो योनिरोगाधिकारः समाप्तः ७०

इति स्त्रीणां रोगाधिकाराः समाप्तः

अथैकसप्ततितमो बालरोगाधिकारः ७१

बालग्रहा अनाचारात्पीडयन्ति शिशुं यतः
तस्मात्तदुपसर्गेभ्यो रक्षेद्बालं प्रयत्नतः १
स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च
शकुनी रेवती चैव पूतना चान्धपूतना २
पूतना शीतपूर्वा च तथैव मुखमण्डिका
नवमो नैगमेयश्च प्रोक्ता बालग्रहा अमी ३
नव स्कन्दादयः प्रोक्ता बालानां ये ग्रहा अमी
श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहाः ४
एते स्कन्दस्य रक्षाऽथ कृत्तिकोमाऽग्निशूलिभिः
सृष्टाः शरवणस्थस्य रक्षितस्य स्वतेजसा ५
स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा
बिभर्ति चापरां संज्ञां कुमार इति स ग्रहः ६
स्कन्दापस्मारसंज्ञो यः सोऽग्निना तत्समद्युतिः
स च स्कन्दसखो नाम्ना विशाख इति चोच्यते ७
ग्रहाः स्त्रीविग्रहा एते नानारूपाः प्रकीर्त्तिताः
गङ्गोमाकृत्तिकानां ते भागा राजसतामसाः ८
नैगमेयस्तु पार्वत्या सृष्टो मेषाननो ग्रहः
कुमारधारी देवस्य गुहस्यात्मसमोऽस्ति वै ९
ततो भगवता स्कन्दे सुरसेनापतौ कृते
उपतस्थुर्ग्रहा एते दीप्तशक्तिधरं गुहम् १०
ऊचुः प्राञ्जलयश्चैनं वृत्तिर्नो दीयतामिति
तेषामर्थे ततः स्कन्दः शिवं देवमचोदयत् ११
ततो ग्रहांस्तानुवाच भगवान्भगनेत्रहृत्
तैर्यग्योनिं मानुषं च दैवञ्च त्रितयं जगत् १२
परस्परोपकारेण वर्त्तते धार्यते तथा
देवा नरान्प्रीणयन्ति तैर्यग्योनींस्तथैव च १३
यथाकालं प्रवृत्तैस्तु ऊष्मवर्षहिमानिलैः
इज्याऽञ्जलिनमस्कारैर्जपहोमैस्तथैव च १४

सम्यक्प्रयुक्तैश्च नराः प्रीणयन्त्यपि देवताः
भागधेयविभक्तञ्च शेषं किञ्चिन्न विद्यते १५
तद्युष्माकं शुभा वृत्तिर्बालेष्वेव भविष्यति १६
कुलेषु येषु नेज्यन्ते देवाः पितर एव च
ब्राह्मणः साधवो वाऽपि गुरवोऽतिथयस्तथा १७
निवृत्तशौचाचारेषु तथा कुत्सितवृत्तिषु
निवृत्तभिक्षाबलिषु भग्नकांस्यगृहेषु वा १८
ते वै बालांश्च तांस्तान् हि ग्रहा हिंसन्त्यशङ्किताः
तत्र वो विपुला वृत्तिः पूजा चैव भविष्यति १९
एवं ग्रहाः समुत्पन्ना बालान् हिंसन्ति चाप्यतः
ग्रहोपसृष्टा बालाः स्युर्दुश्चिकित्स्यतमास्ततः २०
क्षणादुद्विजते बालः क्षणात् त्रस्यति रोदिति
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव च २१
ऊर्ध्वं निरीक्षते दन्तान्खादेत्कूजति जृम्भते
भ्रुवौ क्षिपति दष्टौष्ठः फेनं वमति चासकृत् २२
क्षामोऽति निशि जागर्त्ति शूनाङ्गो भिन्नविट्स्वरः
मत्स्यशोणितगन्धश्च न चाश्नाति यथा पुरा २३
दुर्बलो मलिनाङ्गश्च नष्टसंज्ञः प्रजायते
सामान्यग्रहजुष्टस्य लक्षणं समुदाहृतम् २४
स्त्रस्ताङ्गः क्षतजसगन्धिकस्तनद्विड् वक्रास्यो हतचलितैकपक्ष्मनेत्रः
उद्विग्नः ससलिलचक्षुरल्परोदी स्कन्दार्त्तो भवति च गाढमुष्टिवर्चाः २५
निःसंज्ञो भवति पुनर्लभेत संज्ञां संस्तब्धः करचरणैश्च नृत्यतीव
विरामूत्रे सृजति चिरेण जृम्भमाणः फेनं वा सृजति च तत्सखाभिजुष्टः २६
स्त्रस्ताङ्गो भयचकितो विहङ्गगन्धिः सास्त्रवव्रणपरिपीडितः समन्तात्
स्फोटैश्च प्रचिततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या २७
रक्तास्यो हरितमलोऽतिपाराडुदेहः श्यावो वा मुखकरपाकवेदनाऽत्त
गृह्णाति व्यथिततनुश्च कर्णनासं रेवत्या भृशमभिपीडितः कुमारः २८
विट्स्त्रावी स्वपिति न वासरे न रात्रौ विड्भिन्नं विसृजति काकतुल्यगन्धः
छर्द्यार्त्तो हृषिततनूरुहः कुमारस्तृष्णालुर्भवति च पूतनागृहीतः २९
योद्वेष्टि स्तनमतिसारकासहिक्काछर्दीभिर्ज्वरसहिताभिरर्द्यमानः

दुर्वर्णः सततमथापि योऽस्त्रगन्धिस्तं ब्रूयाद्भिषगथ चान्धपूतनाऽऽत्तम् ३०
आक्रन्दत्यभिचकितं सुवेपमानः संलीनो भवति व्यथाऽन्त्रकूजयुक्तः
स्रस्ताङ्गो भृशमतिशीर्यते च शीतात् तं ब्रूयाद्भिषगथ शीतपूतनाऽऽत्तम् ३१
म्लानाङ्गः सरुधिरपाणिपादवक्त्रो बह्वाशी कलुषशिरावृतोदरो यः
सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरथ वक्त्रमण्डिकाऽऽत्त ३२
यः फेनं वमति विनम्यते च मध्ये सोद्वेगो विहसति चोर्ध्वमीक्षमाणः
कूजेच्च प्रततमथो वसासगन्धिर्निःसंज्ञो भवति स नैगमेयजुष्टः ३३
सहामुण्डितिकोदीच्यक्वाथस्नानं ग्रहापहम् ३४
सप्तच्छदामय निशाचन्दनैश्चानुलेपनम्
सर्पत्वग्लशुनं मूर्वा सर्षपारिष्टपल्लवाः ३५
विडालविडजालोम मेषशृङ्गी वचा मधु
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः
बालशान्तीष्टकर्माणि कार्याणि ग्रहशान्तये ३६
वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापिच
सारिवा सैन्धवं चैव पिप्पली घृतमष्टमम्
सिद्धं घृतमिदं मेध्यं पिबेत्प्रातर्दिने दिने
दृढस्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान्भवेत् ३७
न पिशाचा न रक्षांसि न भूता न च मातरः
न भवन्ति कुमाराणां पिबतामष्टमङ्गलम् ३८
विशिष्टग्रहजुष्टबालकचिकित्सा
स्कन्दग्रहोपसृष्टस्य कुमारस्य प्रशान्तये
वातघ्नद्रुमपत्राणां क्वाथेन परिषेचनम् ३९
देवदारुणि रास्नायां मधुरेषु गणेषु च
सिद्धं सर्पिश्च सक्षीरं पातुमस्मै प्रदापयेत् ४०
सर्षपाः सर्पनिर्मोको वचा काकादनी घृतम्
उष्ट्राजाविगवां चापि रोमाण्युद्धूपनं भवेत् ४१
सोमवल्लीमिन्द्रवृक्षं वन्दाकं बिल्वजं शमीम्
मृगादन्याश्च मूलानि ग्रथितानि विधारयेत् ४२
रक्तानि माल्यानि तथा पताका रक्ताश्च गन्धान् विविधांश्च भक्ष्यान्
घण्टां च देवाय बलि निवेद्य सकुक्कुटं स्कन्दगृहे हिताय ४३

स्नानं त्रिरात्रं निशि चत्वरेषु कुर्यात्परं शालियवैर्नवैस्तु ग्रं
गायत्रिपूताभिरथाद्भिरग्निं प्रज्वालयेदाहुतिभिश्च धीमान् ४४
रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम्
अहन्यहनि कर्त्तव्या या भिषग्भिरतन्द्रितैः ४५
तपसां तेजसां चैव यशसां वपुषां तथा
निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ४६
ग्रहः सेनापतिर्देवो देवसेनापतिर्विभुः
देवसेनारिपुहरः पातु त्वां भगवान्गुहः ४७
देवदेवस्य महतः पावकस्य च यः सुतः
गङ्गोमाकृत्तिकानां  च स ते शर्म प्रयच्छतु ४८
रक्तमाल्याम्बरधरो रक्तचन्दनभूषितः
रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः ४९
बिल्वः शिरीषो गोलोमी सुरसाऽदिश्च यो गणः
परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ५०
सुरसा श्वेतसुरसा पाठा फञ्जी फणिज्जकः
सौगन्धिकं भूस्तृणको राजिका श्वेतबर्बरी ५१
कट्फलं खरपुष्पा च कासमर्दश्च शल्लकी
विडङ्गमथ निर्गुराडी कर्णिकार उदुम्बरः ५२
बला च काकमाची च तथा च विषमुष्टिका
कफकृमिहरः ख्यातः सुरसाऽदिरयं गणः ५३
अष्टमूत्रविपक्वं च तैलमभ्यञ्जने हितम् ५४
गोऽजाविमहिषाश्वानां खरोष्ट्रकरिणां तथा
मूत्राष्टकमिदं ख्यातं सर्वशास्त्रेषु सम्मतम् ५५
क्षीरवृक्षकषायेण काकोल्यादिगणेन च
विपक्तव्यं घृतं पश्चाद्दातव्यं पयसा सह ५६
काकोली क्षीरकाकोली जीवकर्षभकौ तथा
ऋद्धिर्वृद्धिस्तथा मेदा महामेदा गुडूचिका ५७
मुद्गपर्णी माषपर्णी पद्मकं वंशलोचना
शृङ्गी प्रपौराडरीकञ्च जीवन्ती मधुयष्टिका ५८
द्राक्षा चेति गणो नाम्ना काकोल्यादिरुदीरितः

स्तन्यकृद् बृंहणो वृष्यः पित्तरक्तमलापहः ५९
उत्सादनं वचा हिङ्गुयुक्तमत्र प्रकीर्त्तितम्
गृध्रोलूकपुरीषाणि केशा हस्तिनखो घृतम् ६०
वृषभस्य च रोमाणि योज्यान्युद्धूपने सदा
अनन्तां कुक्कुटीं बिम्बीं मर्कटीञ्चापि धारयेत् ६१
पक्वापक्वानि मांसानि प्रसन्ना रुधिरं पयः
मुद्गौदनं निवेद्याथ स्कन्दापस्मारिणे वटे ६२
चतुष्पथे कारयेच्च स्नानं तेन ततः पठेत् ६३
स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा
विशाखः स शिशोरस्य शिवायास्तु शुभाननः ६४
शकुनिग्रहजुष्टस्य कार्यं वैद्येन जानता
वेतसाम्रकपित्थानां क्वाथेन परिषेचनम् ६५
ह्रीवेरमधुकोशीरसारिवोत्पलपद्मकैः
लोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम् ६६
स्कन्दग्रहोक्ता धूपाश्च हिता अत्र भवन्ति हि
स्कन्दापस्मारशमनं घृतमत्रापि पूजितम् ६७
शतावरीमृगैर्वारुनागदन्तीनिदिग्धिकाम्
लक्ष्मणां सहदेवीं च बृहतीं चापि धारयेत् ६८
तिलतण्डुलकं माल्यं हरितालं मनः शिला
बलिरेष करञ्जेतु निवेद्यो नियतात्मना ६९
निकुञ्जे च प्रयोक्तव्यं स्नानमस्य यथाविधि
श्वेताशिरीषगन्धाश्मधवगुग्गुलुसर्षपैः ७०
सिद्धमभ्यञ्जने तैलं धारणं पूर्वमेव तु
शुकुनिग्रहशान्त्यर्थं प्रदेहं कारयेद्धितम् ७१
कुर्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः
निकुम्भोक्तेन विधिना स्नापयेत्तं ततः पठेत् ७२
अन्तरिक्षचरा देवी सर्वालङ्कारभूषिता
अधोमुखी सूक्ष्मतुण्डा शकुनी ते प्रसीदतु ७३
दुर्दर्शना महामाया पिङ्गाङ्गी भैरवस्वरा
लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु ७४

अश्वगन्धाऽजशृङ्गी च सारिवाऽथ पुनर्नवा
सहा विदारी ह्येतासां क्वाथेन परिषेचनम् ७५
तैलमभ्यञ्जने कार्यं कुष्ठे सर्जरसे तथा
पलङ्कषायां नलदे तथा गौरकदम्बके ७६
धवाश्वकर्णककुभशल्लकीतिन्दुकेषु च
काकोल्यादौ गणे चापि सिद्धं सर्पिः पिबेच्छिशुः ७७
कुलत्थं शङ्खचूर्णञ्च प्रदेहः साश्वगन्धिकः
गृध्रोलूकपुरीषाणि यवान् यवफलो घृतम्
सन्ध्ययोरुभयोः कार्यमेतदुद्धूपनं शिशोः ७८
शुक्लाः सुमनसो लाजाः पयः शाल्योदनं दधि
बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना ७९
स्नानं धात्रीकुमाराभ्यां सङ्गमे कारयेद्भिषक्
नानाशस्त्रधरा देवी चित्रमाल्यानुलेपना ८०
चृलत्कुगडलिनी श्यामा रेवती ते प्रसीदतु
उपासते यां सततं देव्यो विविधभूषणाः ८१
लम्बा कराला विनता तथैव बहुपुत्रिका
रेवती शुष्कनासा च तुभ्यं देवी प्रसीदतु ८२
कपोतवङ्का श्योनाको वरुणः पारिभद्रकः
आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ८३
नवा पयस्या गोलोमी हरितालं मनः शिला
कुष्ठं सर्जरसश्चैव तैलार्थे कल्क इष्यते ८४
हितं घृतं तुगाक्षीर्या संसिद्धं मधुकेन च
कुष्ठंतालीसखदिराः स्पन्दनोऽजुन एव च ८५
पनसः ककुभश्चापि मज्ञानो बदरस्य च
कुंक्कुटास्थि घृतं चापि धूपनं सह सर्षपैः ८६
काकादनीं चित्रफलां बिम्बीं गुञ्जाञ्च धारयेत् ८७
मत्स्यौदनं बलि दद्यात्कृशरां पललं तथा
शरावसम्पुटे कृत्वा तस्य शून्ये गृहे भिषक् ८८
उत्सृष्टान्नाभिषिक्तस्य शिशोः स्नपनमिष्यते
कुष्ठतालीसखदिरं चन्दनं स्पन्दनं तथा ८९

देवदारु वचा हिङ्गु कुष्ठं गिरिकदम्बकम्
एला हरेणवश्चापि योज्या उद्धूपने सदा ९०
मलिनाम्बरसंवीता मलिना रूक्षमूर्द्धजा
शून्यागारस्थिता देवी दारकं पातु पूतना ९१
तिक्तद्रुमाणां पत्रेषु क्वाथः कार्योऽभिषेचने ९२
निम्बः पटोलः क्षुद्रा च गुडूची वासकस्तथा
विसर्पकुष्ठनुत्ख्यातो गणोऽय पञ्चतिक्तकः ९३
पिप्पली पिप्पलीमूलं चित्रको मधुको मधु
शालिपर्णी बृहत्यौ च घृतार्थं च समाहरेत्
सर्वगन्धः प्रदेहश्च गात्रे चाक्ष्णोश्च शीतलैः ९४
पुरीषं कौक्कुटं केशाश्चर्म सर्पभवं तथा
जीर्णं चाभीक्ष्णशो वासो धूपनायोपकल्पयेत् ९५
कुक्कुटीं मर्कटीं बिम्बीमनन्तां चापि धारयेत्
मांसं सामं तथा पक्वं शोणितं च चतुष्पथे ९६
निवेद्यमन्तश्च गृहे शिशो रक्षानिमित्ततः
शिशोश्च स्नपनं कुर्यात्सर्वगन्धोदकैः शुभः
कराला पिङ्गला मुण्डा कषायाम्बरसंवृता
देवी बालमिमं प्रीता रक्ष त्वं गन्धपूतने ९७
गोमूत्रं चाश्वमूत्रञ्च मुस्तां चामरदारु च
कुष्ठञ्च सर्वगन्धांश्च तैलार्थमवधारयेत् ९८
रोहिणीनिम्बखदिरपलाशककुभत्वचः
निक्वाथ्य तस्मिन्निक्वाथे सक्षीरे विपचेद् घृतम् ९९
गृध्रोलूकपुरीषाणि बस्तगन्धामहित्वचम्
निम्बपत्राणि च तथा धूपनार्थं समाहरेत् १००
धारयेदपि गुञ्जां च बलां काकादनीं तथा
नद्यां मुद्गौदनैश्चापि तर्पयेच्छीतपूतनाम् १०१
जलाशयान्ते बालस्य स्नपनं चोपदिश्यते १०२
देव्यै देयश्चोपहारो वारुणी रुधिरं तथा
मुद्गौदनाशिनी देवी सुराशोणितपायिनी
जलाशयरता नित्यं पातु त्वां शीतपूतना १०३

कपित्थं बिल्वतर्कारीवासा गन्धर्वहस्तकः
कुबेराक्षी च योज्याः स्युर्बालानां परिषेचने १०४
स्वरसैर्भृङ्गवृक्षाणां तथैव हयगन्धया
तैलं वसां च संयोज्य पचेदभ्यञ्जनं शिशोः १०५
बचा सर्जरसं कुष्ठं सर्पिश्चोद्धूपने हितम्
वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा १०६
मनः शिलां चोपहरेद् गोष्ठमध्ये बलि ततः १०७
पायसं सपुरोडाशं तद्बल्यर्थमुपाहरेत्
मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् १०८
अलङ्कृता कामवती सुभगा कामरूपिणी
गोष्ठमध्यालया या तु पातु त्वां मुखमरिडका १०९
बिल्वाग्निमन्थपूतीकैः कार्यं स्यात्परिषेचितम् ११०
प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः
पचेत्तैलं सगोमूत्रं दधिमस्त्वम्लकाञ्जिकैः १११
वचां वयस्यां जटिलां गोलोमीञ्चापि धारयेत् ११२
उत्सादनं हितञ्चात्र स्कन्दापस्मारनाशनम्
मर्कटोलूकगृध्राणां पुरीषाणि प्रधूपनम्
धूमः सुप्तजने कार्यो बालस्य हितमिच्छता
तिलतराडुलकं माल्यं भक्ष्यांश्च विविधानपि
कौमारभृत्ये मेषाय प्लक्षमूले निवेदयेत् ११३
अधस्तात्क्षीरवृक्षस्य स्नपनञ्चोपदिश्यते ११४
अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः
बालपालयिता देवो नैगमेयोऽभिरक्षतु ११५
धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ११६
मिथ्याऽहारविहारिरया दुष्टा वातादयस्त्रयः
दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः ११७
वातदुष्टं शिशुः स्तन्यं पिबन्वातगदातुरः
क्षामस्वरः कृशाङ्गः स्याद् बद्धविरामूत्रमारुतः ११८
स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान्

तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् ११९
श्लेष्मदुष्टं पिबन्क्षीरं लालालुः श्लेष्मरोगवान्
निद्राऽदितो जडः शूनो रक्ताक्षश्छर्दनः शिशुः १२०
द्वन्द्वजे द्वन्द्वजं रूपं सर्वजे सर्वलक्षणम् १२१
ज्वराद्या व्याधयः सर्वे महतां ये पुरेरिताः
बालानामपि ते तद्वत् बोद्धव्या भिषगुत्तमैः १२२
बालानामेव ये रोगा भवन्ति महतां न च
तालुकण्टकमुख्यांस्तानवधारय यत्नतः १२३
तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम्
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते १२४
तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम्
तृडक्षिकण्ठास्यरुजा ग्रीवादुर्बलता वमिः १२५
वीसर्पस्तु शिशोः प्राणनाशनः शीर्षवस्तिजः
पद्मवर्णो महापद्मरोगो दोषत्रयोद्भवः
शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं व्रजेत् १२६
कुकूणकं क्षीरदोषाच्छिशूनामेव वर्त्मनि
जायते सरुजं नेत्रं कण्डूरं प्रस्रवेद् बहु १२७
शिशुः कुर्याल्ललाटाक्षिकूटनासाप्रघर्षणम्
शक्तो नार्कप्रभां द्रष्टुं न चाक्ष्युन्मीलनक्षमः १२८
वातेनाध्मापिता नाभिः सरुजा तुण्डिरुच्यते
बालस्य गुदपाकाख्यो ब्याधिः पित्तेन जायते १२९
शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्
स्विन्ने वास्नाप्यमानस्य कण्डू रक्तकफोद्भवा १३०
कण्डूयनात्ततः क्षिप्रं स्फोटाः स्त्रावश्च जायते
एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् १३१
स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा
कफवातोत्थिता ज्ञेया बालानामजगल्लिका १३२
मातुः कुमारो गर्भिण्याःस्तन्यं प्रायः पिबन्नपि
कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः १३३
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम्

रोगं परिभवाख्यं च तत्र युञ्जीत दीपनम् १३४
दन्तोद्भेदः शिशोः सर्वरोगाणां कारणं स्मृतम्
विशेषाज्वरविड्भेदकासच्छर्दिशिरोरुजाम् १३५
अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते १३६
भैषज्यं पूर्वमुद्दिष्टं महतां यज्ज्वरादिषु
तदेव कार्यं बालानां किन्तु दाहादिकं विना १३७
त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च ते
अतस्तदेव भैषज्यं मात्रा तत्र कनीयसी १३८
बालस्य कनीयसी मात्रामाह विश्वामित्रः
विडङ्गफलमात्रं तु जातमात्रस्य भेषजम्
अनेनैव प्रमाणेन मासि मासि प्रवर्द्धयेत् १३९
प्रथमे मासि बालाय देया भैषज्यरक्तिका
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः १४०
एकैकां वर्द्धयेत्तावद्यावत्संवत्सरो भवेत्
तदूर्ध्वं माषवृद्धिः स्याद्यावत्षोडश वत्सराः १४१
ततः स्थिरा भवेत्तावद्यावद्वर्षाणि सप्ततिः
ततो बालकवन्मात्रा ह्रासनीया शनैः शनैः १४२
चूर्णकल्कावलेहानामियं मात्रा प्रकीर्त्तिता
कषायस्य पुनः सैव विज्ञातव्या चतुर्गुणा १४३
क्षीरपस्य शिशोर्देयमौषधं क्षीरसर्पिषा
धात्र्यास्तु केवलं देयं न क्षीरेणापि सर्पिषा १४४
येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः
तेषु तत्कल्पसंलिप्तौ  पाययेत्तं शिशुं स्तनौ १४५
अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते
मुहुर्मुहुः स्पृशति तं स्पृश्यमानेन रोदिति १४६
निमीलिताक्षो मूर्द्धस्थे रोगे नो धारयेच्छिरः
वस्तिस्थे मूत्रसङ्गार्त्तः क्षुधा तृडपि गच्छति १४७
विरामूत्रसङ्गवैकल्याच्छर्द्याध्मानान्त्रकूजनैः
कोष्ठे व्याधीन्विजानीयात्सर्वत्रस्थांश्च रोदनैः १४८
सर्वं निवार्यते बाले स्तन्यं नैव निवार्यते

मात्रया लङ्घयेद्धात्रीं शिशोरेतद्धि लङ्घनम् १४९
भद्रमुस्ताऽभयानिम्बपटोलमधुकैः कृतः
क्वाथः कोष्णः शिशोरेष निःशेषज्वरनाशनः १५०
वनकृष्णाऽरुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम्
शिशोर्ज्वरातिसारघ्नं कासं श्वासं वमिं हरेत् १५१
बिल्वं च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पलद्यं च
क्वाथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु
समङ्गाधातकीलोध्रसारिवाभिः शृतं जलम्
दुर्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् १५३
विडङ्गान्यजमोदा च पिप्पलीतण्डुलानि च
एषामालोड्य चूर्णानि सुखं तप्तेन वारिणा
आमे प्रवृत्तेऽतीसारे कुमारं पाययेद्भिषक् १५४
मोचारसः समङ्गा च धातकी पद्मकेशरम्
पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशिनी १५५
नागरातिविषामुस्तबालकेन्द्रयवैः शृतम्
कुमारं पाययेत्प्रातः सर्वातीसारनाशनम् १५६
लाजा सयष्टी मधुका शर्करा क्षौद्रमेव च
तण्डुलोदकयोगेन क्षिप्रं हन्ति प्रवाहिकाम् १५७
रजनी सरलो दारु बृहती गजपिप्पली
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा १५८
दीपनं ग्रहणी हन्ति मारुतार्त्तिं सकामलाम्
ज्वरातीसारपाण्डुघ्नं बालानां सर्वरोगनुत् १५९
मुस्तकातिविषावासाकणाशृङ्गीरसं लिहेत्
मधुना मुच्यते बालः कासैः पञ्चभिरुत्थितैः १६०
व्याघ्रीसुमनसं जातीकेशरैरवलेहिका
मधुना चिरसञ्जाताञ्छिशोः कासान्व्यपोहति १६१
धान्यं च शर्करायुक्तं तण्डुलोदकसंयुतम्
पानमेतत्प्रदातव्यं कासश्वासापहं शिशोः १६२
द्राक्षावासाऽभयाकृष्णाचूर्णं क्षौद्रेण सर्पिषा
लीढं श्वासं निहन्त्याशु कासञ्च तमकं तथा १६३

चूर्णं कटुकरोहिगया मधुनासह योजयेत्
हिक्कां प्रशमयेत्क्षिप्रं छर्दिं चापि चिरोत्थिताम् १६४
श्राम्रास्थिलाजसिन्धूत्थं सक्षौद्रं छर्दिनुद्भवेत् १६५
छर्द्यां पीतं तु मेध्यन्तु स्तन्येन मधुसर्पिषा
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत् १६६
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् १६७
घृतेन सिन्धुविश्वैलाहिङ्गुभार्गीरजो लिहन्
श्रानाहं वातिकं शूलं हन्यात्तोयेन वा शिशुः १६८
कणोषणासिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः १६९
यदा तु दुर्बलो बालः खादन्नपि च वह्निमान्
विदारीकन्दगोधूमयवचूर्णं घृतप्लुतम्
खादयेत्तदनु क्षीरं शृतं समधुशर्करम् १७०
मुस्तं कूष्मागडबीजानि भद्रदारुकलिङ्गकान्
पिष्ट्वा तोयेन संलिप्तं लेपोऽय शोथहृच्छिशोः १७१
पटोलत्रिफलाऽरिष्टहरिद्राक्वथितं पिबेत्
क्षतवीसर्पविस्फोटज्वराणां शान्तये शिशुः १७२
सारिवातिललोध्राणां कषायो मधुकस्य च
संस्राविणि मुखे शस्तो धावनार्थं शिशोः सदा १७३
श्रश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम् १७४
पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतम्
बालो रोदिति यस्तस्मै लीढं दद्यात्सुखावहम् १७५
हरीतकी वचा कुष्ठं कल्कं माक्षिकसंयुतम्
पीत्वा कुमारः स्तन्येन मुच्यते तालुकगटकात् १७६
फलत्रिकं लोध्रपुनर्नवे च सशृङ्गबेरं बृहतीद्वयं च
श्रालेपनं श्लेष्महरं सुखोष्णं कुकूणके कार्यमुदाहरन्ति १७७
मृत्पिगडेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा
स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति १७८
नाभिपाके निशालोध्रप्रियंगुमधुकैः शृतम्
तैलमभ्यञ्जने शस्तमेभिश्चाप्यवधूलनम् १७९

दग्धेन छागशकृता नाभिपाकेऽवचूर्णनम्
त्वक्चूर्णैः क्षीरिणा वाऽपि कुर्याच्चन्दनरेणुना १८०
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम्
रसाञ्जनं विशेषेण पानालेपनयोर्हितम्
शङ्खयष्टयञ्जनैश्चूर्णं शिशूनां गुदपाकनुत् १८१
शङ्खसौवीरयष्ट्याह्वैर्लेपो देयोऽहिपूतने १८२
पारिगर्भिकरोगे तु युज्यते वह्निदीपनम् १८३
दन्तपालद्यं तु मधुना चूर्णेन प्रतिसारयेत्
धातकीपुष्पपिप्पल्योर्धात्रीफलरसेन वा १८४
दन्तोत्थानभवा रोगाः पीडयन्ति न बालकम्
जाते दन्ते हि शाम्यन्ति यतस्तद्धेतुका गदाः १८५
सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा
मत्स्याक्षकं शङ्खपुष्पी मधु सर्पिः सकाञ्चनम्
अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा
सहेमचूर्णं कैटर्यं श्वेता दूर्वा घृतं मधु १८६
चत्वारोऽभिहिताः प्राशा अर्द्धश्लोकसमापनाः
कुमाराणां वपुर्मेधाबलपुष्टिकराः स्मृताः १८७
लाक्षारसे समे तैलं मस्तुन्यथ चतुर्गुणे
रास्नाचन्दनकुष्टाह्वावाजिगन्धानिशायुतैः १८८
शताह्वादारुयष्ट्याह्व मूर्वातिक्ताहरेणुभिः
संसिद्धं ज्वररक्षोघ्नं बलवर्णकरं शिशोः १८९

बालरोगाधिकारः समाप्तः

समाप्तञ्चेदं मध्यखण्डम्

Bhāva Prakāśha, by Bhav Mishra, edited by Brahmashankar Mishra, 1969 edition.
Typed by Pramod Sharma, M.A.
Proofread by Maya Nand Sastri, Ved Vyakaranacharya.
Font conversion by Claude Setzer and Ralph Bunker.
Formatted for Maharishi University of Management Vedic Literature Collection

## अथ चिकित्साप्रकरणे उत्तरखण्डम्

## अथ द्विसप्ततितमो वाजीकरणाधिकारः ७२

यद् द्रव्यं पुरुषं कुर्याद्वाजीव सुरतक्षमम्
तद्वाजीकरमाख्यातं मुनिभिर्भिषजां वरैः १
क्लीबः स्यात्सुरताशक्तस्तद्भावः क्लैब्यमुच्यते
तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते २
तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते
ध्वजः पतत्यतो नृणां क्लैब्यं समुपजायते
द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैब्यं तन्मानसं स्मृतम् ३
कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः
पित्ताच्छुक्रक्षयो दृष्टः क्लैब्यं तस्मात्प्रजायते ४
अतिव्यवायशीलो यो न च वाजीक्रियारतः
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ५
महता मेढ्ररोगेण चतुर्थी क्लीबता भवेत्
वीर्यवाहिशिराच्छेदान्मेहनानुन्नतिर्भवेत् ६
बलिनः क्षुब्धमनसो निरोधाद् ब्रह्मचर्यतः
षष्ठं क्लैब्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम् ७
जन्मप्रभृति यत्क्लैब्यं सहजं तद्धि सप्तमम् ८
असाध्यं सहजं क्लैब्यं मर्मच्छेदाच्च यद्भवेत् ९
क्लैब्यानामिह साध्यानां कार्यो हेतुविपर्ययः
मुख्यं चिकित्सितं यस्मान्निदानपरिवर्जनम् १०
नरो वाजीकरान्योगान्सम्यक्छुद्धो निरामयः
सप्तत्यन्तं प्रकुर्वीत वर्षादूर्ध्वं तु षोडशात् ११
न च वै षोडाशादर्वाक्सप्तत्याः परतो न च
आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति १२
क्षयवृद्ध्युपदंशाद्या रोगाश्चातीव दुर्जयाः
अकालमरणञ्च स्याद्भजतः स्त्रियमन्यथा १३
विलासिनामर्थवतां रुपयौवनशालिनाम्
नराणां बहुभार्याणां विधिर्वाजीकरो हितः १४
स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम्

योषित्प्रसङ्गात्क्षीणानां क्लीबानामल्परेतसाम् १५
हिता वाजीकरा योगाः प्रीणयन्ति बलप्रदाः
एतेऽपि पुष्टदेहानां सेव्याः कालाद्यपेक्षया १६
भोजनानि विचित्राणि पानानि विविधानि च
गीतं श्रोत्राभिरामाश्च वाचः स्पर्शसुखस्तथा १७
यामिनी चन्द्रतिलका कामिनी नवयौवना
गीतं श्रोत्रमनोज्ञञ्च ताम्बूलं मदिरा स्रजः १८
गन्धा मनोज्ञा रूपाणि चित्राण्युपवनानि च
मनसश्चाप्रतीघातो वाजीकुर्वन्ति मानवम् १९
माक्षीकधातुमधुपारदलोहचूर्णपथ्याशिलाजतुविडङ्गघृतानि लिह्यात्
एकाग्रविंशतिदिनानि गदार्दितोऽपि साशीतिकोऽपि रमयेत्प्रमदां युवेव २०
सत्वं गुडूच्या गगनं सलोध्रमेलासितामागधिकासमेतम्
एतत्समेतं मधुनाऽवलीढं रामाशतं सेवयतीव षण्ढः २१
गवां विरूढवत्सानां सिद्धं पयसि पायसम्
गोधूमचूर्णञ्च तथा सितामधुघृतान्वितम्
भुक्त्वा हृष्यति जीर्णोऽपि दश दारान्व्रजत्यपि २२
दध्नोऽद्धाढकमीषदम्लमधुरं खण्डस्य चन्द्रद्युतेः
प्रस्थं क्षौद्रपलं पलञ्च हविषः शुण्ठ्याश्च माषाष्टकम्
तद्वन्माषचतुष्टयं मरिचतः कर्षं लवङ्गं तथा
धृत्वा शुक्लपटे शनैः करतलेनोत्थाप्य विस्रावयेत् २३
मृद्भाण्डे मृगनाभिचन्दनरसामृष्टेऽगुरूद्धूपिते
कर्पूरेण सुगन्धितं तदखिलं संलोड्य संस्थापयेत्
स्वस्यार्थं मकरेश्वरेण रचिता ह्येषा रसाला स्वयं
भोक्तुर्मन्मथदीपनी सुखकरी कान्तेव नित्यं प्रिया २४
रतिवर्द्धनयोगाः
गोक्षुरेक्षुरबीजानि वाजिगन्धा शतावरी
मुशली वानरीबीजं यष्टी नागबला बला २५
एषां चूर्णं दुग्धसिद्धं गव्येनाज्येन भर्जितम्
सितया मोदकं कृत्वा भक्ष्यं वाजीकरं परम् २६
चूर्णादष्टगुणं क्षीरं घृतं चूर्णसमं स्मृतम्

सर्वतो द्विगुणं खराडं खादेदग्निबलं यथा २७
वाजीकराणि भूरीणि संगृह्य रचितो यतः
तस्माद्बहुषु योगेषु योगोऽय प्रवरो मतः २८
चत्वारो व्योमभागास्तदनु निगदितं भागयुग्मञ्च बङ्गं
भागैकं शम्भुबीजं त्रितयमपि मृतं तत्समा सिद्धमूली
चातुर्जातं सजातीफलमरिचकणा नागरं देवपुष्पं
जातीपत्रञ्च भागद्वितयमपि पृथक्सर्वमेकत्र चूरार्यम् २९
सर्वद्व्यंशा सिता स्याद् घृतमधुसहितं मोदकीकृत्य चैतत्
खादेदग्निं समीन्द्य प्रसभमभिनवानन्दसम्वर्द्धनाय
योगो वाजीकराख्योऽयमिह निगदितो भैरवानन्दनाम्ना
निःशेषव्याधिहन्ता दलितबहुवधूद्दामकन्दर्पदर्पः ३०
पिप्पलीलवणोपेते बस्ताराडे घृतसाधिते
कच्छपस्याथवा खादेत्तत्तु वाजीकरं भृशम् ३१
पूगं दक्षिणदेशजं दशपलोन्मानं भृशं कर्त्तये
त्तत्स्विन्नं जलयोगतो मृदुतरं सङ्कुटय चूर्णीकृतम्
तच्चूर्णं पटशोधितं वसुगुणे गोशुद्धदुग्धे पचेद्
द्रव्याज्याञ्जलिसंयुतेऽतिनिबिडे दद्यात्तुलार्द्धां सिताम् ३२
पक्वं तज्ज्वलनात्क्षितिं प्रति नयेत्तस्मिन्पुनः प्रक्षिपेद्
यद्यत्तत्तदुदाहरामि बहुला दृष्ट्वाऽदरात्संहिताः
एला नागबला बला सचपला जातीफला लिङ्गका
जातीपत्रसुपत्रपत्रकयुतं तच्च त्वचा संयुतम् ३३
विश्वावीरणवारिवारिदवरा वांशी वरी वानरी
द्राक्षा सेक्षुरगोक्षुराऽथ महती खर्जूरिका क्षीरिका
धान्याकं सकशेरुकं समधुकं शृङ्गाटकं जीरकं
पृथ्वीकाऽथ यवानिका वरटिका मांसी मिसी मेथिका ३४
कन्देष्वत्र विदारिकाऽथ मुशली गन्धर्वगन्धा तथा
कर्चूरं करिकेशरं समरिचं चारस्य बीजं नवम्
बीजं शाल्मलिसम्भवं करिकणाबीजञ्च राजीवजं
श्वेतं चन्दनमत्र रक्तमपि च श्रीसंज्ञपुष्पैः समम् ३५
सर्वञ्चेति पृथक्पृथक् पलमितं सञ्चूरार्य तत्र क्षिपेत्

सूतं बङ्गभुजङ्गलोहगगनं सम्मारितं स्वेच्छया
कस्तूरीघनसारचूर्णमपि च प्राप्तं यथा प्रक्षिपेत्
पश्चादस्य तु मोदकान्विरचयेद् बिल्वप्रमाणानथ ३६
तान्भुक्त्वाऽति सदा यथाऽनलबलं भुञ्जीत नाम्लं रसं
पूर्वस्मिन्नशिते गते परिणतिं प्राग्भोजनाद्भक्षयेत्
नित्यं स्त्रीरतिवल्लभाख्यकमिमं पूगस्य पाकं भजेत्
स स्याद्वीर्यविवृद्धिवृद्धमदनो वाजीव शक्तो रतौ ३७
दीप्ताग्निर्बलवान्वलीविरहितो हृष्टः स पुष्टः सदा
वृद्धो योऽपि युवेव सोऽपि रुचिरः पूर्णेन्दुवत्सुन्दरः ३८
एतस्मिन् रतिवल्लभे यदि पुनः सम्यक्खुराशाणिका
धत्तूरस्य च बीजमर्ककरभः पोथोऽब्धिशोषस्तथा
सन्माजूफलकं तथा खसफलत्वक्कार्षिकान् निक्षिपे
च्चूर्णार्द्धा विजया तदा स हि भवेत्कामेश्वरो मोदकः ३९
रक्तपित्ताधिकारोक्तः खण्डकूष्माण्डको महान्
रक्तपित्तादिरोगघ्नो महावाजीकरः स्मृतः ४०
पक्वाम्रस्य रसद्रोणे सितामाढकसम्मिताम्
घृतं प्रस्थमितं दद्यान्नागरस्य पलाष्टकम् ४१
मरिचं कुडवोन्मानं पिप्पली द्विपलोन्मिता
सलिलस्याढकं दत्वा सर्वमेकत्र कारयेत् ४२
विपचेन्मृण्मये पात्रे दारुदर्व्या प्रचालयेत्
चूर्णान्येषां क्षिपेत्तत्र घनीभूतेऽवतारिते ४३
धान्यकं जीरकं पथ्यां चित्रकं मुस्तकं त्वचम्
बृहज्जीरकमप्यत्र ग्रन्थिकं नागकेशरम् ४४
एलाबीजं लवङ्गञ्च पृथग्जाती पलम्पलम्
सिद्धं शीते प्रदद्याच्च मधुनः कुडवद्वयम् ४५
भक्षयेद्भोजनादर्वाक्पलमात्रमिदं नरः
अथवा नियता नात्र मात्रां खादेद्यथाऽनलम् ४६
मानवः सेवनादस्य वाजीव सुरते भवेत्
समर्थो बलवान्पुष्टो नित्यं स स्यान्निरामयः ४७
ग्रहणीं नाशयेदेष क्षयं श्वासमरोचकम्

ग्रम्लपित्तं महाश्वासं रक्तपित्तञ्च पाराडुताम् ४८
शमयति गोन्नुर चूर्णं छाग न्नीरेण साधितं समधु
भुक्तं न्नपयति षराढ्यं यज्जनितं कुप्रयोगेण ४६
द्रव्याणि चन्दनादेस्तु चन्दनं रक्तचन्दनम्
पत्तङ्गमथ कालीयागुरुकृष्णागुरूणि च ५०
देवद्रुमः ससरलः पद्मकं तूणिकोऽपि च
कर्पूरो मृगनाभिश्च लता कस्तूरिकाऽपि च ५१
सिह्लिकः कुङ्कमं नव्यं जातीफलकमेव च
जातीपत्रं लवङ्गञ्च सून्मैला महती च सा ५२
कङ्कोलफलकं त्वक्च पत्रकं नागकेशरम्
बालकञ्च तथोशीरं मांसी दारुसिताऽपि वा ५३
मुरा कर्पूरकश्चापि शैलेयं भद्रमुस्तकम्
रेणुका च प्रियङ्गुश्च श्रीवासो गुग्गुलुस्तथा ५४
लान्ना नखश्च रालश्च धातकीकुसुमं तथा
ग्रन्थिपर्णञ्च मञ्जिष्ठा तगरं सिक्थकं तथा ५५
एतानि शाणमानानि कल्कीकृत्य शनैः पचेत्
तैलं प्रस्थमितं सम्यगेतत्पात्रे शुभे न्निपेत् ५६
ग्रनेनाभ्यक्तगात्रस्तु वृद्धोऽशीतिसमोऽपि सः
युवा भवति शुक्राढयः स्त्रीणामत्यन्तवल्लभः ५७
वन्ध्याऽपि लभते गर्भं वृद्धोऽपि तरुणायते
ग्रपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ५८
चन्दनादि महातैलं रक्तपित्तं न्नयं ज्वरम्
दाहं प्रस्वेददौर्गन्ध्यं कुष्ठं कराडूं विनाशयेत् ५६
दशमूलं कणा वह्निः कपित्थञ्च विभीतकम्
कट्फलं मरिचं विश्वमूलं पिप्पलिसैन्धवम् ६०
रक्तरोहीतकं दन्ती द्रान्नाजाजिनिशाद्वयम्
धात्रीजन्तुघ्नशिखरि शृङ्गीदारुपुनर्नवाः ६१
धान्याकं देवकुसुमं राजवृन्नस्त्रिकराटकम्
वृद्धदारुकुबेरान्दयौ मूलं वीरणिकाभवम् ६२
एतेषां पलयुग्मन्तु भेषजानां पृथक्पृथक्

आढकञ्चापि पथ्यायास्तोये पञ्चाढके पचेत् ६३
स्विन्ना पथ्या भवेद्यावत्पश्चान्मधु विनिक्षिपेत्
गुरूपदेशाद्विधिवत्त्रिदिनञ्च ततः परम् ६४
पुनः क्षिपेत्पञ्चदिनं तथा च दशवासरम्
संसिद्धा चाभया पश्चाद् घृतभाण्डे निधापयेत् ६५
विमले सुदृढे क्षौद्रपरिपूर्णेप्रयत्नतः
पश्चात्पूर्वोक्तकाण्डे तु क्षिपेद् बुद्धिपरायणः ६६
एषा हरीतकी चैव धन्वन्तरि कृता शुभा
भक्षयेद्यो नरो नित्यं रोगा नश्यन्ति सर्वशः ६७
श्वासं कासं क्षयं पाण्डु हिक्का छर्दिमदभ्रमान्
मुखरोगं तथा तृष्णामरुचिं वह्निमन्दताम् ६८
यकृत्प्लीहोदरञ्चैव वातरक्तं सुदारुणम्
शिरोऽक्षिकर्णजां पीडां तथा बद्धगुदोदरम् ६९
ग्रहणीं दुर्विकाराञ्च शेषं दोषत्रयोद्भवम्
मधुपक्वेति विख्याता हन्ति रोगाननेकशः ७०
बीजानि तु कपिकच्छ्वाः कुडवमितानि च स्वेदयेच्छनकैः
प्रस्थे गोभवदुग्धे तावद् यावद् भवेद् गाढम् ७१
त्वग्रहितानि च कृत्वा सूक्ष्मं सम्पेषयेत्तानि
पिष्टिकया लघुवटिकाः कृत्वा गव्ये पचेदाज्ये ६२
द्विगुणितशर्करया ता वटिकाः सम्पक्वया लेप्याः
वटिका माक्षिकमध्ये मज्जनयोग्येऽखिलाः स्थाप्याः ७३
पञ्चटङ्कमितास्तास्तु प्रातः सायञ्च भक्षयेत्
अनेन शीघ्रद्रावी यो यश्च स्यात्पतितध्वजः ७४
सोऽपि प्राप्नोति सुरते सामर्थ्यमति वाजिवत्
नानेन सदृशं किञ्चिद् द्रव्यं वाजीकरं परम् ७५
आकारकरभः शुण्ठी लवङ्गं कुङ्कुमं कणा
जातीफलं जातिपुष्पं चन्दनं कार्षिकं पृथक् ७६
चूर्णयेदहिफेनन्तु तत्र दद्यात्पलोन्मितम्
सर्वमेकीकृतं माषमात्रं क्षौद्रेण भक्षयेत् ७७
शुक्रस्तम्भकरं पुंसामिदमानन्दकारकम्

नारीणां प्रीतिजननं सेवेत निशि कामुकः ७८
इति द्विसप्ततितमो वाजीकरणाधिकारः समाप्तः ७२

अथ त्रिसप्ततितमो रसायनाधिकारः ७३
यज्जराव्याधिविध्वंसि वयः स्तम्भकरं तथा
चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम् १
दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः
देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात् २
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः
न भाति वाससि म्लिष्टे रङ्गयोग इवार्पितः ३
शीतोदकं पयः क्षौद्रं घृतमेकैकशो हितम्
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ४
मगडूकपगर्या स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम्
रसो गुडूच्यास्तु समूलपुष्पः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ५
आयुः प्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शङ्खपुष्पी ६
माक्षिकेण तुगाक्षीरी पिप्पल्या लवणेन च
त्रिफला सितया वाऽपि युक्ता सिद्धं रसायनम् ७
सिन्धूत्थशर्कराशुगठीकणामधुगुडैः क्रमात्
वर्षाऽदिष्वभया प्राश्या रसायनगुणैषिणा ८
पुनर्नवस्यार्द्धपलं नवस्य पिष्टं पिबेद्यः पयसाऽर्द्धमासम्
मासत्रयं तत्त्रिगुणं समं वा जीर्णोऽपि भूयः स पुनर्नवः स्यात्
ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजःसमुत्थम्
क्षीराशिनस्ते बलवीर्ययुक्ताः समाः शतं जीवनमाप्नुवन्ति १०
शतावरी मुगिडतिका गुडूची सहस्तिकर्णा सहतालमूली
एंतानि कृत्वा समभागयुक्तान्याज्येन किं वा मधुनाऽवलिह्यात् ११
जरारुजामृत्युवियुक्तदेहो भवेन्नरो वीर्यबलादियुक्तः
विभाति देवप्रतिमः स नित्यं प्रभामयो भूरिविवृद्धियुक्तः १२
पीत्वाऽश्वगन्धां पयसाऽर्द्धमासं घृतेन तैलेन सुखाम्बुना वा
वीर्यस्य पुष्टिं वपुषो विधत्ते बालस्य वृक्षस्य यथाऽम्बुवृष्टिः १३

त्रयः पलं गुग्गुलुमत्र योज्यं पलत्रयं व्योषपलानि पञ्च
पलानि चाष्टौ त्रिफलारजश्च कर्षं लिहन्यात्यमरत्वमेव १४
न केवलं दीर्घमिहायुरश्नुते रसायनं यो विधिवन्निषेवते
गतिं स देवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथैव चाक्षरम् १५
इति त्रिसप्ततितमो रसायनाधिकारः समाप्तः ७३
ग्रन्थकर्तृशुभाशीः शंसनम्
यावद् व्योमनि बिम्बमम्बरमणेरिन्दोश्च विद्योतते
यावत् सप्त पयोधयःसगिरयस्तिष्ठन्ति पृष्ठे भुवः
यावच्चावनिमण्डलं फणिपतेरास्ते फणामण्डले
तावत्सद्भिषजः पठन्तु परितो भावप्रकाशं शुभम् १
ग्रन्थस्यास्याध्यापकनाञ्जनानां मध्ये नृणामादरं कुर्वतां च
श्रीसोमेशादित्यविप्रप्रसादादायुर्दीर्घं सौख्यमास्तां सदैव २
समाप्तमिदमुत्तरखण्डम्
समाप्तश्चायं ग्रन्थः

Bhāva Prakāśha, by Bhav Mishra, edited by Brahmashankar Mishra, 1969 edition.
Typed by Pramod Sharma, M.A.
Proofread by Maya Nand Sastri, Ved Vyakaranacharya.
Font conversion by Claude Setzer and Ralph Bunker.
Formatted for Maharishi University of Management Vedic Literature Collection